# राजस्थानस्य आधुनिकाः संस्कृत निबन्ध लेखकाः

सम्पादक
डॉ० प्रभाकर शास्त्री
संस्कृत विभागाध्यक्ष
राजस्थान विश्वविद्यालय, जयपुर

राजस्थान संस्कृत अकादमी
वीरेश्वर भवन, गणगौरी बाजार
जयपुर (राजस्थान)

# विषयक्रमः

# प्रकाशकीयम्

राजस्थान संस्कृत अकादमी समस्तेऽपि राजस्थान-राज्ये प्रवृत्तानां संस्कृत-साहित्यकाराणां सेवार्थं, नूतन-संस्कृत साहित्य-सर्जनस्य प्रोत्साहनाय, प्राचीन-संस्कृत-साहित्यकाराणां स्मृतिरक्षार्थं, संस्कृतविदुषां यथाशक्ति वित्तीय-सहायतायै च विविधान्यायोजनान्यनुतिष्ठति । प्राचीन-वेद-पाठ-परम्परायाः संरक्षणाय वेद-पाठशालानां संचालनं, स्वरमंगलाख्यत्रैमासिक-पत्रिकायाः प्रकाशनम् इत्यादयः कार्यकलापा अपि नियमितरूपेण प्रवर्तन्ते ।

राजस्थाने काव्यरचनाया, कथा-नाटकोपन्यासादीनां च रचना यथा विगताभ्योऽनक-शताब्दीभ्यो विविधैः सरस्वतीपुत्रैः क्रियमाणास्ति तथैव विविधविषयका निबन्धा अपि विद्वद्भिर्लिख्यमानाः सन्ति । राजस्थान साहित्य अकादमी (संगम) संस्थया यदा संस्कृत-साहित्य-संवर्धनस्यापि कार्यजातं क्रियमाणमासीत्तदा खल्वेवंविधनूतन-साहित्य-सर्जनस्य संस्कृत-जगति प्रसारणाय कतिपयेषामाधुनिक-कवीनां, कथाकाराणां नाटक-काराणां च रचना-संग्रहाः प्रकाशिताः । एकस्मिन् पुस्तकेऽनेकेषां साहित्य-काराणां साहित्यसंकलन-रूपेण राजस्थान-प्रतिनिधि-लेखनस्य परिचय कारयितुमाधुनिक-संस्कृत-कवीनां जीवन-परिचय-सहकृतास्तेषां प्रति-निधिरचनाः सकलय्य 'राजस्थान के कवि' (संस्कृत-भाग ४) इत्याख्य-पुस्तके प्रकाशिता अभूवन् । आधुनिक-संस्कृत-कथा-लेखकाना १३ प्रतिनिधि लघुकथानां संकलनमपि तया "राजस्थानस्य आधुनिकाः संस्कृत कथालेखका" इति शीर्षकेण प्राकाशि । सर्वाण्येतानि प्रकाशनानि सांप्रत राजस्थान संस्कृत अकादमीतः प्राप्तुं शक्यन्ते ।

अस्मिन्नेव प्रक्रमे राजस्थानस्याधुनिकानां निबन्धकाराणां प्रतिनिधि-निबन्ध-संकलनस्य प्रकाशनमपि तयाऽकादम्या स्वीकृतमभूत् किन्तु तदैव १९८१ वर्षे राजस्थान संस्कृत अकादम्याः स्थापना संजाता । तदनु च संकलनस्यास्य प्रकाशन-कार्यमनया प्रतिश्रुतम् । डॉ. प्रभाकर-शास्त्रिणः संपादने राजस्थानस्य १७ निबन्ध-काराणां विविध-विषयक-निबन्धाना संग्रहोऽयं सत्फलस्वरूपं संप्रति प्रकाश्यते ।

आधुनिक-साहित्य-सर्जनायाः प्रतिनिधि-रचनानां प्रकाशनेऽस्माकं सेयमभिलाषाऽन्तर्निहिताऽस्ति यदेतत् साहित्य-सर्जनं दृष्ट्वाऽस्माकं नवयुवकाः संस्कृतसेविनोऽधिकाधिकं सर्जनात्मक-साहित्यलेखने स्वलेखनीं व्यापारयिष्यन्तीति । अनेन यदि साहित्य-सेवकेषु काचित्प्रोत्साहना जागरिष्यति चेदस्माकमयं प्रयासः साफल्यभाग् भविष्यतीति तदेतत्संकलनं पाठकानां सेवायां प्रस्तूयते ।

उदयपुरस्थया साहित्य अकादमी संस्थया स्वीकृतस्यास्य संकलनस्य पाण्डुलिपिर्बहुकालात् पूर्वमेवाऽस्माभिरधिगताऽभूत् किन्तु कतिपयैः कारण-विशेषैरस्या मुद्रणे विलम्बः समजायतेति खिद्यामो वयम् । किन्तु प्रकाशनस्यास्य क्रमः संप्रत्यनवरतं प्रचलिष्यतीति ज्ञात्वा प्रमोदेरन् संस्कृत-सेविनः । अनेन प्रकाशनेन सहैव श्रीकलानाथ शास्त्रिणः उपन्यास-कथानकादीनां संकलनं "कथानक-वल्ली"-शीर्षकमपि प्रकाश्यते । सर्जनात्मक-साहित्येन सहैव वेद-विज्ञान-संबंधी ग्रन्थो हिन्द्यामुद्रणाधीनोऽस्ति । प्रकाशनैरेवंविधैर्वयं संस्कृत-भारत्या यां सेवां चिकीर्षामस्तस्यां सर्वेषामपि सुधियां कृपापूर्णः सहयोगः सादरमभ्यर्थ्यते ।

राजस्थान संस्कृत अकादमी
वारेश्वरभवनम्, गणगौरी बाजार
जयपुरम्

—ललितकिशोरः
निदेशकः

# राजस्थानस्य आधुनिकाः संस्कृत-निबन्धकाराः

## सम्पादकीयम्

संस्कृत-साहित्यस्य क्षितिजान्ते प्रांगणे गद्यस्य पद्यस्य च गंगा-यमुनी-धारा बहो कालात् प्रवाहिता दरीदृश्यते, अस्मिन् भारतभूमण्डले । सत्यमिदं प्रतीयते यत् पाश्चात्यदेशीय—साहित्यवद् अत्रापि भारते पूर्वं गद्यापेक्षया पद्यस्यैव प्रचुरतरः प्रयोग आसीत्; परं यदा गद्यस्य प्रयोगः आविरभूत्, तदा पद्यप्रयोगः शैथिल्यमभजत । यद्यपि वेदेऽपि उत वैदिकवाङ्मयेऽपि पद्यैः सह गद्यस्यापि प्रचलनं दरीदृश्यते, तथापि तात्कालिकाः लेखकाः गद्य-लेखनापेक्षया पद्य-लेखने अधिकाग्रहिला इव विभान्ति स्म । आसीत् सोऽपि एकः कालः, यस्मिन् विद्वांसः सूत्रात्मकदृष्ट्या स्वविचारान् प्रकटीकर्तुं सम्मता आसन् । अनेन समस्तेऽपि संस्कृतवाङ्मये तदा सूत्रग्रन्थानां बाहुल्यमिव सजातम् । महर्षि पाणिनिः समस्तं संस्कृत-व्याकरण सूत्रेषु निबद्धवान् । चाणक्येनापि नीतिसूत्राणि ग्रथितानि; धर्मसूत्रकारेषु गौतमापस्तम्बवसिष्ठादयः प्रसिद्धा एव । एवमेव आयुर्वेदे, ज्योतिषशास्त्रे, साहित्यालंकारशास्त्रेषु, दर्शनशास्त्रादिषु च सूत्रग्रन्थानां प्राचुर्येण निबन्धनमभूत् । परतः समेषामेषां सूत्रग्रन्थानां विषयः सामान्यजनानां कृते क्लिष्टतरः संजातः । तत एव तेषामपि व्याख्यानस्यावश्यकता आविर्भूता । परतश्च विद्वांसः, चिन्तकाः, समीक्षकाः, लेखकाश्च गद्यमाश्रित्य सूत्राणां व्याख्यानं कर्तुं संप्रवृत्ताः । कस्या अपि रचनायाः सशक्तत्वं पद्यस्यापेक्षया गद्यलेखने अधिकं सम्भवतीति विदुषां मतम् । भावात्मकस्य अस्य जगतः सूक्ष्मतया विवेचनावसरे यत्र पद्य-लेखनं सर्वैरपि विद्वद्भिः स्वीकृतं, तत्रैव संघर्षपूर्णे दैनिकव्यवहारे विषयस्याभिव्यक्तिः केवलं गद्य-माध्यमेनैव संभवितुं क्षमते इत्यपि तेषां निर्विवादो राद्धान्तः । गद्यलेखने पद्यस्यापेक्षया अधिकं सारल्यं सुस्पष्टत्वञ्च समनुभूयते, संक्षिप्तता च तत्र समाविष्टा भवति सहजरूपेण—इत्यपि निश्चप्रचम् ।

सामान्यतः गद्यविधायां लेखनं वैदिककालत एव समालोक्यते। तथापि गद्यलेखनस्यास्य सरसकाव्यत्वेन स्वतन्त्रविधारूपेण वा दर्शनं विश्रुतिर्वा संस्कृतनाटकेषु समजायत। परं तथापि अनेकेषु नाटकेषु पद्यापेक्षया गद्यस्य प्रवृत्तिः शिथिलैव दरीदृश्यते। तत्र सरसगद्यस्य तु प्रयोगो विद्यते, परं बाहुल्येन गद्यापेक्षा पद्यानामेव बहुलः सम्प्रयोगो विहितो नाटककारैः। कस्यापि नाटकस्य श्रेष्ठत्वं पद्यैरेव स्वीक्रियतेस्म। वस्तुतः नाटकेषु गद्यस्य गौणत्वं न्यूनत्वञ्च तस्य शैशवत्वमेव सूचयति। गद्ये विचारात्मकपरिपक्वतायाः विकासस्तु क्रमश एवाऽभूत् इत्यत्र नास्ति संशयलेशावकाशः।

साहित्यविधासु उत दृश्यात्मकेषु नाटकेषु बीजरूपेणोपन्यस्तं गद्य शनैः शनैः अंकुरितं पल्लवित पुष्पितं चाभूत्। ततः प्रसृतमिदं नाटकातिरिक्तम् अन्यास्वपि वाङ्मयविधासु। आयुर्वेदे, ज्योतिषशास्त्रे, नीतिशास्त्रे, साहित्यशास्त्रे—एवमन्येषु शास्त्रेषु च सर्वत्रैव गद्यविधायां लेखनं प्रारब्ध विपश्चिद्भिः। पुराणानां महाभारतादि-प्रबन्धकाव्यानाञ्च विषयो गद्यविधया प्रस्तुतीकृतो लेखकैः। शिलालेखादीनामपि भाषा गद्यलालित्येन परिपूर्णा संजाता। दर्शनशास्त्रस्य दुरूहाः विषयाः चिन्तनग्रन्थयश्च गद्यमाध्यमेनैव विवेचिता अभूवन्। सामान्यतः सर्वेषामपि सूत्रग्रन्थानां व्याख्यानं गद्यमाध्यमेन समभवत्। गद्यस्य प्रयोगप्राचुर्येण तत्र विचारवहनक्षमतायाः क्रमशः वृद्धिः संजाता। संसगतया तत्र अलंकाराणामपि प्रयोगः स्वाभाविक एव शनैः शनैः तस्य आलंकारिकं स्वरूपं व्यंग्यचित्रणक्षमत्वं सूक्तिसन्दर्भितत्वं च प्रकटीबभूव। गद्यस्यालंकारिकत्वं व्यंजनागर्भत्वं, शब्दक्लिष्टत्वं समस्तरूपत्वञ्च दर्शं दर्शं विद्वांसो न्यगदन्–"गद्यं कवीनां निकषं वदन्ती" ति सूक्तिमाध्यमेन। एवंविधं सुललितं गद्यलेखनं न सर्वेषां कृते सुकरमिति—गद्य कवीनां कृतेऽपि निकषत्वेन सजातम्।

साहित्यशास्त्रीयेषु लक्षणग्रन्थलेखकेषु आचार्य-भामह-हेमचन्द्रादयो विश्रुता एव, यैः साहित्यस्य वर्गीकरणं प्रस्तुतं स्वीयेषु लक्ष्यग्रन्थेषु। एतैरेव सर्वप्रथमं साहित्यं गद्य-पद्य-मिश्र-भेदेन त्रिधा विभक्तम्, परतश्च एषामनेके भेदोपभेदाः समजायन्त। साम्प्रतं साहित्ये काव्यं, नाटकं, कथात्मकं गद्यसाहित्यं काव्यात्मकं गद्यसाहित्यं, निबन्धसाहित्यं, साहित्यालोचनादिकं चेत्याद्याः अनेकाः विधाः वर्गीक्रियन्ते समीक्षकैः। आसु विधासु गद्यसाहित्ये

यत्र कथात्मकस्य गद्यस्य काव्यात्मकस्य वा गद्यस्य वैशिष्ट्यमुपलभ्यते तत्रैव निबन्धस्यापि महत्त्वपूर्णं स्थानं वरीवर्ति, इत्यत्र नास्ति कापि संशीतिः ।

**निबन्धाय प्रचलितशब्दाः तेषां विवेचनञ्च :**

प्राचीनकालतः अद्यावधि निबन्धरचनायाः कृते बहवः शब्दाः प्रचलिताः दृश्यन्ते । तेषु निबन्धः, अधिकरणं, प्रबन्धः, प्रस्तावः सन्दर्भः, रचना इत्येते शब्दाः समानार्थकत्वेन व्यवह्रियन्ते । प्रसगवशात् अत्र समेषामेषां (सर्वेषां) शब्दानां विवेचनमावश्यकमिति उररीकृत्य दिङ्मात्रं निगद्यते विदुषां शोधकर्त्तृणां च कृते ।

**निबन्धः –**

'निबन्ध' शब्दस्यार्थो वर्तते तद्बन्धनं, यस्मिन् विविध-मतानां संग्रहो भवेत् । निबन्धशब्दः नि उपसर्गपूर्वकात् बधि बन्धने धातोः घञ् प्रत्यये कृते निष्पन्नो भवति । तस्मात् निबध्नातीति निबन्धः कथ्यते । हेमचन्द्राचार्यानुसारं निबन्धः ग्रंथस्य वृत्तिरस्ति ।[1]

**अधिकरणम्—**

कौटिलीयार्थशास्त्रे (अधिकरणं 15) सुश्रुते (उत्तरतंत्रे अध्यायः 65), चरके (सिद्धिस्थानेऽध्याये 12) पूर्वोत्तरमीमांसयोश्च 'अधिकरण' शब्दस्य प्रतिपादनं दृश्यते । अधिकरण-शब्दोऽयं अधिउपसर्ग पूर्वकात् डुकृञ् करणे धातो· अधिकरणे ल्युट् प्रत्यये कृते निष्पद्यते । हेमचन्द्राचार्यानुसारं एक न्यायोपपादनमधिकरण कथ्यते । तेन अधिक्रियते यत्र विषयादि पंचावयव-विवेचनोपेतग्रंथः स अधिकरण-संज्ञको भवति । पूर्व-मीमांसायामधिकरणस्य लक्षणं, यथा[2] —

"विषयो विषयश्चैव पूर्वपक्षस्तथोत्तरम् ।
निर्णयश्चेति सिद्धातः शास्त्रेऽधिकरणं स्मृतम् ।। इति"

अत्र विचारार्थ-वाक्यं विषयः, विषयेः संशयाभावः । पूर्वपक्षः प्राकृतार्थ-विरोधि तर्कोपन्यासः, उत्तरं सिद्धान्तानुकूलः तर्कोपन्यासः, निर्णयो महावाक्यार्थ-तात्पर्य-निश्चयः । एवं क्रमेण विवेचनमधिक्रियते इत्यधिकरणम् ।

---

1. शब्दकल्पद्रुमः भाग 2, पृ. 884–85.
2. वही, भाग 1, पृ. 37.

पूर्वोत्तरमीमांसा-शास्त्रयोः तत्तद्विषयकप्रबन्धानामधिकरणसंज्ञा अनेनैव प्रसिद्धा। तस्यार्थो वर्तते यत् अधिक्रियते अर्थात् विचारोऽस्मिन्ननेनेति वा अधिकरणं, वेद-विचार-प्रथात्मिका मीमांसा। सैव मीमांसा कर्मकाण्ड-वेदविचाररूपा कर्ममीमांसा, पूर्वमीमांसा, ब्रह्मकाण्ड-वेद-विचार-रूपा उत्तर-मीमांसा, ब्रह्म-मीमांसा वा प्रसिद्धिं गता। यद्वा "प्रतिज्ञा हेतु-उदाहरणोपनय-निगमान्यवयवाः" (न्यायसूत्रम्। 32) इति कथनानुसार-मधिकरणं प्रतिज्ञादि-पंचावयवात्मकत्वमपि स्वीक्रियते। पुरा 'अधिकरण' शब्दोऽयं शास्त्रीय-विषयप्रतिपादनाय प्रयुक्तोऽभवत्।

**प्रबन्धः—**

निबन्ध-रचनायाः कृते प्रचलितोऽन्यः शब्दः प्रबन्धः। इत्यपि प्रसिद्धोऽस्ति–प्रबध्यते इति प्रबन्धः। उपसर्गात् बन्धधातोः घञ प्रत्यये कृते सदर्भार्थे प्रबन्ध शब्द त्रिकाण्डशेषे प्रपठ्यते। प्र बन्ध् + भावे घञ् प्रत्यये कृते निष्पन्नोऽयं प्रबन्धशब्द. काव्यादिग्रन्थनाय प्रयुज्यते[1]। न्यायशास्त्रे प्रबन्धरचनायाऽपि विषयादीनि पंचांगानि स्वीक्रियन्ते।

**प्रस्तावः**

निबन्धरचनायाः कृते 'प्रस्ताव' शब्दस्यापि प्रयोगो भवति। प्र उपसर्गात् स्तु धातोः (प्रद्रुस्तुसुव.–पाणि॰सू॰ 31/3/27) घञ् प्रत्यये कृते प्रस्ताव इति शब्दो निष्पन्नो भवति। अमरकोषानुसारं प्रस्ताव-शब्दस्यार्थोऽवसर॰, 'प्रसंग.' इति भानुदीक्षितस्य कथनं वर्तते।[2] काव्य-प्रकाशे प्रस्तावशब्द प्रकरणार्थे प्रयुक्तोऽस्ति। यथा–प्रस्ताव–देशकालादे-र्वैशिष्ट्यात् प्रतिभाजुषामित्यस्य वृत्ति-भागे 'प्रस्तावः प्रकरणम्' इति कथितं वर्तते।

एवमेव 'सदर्भः' 'रचना' इत्यादि शब्दाः निबन्ध-शब्दस्य पर्याय-वाचिनः सन्ति।

---

1. शब्दकल्पद्रुमः भाग 3, पृ. 277
2. शब्दकल्पद्रुमः पृ. 302

हिन्दी साहित्ये गद्यविधासु निबन्धविधायाः महत्त्वपूर्णं स्थानं मन्यते । आचार्य-रामचन्द्रशुक्ल-महोदयाः निबन्धविधां प्रौढ़प्रतिभायाः निदर्शनं स्वीकुर्वन्ति । तेषां कथनमस्ति—"यदि गद्यं कवीनां लेखकानां वा निकषं वर्तते, तर्हि निबंधो गद्यस्य निकषमस्ति ।" हिन्द्यां निबन्ध-शब्दस्यार्थो 'निश्चित बन्ध' इति मन्यते । तदनुसार यत्र विचाराणां भावानाञ्च गठनं सातिशयरूपेण वर्तते, स एव बन्धो निबन्धः कथ्यते । वस्तुतः हिन्दीसाहित्ये प्रचलितोऽयं निबन्धशब्दः अंग्रेजी भाषाया (ESSAY) 'एस्से' इत्यस्य शब्दस्यार्थे प्रयुक्तो भवति । एस्से (ESSAY) शब्दस्यार्थो वर्तते प्रयत्नःप्रयासो वा । मान्टेन (MONTAIGNE) नामकेन फ्रेंचलेखकेन सर्वप्रथमं 'एस्से' शब्दस्य प्रयोगः कृत. । तन्मतानुसारं विविधविचाराणा-मुद्धरणानां कथानकानां च वैयक्तिक-रूपेण प्रयत्नपर्वकं मिश्रणमेव निबन्धोऽस्ति ।

**निबन्ध-शब्दस्य विशिष्टं विवेचनम्—**

निबन्धस्य विश्लेषणं विवेचनञ्च विद्वद्भि. वहुधा कृतम् । निबन्धस्य परिभाषाऽपि वहुविधात्मिका दृश्यते । आधुनिकनिबन्ध-विधाया जनकस्य मान्टेन महोदयस्य कथनं वर्तते यत् वैयक्तिक-विचाराणां स्वानुभूतीनाञ्च कलात्मक-सूत्ररूपेण प्रयत्नपूर्वकं निबन्धनमेव निबन्धस्य लक्षणमस्ति । वस्तुतः प्रारम्भे पाश्चात्यसाहित्ये निबन्ध-विधा असम्बद्धा, चिन्तनहीना, बुद्धिविलासमात्रञ्च आसीत् ।

आंग्ल-साहित्यस्य जानसन (JOHNSON) नाम्नः सुप्रसिद्ध-समालोचकस्य कथन वर्तते, यत्-निबन्धो मनसः तद्विशृंखलविचार-वीचि वर्तते, यदपरिपक्वा अनियमिता, क्रमबद्धता रहिता च भवति । अनया परि-भाषया निबन्ध-विधा नाति श्लाघ्या मन्यते । अतोऽस्य मतस्य विरोधे जे. बी. प्रीस्टले नाम्नोः विदुषः कथनमस्ति यत् "निबन्ध-रचना सा सा-हित्यिकी-रचनाऽस्ति या रचना निबन्ध-कारेण कृता भवेत्" । एतदालक्ष्य अन्यतमस्य पाश्चात्यविदुषः कथनमस्ति यत् "लेखकस्य सामयिक-चित्तवृत्तिं सातिशय-चमत्कृतिरूपेण अभिव्यक्तीकरणमेव प्रस्तावो निबन्धो वा कथ्यते "।

हिन्दी-साहित्यस्य सुप्रसिद्ध-समालोचकेन बाबू गुलावराय इत्याख्येन निबन्धस्य लक्षणमित्थं प्रतिपादितम् । "निबन्धः सा गद्यमयी रचना कथ्यते,

यस्या सीमिताकारस्य मध्ये कस्यापि विषयस्य वर्णनमुत प्रतिपादनं वैयक्तिक-रूपेण, स्वच्छन्दत्वेन, सौष्ठवेन, सजीवत्वेन, आवश्यक-सगत्या सबद्धतया च क्रियते ।" एवं प्रारंभे साहित्यकाराणां धारणा आसीत् यत् निबन्धलेखकस्य व्यक्तित्व-प्रदर्शनं न भवेत्, परन्तु कालक्रमानुसारेण धारणेय परिवर्तिता जाता । साम्प्रत स्वाभाविकतया स्वभावानां विचाराणां प्रभाव-पूर्णशैल्या प्रकटीकरणमेव निबन्धस्य सातिशयमहत्त्वं मन्यते । केवलं वर्ण्यविषयप्रधानो व्यक्तित्वशून्यो निबन्धस्तु तात्त्विकदृष्ट्या महत्त्वयुक्तो न स्वीक्रियते । निबन्धस्य महत्त्व तदेव वर्तते यद् लेखकस्य व्यक्तित्व-व्यक्तीकरणे समर्थो भवेत् । व्यक्तित्वपूर्णलेखन्या प्रसूतो निबन्धः सहृदय-हृदयाह्लादकश्च चमत्कारजनकश्च भवति । समयेऽस्मिन् संस्कृत-हिन्दी साहित्ये निबन्धस्येदमेव स्वरूपं विद्वद्भिः साहित्यकारैश्च स्वीकृतं वर्तते ।

**निबन्धस्य प्रकारा :—**

यद्यपि निबन्धेषु प्रतिपाद्य-विषयाणाम् आनन्त्यं निबन्धकर्तृबुद्धि-वैचित्र्य-विभेदत्व च दृश्यते । एतेन कति प्रकारकाः निबन्धा इति पृथक्तया निर्देष्टु न शक्यते । तथापि सामान्येन निबन्धस्य चत्वारः प्रकाराः स्वीक्रियन्ते । (1) वर्णनात्मकः, (2) विवरणात्मकः, (3) विचारात्मकः, (4) भावात्मकश्चेति । निबन्ध-विधायाः निःसीमक्षेत्रवशात् यद्यपि तेषां चतुर्भेदत्वं नास्ति सर्वसम्मतम्, यतो ह्यस्य विश्लेषणात्मकः, विवादात्मकः, आलोचनात्मकः, आख्यानात्मकश्च अन्येऽपि भेदोपभेदाः कर्तुं शक्यन्ते, परं तात्त्विक—दृष्ट्या भेदानामेषामुक्तभेदेष्वेव समावेशः क्रियते । उक्तभेदेषु वर्णनात्मक-निबन्धस्य सम्बन्धोऽधिकत्वेन कालेन सह, विचारात्मक-निबन्धस्य तर्केण साकं, विवरणात्मक-निबन्धस्य कालेन सार्ध, भावात्मक-निबन्धस्य हृदयेन सह भवति । यद्यपि काव्यस्यैतानि कल्पना-राग-बुद्धि-शैलीत्यादीनि तत्त्वानि सर्वेषु निबन्ध-भेदेषु अनिवार्यरूपेण वर्तन्ते, तथापि विवरणात्मक-निबन्धेषु बुद्धितत्त्वस्य भावात्मक-निबन्धेषु च रागतत्त्वस्य प्राधान्यं दृश्यते । शैली तत्त्वं तु चतुर्भेदेषु समानरूपेण विद्यते । अत्रोक्तानां निबन्ध-भेदानां पृथक्-पृथक् विवेचनं विधीयते ।

**निबन्ध-प्रकाराणां विवेचनम् —**

**(1) वर्णनात्मक-निबन्ध :—**

वर्णनात्मकेषु निबन्धेषु कमपि चेतनमचेतनं वा प्राकृतिकं भौतिकं वा

पदार्थमधिकृत्य तत्स्वरूप-निरूपणं अधिक्रियते । यथा—भौगोलिक—स्थितेः तीर्थदर्शनीयस्थानानां, वन-पर्वत—काल-सायंकालादीनां, पर्वोत्सव-सम्मेलनानां च वर्णनमस्मिन् क्रियते । अस्य सम्बन्धः प्रायशो देश-विशेषेण सह भवति । एवंविधेषु निबन्धेषु निबन्धकारो वर्ण्यविषये वैयक्तिक-अनुभवानां स्वविचाराणां च समावेशः कुरुते । व्यासशैल्यामस्मिन् सरस-सुबोध-शब्दानां प्रयोगो भवति । वर्ण्य-विषयस्य विस्तृत-विवेचनं, तुलनात्मकवर्णनं वा एवंविधेषु सजीवता समावेशाय चित्ताकर्षणाय च क्रियते । एव वर्णनात्मक-निबन्धः प्राधान्येन स्थानगतो दृश्यते ।

(2) विवरणात्मक—निबन्ध :—

कामप्यैतिहासिकीं, सामयिकीं वा घटनां, साहसपूर्णं कार्यं, युद्ध-यात्रा-मृगया-आविष्कारान्, जीवन-वृत्तान्तान् वाऽधिकृत्य तदाख्यानपराः निबन्धाः विवरणात्मकाः कथ्यन्ते । विवरणात्मक-निबन्धानां सम्बन्धः प्रायशः कालेन सह (Time & Period) भवति । एतेषु च कथात्मकतायाः प्राधान्यं दरीदृश्यते । एवंविधेषु निबन्धेषु व्यासशैल्यां सरसतायै रोचकतायै च सूक्ष्मकल्पना-शक्तेः स्वानुभूतेश्च आवश्यकता वर्तते । विवरणात्मक-निबन्धेषु क्रियाशीलतायाः प्राचुर्यं वर्ण्यविषयानां च घटनात्मकत्वं दृश्यते ।

(3) विचारात्मक-निबन्धः—

एवंविधेषु निबन्धेषु बौद्धिक-विवेचनस्य प्राधान्यं भवति । कमपि मनोवैज्ञानिकं, दार्शनिकं, आध्यात्मिकं वा गूढ़विषयमवलम्ब्य आलोचनात्मक-दृष्ट्या पक्ष-प्रतिपक्ष-निर्देशपुरःसरं तद्गुणदोषादिविवेचनपराः निबन्धाः विचारात्मकाः विवेचनात्मकाः, गवेषणात्मकाः, आलोचनात्मकाः वा कथ्यन्ते । तर्कोपन्यासः, प्रमाणप्रस्तुतीकरणं, तस्य खण्डनं, मण्डनं, विश्लेषणं च विचारात्मक-निबन्धानां मुख्या प्रवृत्तिः दरीदृश्यते । आचार्य-रामचन्द्रशुक्लस्य कथनमस्ति यत्—"शुद्धविचारात्मक—निबन्धानामुत्कर्षः तत्रैव कथयितुं शक्यते, यत्र एकैकस्मिन्ननुच्छेदे स्वविचाराः सातिशय-रूपेण समाविष्टाः स्युः । ते च विचाराः कस्यापि सम्बद्धस्य विचारखण्डस्य कृते भवेयुः ।" एवंविधेषु निबन्धेषु भाषाशैली-तत्त्वानां गूढ़ता सामासिकता च दृश्यते, यद्यपि व्यासशैल्याः प्रयोगोऽधिकतरो विधीयते ।

(4) भावात्मक-निबन्धः—

भावात्मक-निबन्धेषु रागतत्त्वस्य भावात्मकतायाः वा प्राधान्यं भवति । बुद्धितत्त्वस्य च किंचित् न्यूनता दृश्यते ।

रागात्मकतया निबन्धेष्वेवंविधेषु कवित्वपूर्णशैल्या स्वानुभूतेः प्रकटनं दृश्यते । भावात्मक-निबन्धस्य लेखनं सर्वेषां कृते सुकरं नास्ति । यतोहि कार्यमिदं भावुकजनस्य फलावतश्च वर्तते । एषु गहनानुभूतेः तीव्रतरभावनायाश्च अपेक्षा भवति । तेन निबन्धकर्तुः व्यक्तित्वस्य छाया, मधुररससंयोजना भावव्यंजना चात्र सविशेषतया वरीवर्ति । यद्यपि भावात्मकनिबन्धेष्वपि बुद्धितत्त्वस्य सम्मेलनं दृश्यते, विचारात्मकनिबंधेष्विव रागतत्वस्यापि संयोजनं विद्यते, तथापि बुद्धिरागतत्त्वापेक्षयाऽत्र हार्दभावानां हृदयगतानुभावाना वा प्राधिक्य वर्तते । एवंविधेषु निबन्धेषु साम्प्रतं धाराशैल्याः, तरंगशैल्याः, विक्षेपशैल्याश्चापि प्रयोगः क्रियते । समालोचकधुरीणस्य बाबू गुलाबराय इत्याख्यस्य कथनमस्ति यत् धाराशैल्यां भावानां धारा प्रवाहमयी भवन्ती समानदशाया प्रवहति, किन्तु तरंगशैल्यां भावाः तरंगायिताः प्रतीयन्ते । विक्षेपशैल्यां भावधारा किंचित् विक्षिप्ता प्रस्खलन्तीव दृश्यते । तस्यां तारतम्यस्याभावो वर्तते । "अतो भावात्मकनिबन्धेषु धाराशैल्याः प्रयोगः सविशेषः क्रियते । साम्प्रतं केचन विद्वांसः निबन्धानां सामान्येन त्रीन् प्रकारान् स्वीकुर्वन्ति, यथा—वर्णनात्मकाः विवरणात्मकाः विचारात्मकाश्च । तेषां कथनमस्ति यत् निबन्धानां पारमार्थिकविभाग-व्यवस्था न सम्भाव्यते । दृश्यते हि विभिन्न-भाषासु निबन्धकाराणां प्रसिद्धनिबन्धरचनासु भेदानां परस्परं संकर-संसृष्टित्वम् । भावात्मक-निबन्धानां चतुर्भेदत्वमेव विद्वद्भिः स्वीकार्यं स्वीकृतं च एतेष्वेव संकरसंसृष्टित्वेन भेदोपभेद-कल्पना समाधीयते ।

**सामयिकी स्थितिः—**

साम्प्रतं संस्कृत-साहित्ये पद्यरचनापेक्षया गद्यरचनायाः प्रचलनमधिकं दृश्यते । समयेऽस्मिन् बहवो विद्वांसः, स्वतंत्रलेखकाः, शोधनिरताः शिक्षकाः, छात्राश्च गद्यरचनायाः निबन्धभेदमाश्रित्य रचनाकार्ये संलग्नाः दरीदृश्यन्ते । साप्ताहिक–पाक्षिक–मासिक–त्रैमासिकपत्रिकासु संस्कृत–निबन्धानां प्राचुर्येण प्रकाशनं विधीयते । यद्यपि तेषु विवेचनात्मकाः निबन्धाः एव बहुसंख्याकाः सन्ति, तथापि वर्णनात्मक-विवरणात्मक-निबन्धाना लेखनकार्यं सातत्यरूपेण प्रचलति । संस्कृतभाषायाः प्रशिक्षणमभिलषतां च कृते बहवो निबन्धग्रन्थाः प्रकाशिताः सन्ति, तेषु वर्णनात्मक-विवरणात्मक–निबन्धानामाधिक्यं वर्तते । सम्प्रति विश्वविद्यालयेषु

संस्कृत-साहित्यस्य शोधकार्ये बहवः छात्राः संलग्नाः सन्ति, ततश्च अनेकशो विवेचनात्मकनिबन्धाः प्रकाशिताः भवन्ति ।

वर्तमानसमये संस्कृत-भाषा मातृभाषा न वर्तते, न चेयं राष्ट्रभाषा । साधारणजनाः संस्कृत-भाषायाः समाचारपत्राणि न पठन्ति, कारणेनानेन संस्कृते रचितानां निबन्धानां प्रचुरः प्रचारो न वर्तते । तथापि विभिन्न-पत्र-पत्रिकासु प्रकाशितानां निबन्धानां या संख्या वर्तते, सा महदुत्साह-वर्धिकेति वक्तुं शक्यते । संस्कृत-भाषायां भावात्मक-निबन्धानां यद्यपि विशिष्टाधारभूमिः दरीदृश्यते, परन्तु पाठकानामभावे लेखकानामपि नैराश्यं बाधकमस्ति । अतो यथा-यथा संस्कृतभाषायां निबन्धरचनाया विषयवैविध्यं वर्धिष्यते, तथा-तथा निबन्धविधायाः विस्तरोऽपि भविता, नात्र वर्तते कोऽपि संशयलेशः ।

साम्प्रतिकाः निबन्धकाराः—

राजस्थानीयेषु विश्रुत-संस्कृत-निबन्धकारेषु येषां नामानि अनायासेन परिगणयितुं शक्यन्ते, ये च सामान्यतो निबन्ध-लेखनकर्मणि संप्रवृत्ताः दरीदृश्यन्ते, तेषां नूतनैर्निबन्धैः संकलितोऽयं ग्रंथः विदुषां समीक्षकाणां च पुरस्तात् प्रस्तूयते । तेषां जन्मपरिचयादिकमपि यावच्छक्यं यथामति समुपस्थापनीयमिति मत्वा अत्र प्रदीयते । परतश्च निबन्ध-विषयेऽपि काचन विचारसरणिः प्रकटीकरिष्यते । निबन्धेष्वपि शास्त्रीय-शैलीमाश्रित्य विलिखितानां निबन्धानां प्राचीनत्वं विकासक्रमे चाद्यत्वं स्वीक्रियते समीक्षकैरिति सिद्धान्तानुसारेण सर्वप्रथमं तेषां समीक्षणं, ततः परं विकासक्रमानुसारि निबन्धानां प्रस्तुतीकरणमत्र अंगीकृतम् ।

---

# निबन्धकाराणां परिचयः

## (1) —म.म. पं. श्री गंगाधर द्विवेदिनः

जयपत्तनस्य ब्रह्मपुरीति ख्याते उपखण्डे कृतावासे द्विवेदिकुटुम्बे लब्धजन्मनां श्री गंगाधरद्विवेदिनां संयुक्त-प्रांतस्य 'फैजाबाद' मण्डलान्तर्गते अयोध्यानगर्याः पश्चिमस्थिते 'पण्डितपुरी' ग्रामे एकविंशत्युत्तरैकोनविंशतितमे ख्रिस्ताब्दे दिसम्बर-मासस्य अष्टमे दिने जनिरभवत्। भवतां पूर्वजाः पं. श्री सरयूप्रसाद द्विवेदिनः (प्रपितामहः), म.म. पं. श्री दुर्गाप्रसाद द्विवेदिनः (पितामहः), पं. श्री गिरिजाप्रसाद द्विवेदिनः (पिता), सुरभारत्याः प्रकाशपण्डिताः लेखकाश्च आसन्। एतेषां प्रारम्भिकी शिक्षा स्वपितामहानां म. म. श्री दुर्गाप्रसाद द्विवेदिनां सान्निध्ये सम्पन्ना जाता। महाराज-संस्कृत-कालेज, जयपुरे नियमितमध्ययनं कृत्वा श्रीमद्भिः व्याकरणोपाध्याय परीक्षा समुत्तीर्णा ततश्च भारतप्रसिद्धेभ्यो विद्वद्भ्यः श्री वीरेश्वरशास्त्री द्रविडेभ्यो व्याकरणशास्त्रस्य अध्ययनं विधाय 1939 तमे वर्षे 'व्याकरण तीर्थ' परीक्षा द्वितीयश्रेण्यां पारिता। तत्रभवद्भिः भवद्भिः लखनऊ विश्वविद्यालयात् 'साहित्याचार्य' परीक्षाऽपि समुत्तीर्णा।

1944 तमे वर्षे भवन्तः सामान्य-संस्कृत-विषयस्य व्याख्यातृपदे महाराज-संस्कृत-कालेजे नियुक्ताः, परमेकं वर्षं यावत् कार्यं कृत्वा साहित्य-शास्त्रानुशीलनाय वाराणसीं गतवन्तः। पुनश्च 1949 तमे वर्षे महाराज-संस्कृत-कालेजे सामान्य-संस्कृतस्य व्याख्यातृपदमलंकृतवन्तः। राज्य-सेवायां कार्यं कुर्वद्भिरेभिः अलवरस्थ-संस्कृतमहाविद्यालयस्य 'प्राचार्य' पदमपि सुशोभितम्। ततश्च श्रीमद्भिः महाराज-संस्कृत-कालेजे साहित्य-विभागाध्यक्षत्वं स्वीकृत्य तत्रैव 'प्राचार्य' पदात् सेवानिवृत्तिर्लब्धा। वर्षत्रयं विश्वविद्यालय-अनुदान-आयोग-द्वारा प्रदत्तां विशिष्टशोधवृत्तिमधिगत्य राजस्थान-विश्वविद्यालयस्य संस्कृत-विभागे प्राध्यापक-पदे कार्यरताः आसन्। सम्प्रत्यमी "चूडामणि-प्रोफेसर" रूपेण कार्यं सम्पादयन्ति।

श्री द्विवेदिमहोदयानां रचनात्मक-कार्यं विपुलं वर्तते । एतेषां बहवः सारगर्भितलेखाः निबन्धाश्च माधुरी–सरस्वती–संस्कृतरत्नाकर-संस्कृतम्-भारतीत्यादिषु पत्रिकासु प्रकाशिताः सन्ति । अध्ययनकाले भवन्तः समस्यापूर्तौ कुशलाः आसन् । भवद्भिः राजस्थान-प्राच्य-विद्या-प्रतिष्ठान-संस्थायाः निदेशने स्वपूर्वजानां महत्त्वपूर्णग्रंथानां सम्पादनमपि विहितम् । एतेषु ग्रंथेषु 'दुर्गापुष्पाञ्जली", "दशकण्ठवधं चम्पू-काव्यम्", आगम-रहस्यमित्यादयोः ग्रंथाः प्रसिद्धाः सन्ति । संस्कृत रत्नाकरे भवतां "व्याकरणाधिकरणे क्षुद्रकमालवाः" "नीतिवर्मणः कीचक-वधम्" "व्याकरण-शिक्षा-विमर्शः" इत्यादयः प्रसिद्धाः लेखाः प्रकाशिताः अभवन् । जयपुरस्य 'आकाशवाणी' केन्द्रात् एतेषां परःशतं यावत् वार्ताः प्रसारिताः सन्ति । रेडियोरूपकाण्यपि भवद्भिः रचितानि । एवं साहित्य-मार्मिकेषु, सुरभारत्याः समुन्नायकेषु भवतामुल्लेख्यं स्थानमस्ति । श्रीमद्भिः "प्राच्यशोध-संस्थान" नामकं शोधकेन्द्रमपि संस्थापितं, यस्येमे निदेशकाः सन्ति । शोध-क्षेत्रे संस्थानस्यास्य महत्वपूर्ण स्थानं विद्यते ।

**(2) म. म. पं. श्री नवल-किशोर कांकर-महाभागा :**

श्री नवलकिशोर काङ्कर–महोदयानां जन्म राजस्थानस्य राजधान्यां जयपुरे 1967 तमे वैक्रमाब्दे आषाढमासे कृष्णपक्षे त्रयोदश्यां गौड ब्राह्मण-कुलेऽभवत् । एतेषां पितृचरणाः श्री जमनालाल–महाभागाः प्रसिद्धकथा-वाचकाः ज्योतिर्विदश्च आसन् । बाल्ये एव मातृपितृवियोगात् एतेषां विद्यालयीयमध्ययनं षष्ठकक्षापर्यन्तं यावदभवत् । तत्पश्चात् स्वतन्त्ररूपेणा-ध्ययनं–विधाय साहित्य-काव्यतीर्थ, व्याकरण-शास्त्री, साहित्याचार्य-, साहित्यरत्नं, प्रभाकर, इण्टरमीडियेट–इत्यादि-परीक्षाः श्रीमद्भिः समुत्तीर्णाः स्व प्रयासेन ।

सर्वप्रथममेते राजगढस्थे (अलवरस्य समीपे) राजकीय-संस्कृत-कालेजस्य शाला-विभागे प्रधानाध्यापकपदे कार्यप्रवृत्ताः संजाताः, तदनन्तरं जयपुरस्य पारीकविद्यालये हिन्दी-भाषायाः अध्यापकपदे कार्यं कुर्वन्तिस्म, परतश्च तत्रैव पारीककालेजे संस्कृत-विभागाध्यक्षपदं समलंकृतवंतः, तस्माच्चैव पदात् सेवा–निवृत्तिं च लब्धवन्तः ।

तत्रभवद्भिः श्रीमद्भिः स्व-जीवनकाले महत्वपूर्णं राजकीयं सम्मानादिकं लब्धम्। विविधेषु सम्मेलनेषु निर्व्यूढम् सभापतित्वं, तत्र च स्वर्ण-पदकादिकं लब्ध्वा "विद्या-वाचस्पतिः"—"कविचक्रवर्ती"—"गद्य-सम्राट्" "महामहिमोपाध्यायोपाधिभिः" समलंकृताः अभवन्। भवतां "यात्राविलास"-गद्यकाव्यमादृत्य राजस्थान-सर्वकारेण, उत्तर प्रदेशस्य राज्यपालमहोदयेन च पुरस्काररूपेण श्रीमतां सम्मानं विहितम्। 1976 तमे खीष्टाब्दे "प्रबन्ध-गद्य-माधुरी" काव्ये राजस्थान-साहित्य अकादमी-संस्थया माघस्मृतिपुरस्कारेणैते सम्मानिताः।

श्रीमतां रचनात्मकं कार्यं अति-विस्तृतं वर्तते। संस्कृत-रत्नाकर-भारत्यादिषु विविधासु मासिक-पाण्मासिक-पत्रिकासु महोदयानां बहवो लेखाः प्रकाशिताः सन्ति। एतेषां स्वतंत्रविषयकाः ग्रन्था: निम्नांकिताः सन्ति—

1. द्विजदशाप्रकाशः 2. सरलशिवराजविजयः
3. कृति-परिचयः 4. संस्कृत-साहित्ये हिन्दीकवयश्च
5. यज्ञोपवीत-विज्ञानम् 6. आयुर्वेद-विमर्शः
7. हिन्दी-कवीनां संस्कृत-भाव-सञ्चितिः
8. महाकवि कुमारदासः 9. पूर्वं संस्कृत-भाषा लोक-भाषाऽऽसीत्
10. संस्कृत-साहित्ये हास्यरसः इत्यादयः।

केचन प्रसिद्धाः लेखाः काव्य-रचनाश्च विद्यन्ते प्रकाशिताः।

1. एका स्मृतिः 2. मुम्बापुरी वर्णनम्
3. मुकन्या 4. महाकविः तुलसीदासः
5. आरोग्यं भास्करादिच्छेत् 6. स्वतन्त्रभारते संस्कृत-ह्रासः

भवन्तः समस्यापूर्तावपि पाटवत्वं— प्रथयन्ति। सम्प्रत्येते सुरभारत्यां रचनाकर्मणि प्रवृत्ताः सन्ति। समीक्षा-चक्रवर्तिनां श्रीमधुसूदनोझा महोदयानां सान्निध्यम् प्राप्य तेषां वैदिक-विज्ञानमपि भवद्भिः हृदयंगमीकृतम्। एतेषां निबन्धेषु केचन एतादृशाः शोधपूर्णाः निबन्धाः सन्ति येषां पाठं मनोज्ञतायै जगते। साम्प्रतमेते महामण्डलेश्वर श्रीगंगेश्वरानन्दमहोदयानां निर्देशे वृन्दावनवासिनो भूत्वा वेदभाष्यकर्मणि सुरभारत्याः रचना-कर्मणि च संप्रवृत्ताः सन्ति।

(3) "विद्वत्तल्लजाः डॉ. श्री ब्रह्मानन्द शर्माणः" :

श्री ब्रह्मानन्द-शर्मणां जन्म त्रयोविंशत्युत्तरैकोनविंशतितमे खिस्ताब्दे फरवरी मासस्यैकादशे दिनाङ्के राजस्थान-प्रान्तान्तर्गते श्रीगंगानगरे संजातम् ।

एभिर्मैट्रिक परीक्षा 1940 तमे खिस्ताब्दे श्रीगंगानगरमण्डले प्रथमं स्थानं सम्प्राप्य गणिते विशेषयोग्यतापुरस्सरं समुत्तीर्णा । इण्टरपरीक्षा चाखिलराजपूतानामण्डले सर्वप्रथमं स्थानं प्राप्य गणिते संस्कृते च विशेष-योग्यता-पुरस्सरं समुत्तीर्णा, सुवर्णपदकं च सम्प्राप्तम् । बी. ए परीक्षा-यामेते बीकानेर-राज्ये प्रथमं स्थानमधिगम्य रजतपदकं प्राप्तवन्तः । अथ भारत-विश्रुतेभ्यो विद्वन्मूर्धन्येभ्यः कविशिरोमणिभ्यः श्री विद्याधर-शास्त्रि-महाभागेभ्योऽधीत्य एम. ए. परीक्षायां दर्शनवर्गे एकोनषष्टिपरिमितान् प्रतिशतमंकान् प्राप्तवन्तः । तेषामेव च निर्देशने शोधकार्यप्रवृत्ताः "संस्कृत साहित्य में सादृश्यमूलक अलंकारों का विकास" इति विषयमादाय 1958 तमे खिस्ताब्दे राजस्थान-विश्वविद्यालयतः पी-एच. डी. उपाधि गृही-तवन्तः । 1969 तमे खिस्ताब्दे एभिर्विरचितं "वस्त्वलंकार-दर्शनं" शीर्षकं पुस्तकं प्रकाशतां गतम् । डॉ० सुनीतिकुमार चटर्जी महाभागैरे-तत्पुस्तकं सहर्षमभिनन्दित संस्कृतसाहित्यशास्त्रे चास्य महत्वपूर्णं स्थान-माकलितम् । राज. सर्वकारेणापि डॉ. शर्मणोऽस्य कार्यस्य कृते 'योग्यता-वेतन' प्रदानेन सम्मानिताः । 1975 तमे खिस्ताब्दे एभिर्विरचितं 'अभि-नवरसमीमांसा' शीर्षकं पुस्तकं राज. साहित्य अकादम्या पुरस्कृतम् । अस्मिन्नेव वर्षे एते राज. साहित्य अकादम्या विशिष्ट–साहित्यकार–रूपेण सम्मानिताः । 1978 तमे खिस्ताब्दे एभिः "A critical study of Indian poetics" इति शीर्षकं पुस्तकं विरचितम् । 1980 तमे खिस्ताब्दे एभिः 'काव्यसत्यालोकः' शीर्षकं पुस्तकं लिखितम् । आधुनिक-समये साहित्यशास्त्रगतसिद्धान्तपक्षमवलम्ब्य विरचितानि काव्यालकार-कारिकादीनि यानि द्वित्राणि मौलिकानि ग्रन्थरत्नानि सन्ति, तेष्वयमपि ग्रंथः पदं लभते । सम्प्रति एभिः साहित्यशास्त्र-व्यतिरिक्तां सरणिमवलम्ब्य ललितकाव्योपन्यासमुखेन "तरुणशतक" शीर्षकं शतकं निर्मितं तत् सहृदयहृदयानुरंजकं युगानुरूपं चास्ति । देववाणी-निषयिणीमेतेषामेता-मुपासनां लक्ष्यीकृत्य एते–1980 तमे खिस्ताब्दे संस्कृत-शिक्षादिवसे

राजस्थानसर्वकारेण सम्मानिताः। अधुना राजकीयसेवातः निवृत्ता इमे बहूनि वर्षाणि राजकीय–महाविद्यालयेषु विभागाध्यक्ष-पदमलङ्कुर्वन्तः जयपुरीयपारीकमहाविद्यालयस्य प्राचार्यपदे, ततश्च राजस्थान-प्राच्य-विद्याप्रतिष्ठानस्य निदेशकपदे, परतश्च राजकीय कल्याणमहाविद्यालय-स्योपाचार्य पदेऽपि प्रतिष्ठिता आसन्। साम्प्रतं विश्वविद्यालयानुदान-मण्डलस्य साहाय्येन अभिनवां रसमीमांसां प्रस्तोतुमधिकृताः तस्मिन् कर्मणि संप्रवृत्ताः सन्ति। साम्प्रतकालिकेषु प्रांजलगद्यलेखकेषु श्रीमतां नामधेयं अविस्मरणीयं वर्तते। "रसालोचनम्" श्रीमतामभिनवा कृतिः।

(4) प्रभापकाः डॉ॰ श्री सुधीरकुमार गुप्त महोदयाः—

गुप्तमहोदयानां जन्म सं. 1973 वि. वर्षे हरियाणा राज्यस्य अटाली-नाम्नि ग्रामे एकस्मिन्नतिसामान्ये परिवारेऽभूत्। एतेषां पिता श्रीरामस्वरूपः गुप्तो माता च श्रीमती चन्दनदेवी धार्मिकप्रवृत्तिसम्पन्नौ कर्मठौ चास्ताम्।

प्रारंभिकीं शिक्षां जन्म-ग्रामे प्राप्य गुड़गावां छावनीतः 1933 वर्षे मैट्रिक-परीक्षा, दिल्ली-विश्वविद्यालयीय-रामजस-महाविद्यालयतः 1935 वर्षे इण्टर परीक्षा, 1937 वर्षे संस्कृते बी. ए. आनर्स परीक्षा, 1939 वर्षे संस्कृते एव एम. ए. परीक्षा च सर्वत्र प्रथमश्रेण्याम् उच्चान् अंकान् लब्ध्वोत्तीर्णाः। श्रीमद्भिः बी. ए. आनर्स—एम. ए. परीक्षयोः अंकमानमपि स्थापितम्। परीक्षा-परिणामे छात्रवृत्तयः स्वर्णादिपदकान्यप्यलभ्यन्त। 1940 वर्षे पंजाब-विश्वविद्यालयतः प्रथमश्रेण्यां तृतीयं स्थानं प्राप्य हिन्दी प्रभाकर परीक्षा, 1945 वर्षे च तत एव द्वितीय श्रेण्यां शास्त्रि–परीक्षा पारिते। 1950 वर्षे दिल्लीत एव 'एम. डी. एच.' परीक्षोत्तीर्णा। 1957 वर्षे डा. फतहसिंह महाभागानां निदेशे राजस्थान-विश्वविद्यालयतः "वेद-भाष्य पद्धति को दयानन्द सरस्वती की देन" नामानं शोधप्रबन्धं प्रस्तुत्य पी–एच. डी. नामोपाधिर्लब्धः। 1954 वर्षे केरल विश्वविद्यालयेन "सीयर्स आफ दी ऋग्वेद देयर मैसेज एंड फिलोसोफी" इति निबन्धं सर्वश्रेष्ठं मत्वा "केरल-कोयल-व्लियावर्माथम्पूरन स्वर्णपदकं प्रादायि। पी-एच. डी. प्रबन्धमुपर्युक्तं श्रेष्ठं निर्धार्य कर्नालस्थ-चौधरी नारायणसिंह-प्रतापसिंह धर्मार्थन्यासेन पंचशतं रूप्यकाणि पुरस्काररूपेण प्रदत्तानि।

1941 वर्षे नईदिल्लीनगरे वरिष्ठलिपिकपदं गृहीत्वा जीविकार्थं सेवावृत्तिरारब्धा। 1942 वर्षस्य अगस्तमासान्ते स्वतन्त्रताया आन्दोलनस्य क्रमे एव सव्याजं ए. जी. सी. आर. कार्यालये त्रिदिवसीयं पुनश्च 1944 वर्षस्य जून मासे द्विदिवसीयं हट्टतालं स्वनेतृत्वे समायोज्य तत्र कार्योपधातं विदधौ।

1944 वर्षे एवं शिक्षायाः क्षेत्रे रोहतकस्य-जाटकालिजे संस्कृत-हिन्दी विभागे व्याख्यातुरध्यक्षस्य च नियुक्तिमुपलभ्य लिपिककार्यं त्यक्तवान्। ततः 1952 वर्षे सुरजानगरे एन. आर. ई. सी. कालिजे संस्कृत-विभागे प्रवक्तृत्वेनाध्याप्य, 1957 वर्षे गोरखपुर-विश्वविद्यालयीय-संस्कृत-विभागे सहायक-प्रवाचकपदे नियुक्तः। तदनन्तरं 1961 वर्षे राजस्थान विश्व-विद्यालयीय-संस्कृत-विभागे प्रवाचकपदमलंकरोत्। तत्रैव च 1974 वर्षे 'प्रभापक' पदे समुन्नतिमलभत। 1972 वर्षतः 1974 वर्षं यावत् सस्कृत विभागस्याध्यक्षः, 1975 वर्षे च विश्व-विद्यालयस्य मुख्यकुलानुशासक आसीत्, आपातकाले प्रवर्तिते कति छात्रेभ्यो दण्डदानमधिकृत्य मतभेदा-त्कुलपतेरनुमत्या कुलानुशासकीयं कार्यं परित्यक्तवान्। 1977 वर्षे 30 अप्रेल दिवसे वयसः षष्टितमं वर्षं समाप्य राजस्थान-विश्व-विद्यालयात् सेवा-निवृत्तिं प्राप्नोत्। अस्मिन् कालेऽयं संस्कृताध्ययन-संकायस्याधिष्ठाता (डीनो) प्यासीत्। सम्प्रति 1978 वर्षस्य द्वादश जनवरीतो विश्वविद्या-लयानुदानायोगस्य सेवानिवृत्त-विशिष्टाध्यापकोपयोग-योजनायां राज-स्थान-विश्वविद्यालयीय-संस्कृत-विभागेऽध्यापन करोति, शोधकार्यं च सम्पादयति। अस्य महाभागस्य निर्देशेऽद्यावधि द्विशतोऽप्यधिकाश्छात्रा अध्यापकाश्च पी-एच. डी. नाम शोधोपाधिमलेभन्त।

1953 वर्षे भवता "भारतीमन्दिरानुसंधानशालायाः" स्थापना कृता। अस्याः शालायाः लक्ष्यं संस्कृतस्य भारत्याश्च साहित्य-संस्कृत्यो-रनुसंधानाध्ययनयोः प्रसारः, उत्तमप्रामाणिकशोधपूर्णरचनानां निर्माण-प्रकाशन-वितरणानि च विद्यते। डा. गुप्तः मन्दिरस्यास्याजीवनमादरी निदेशकः। शालायाः कृते च भारती-शोध-सार-संग्रहस्य सम्पादनप्रकाशने विदधाति। पत्रिकायाः अस्याः प्रथमखण्डस्य-भागत्रये उपद्विसहस्रं शोधलेखग्रन्थादीनां साराः प्रकाशिताः सन्ति। हिन्दी भाषा-माध्यमेन

सम्प्रत्यपि प्रयासोऽयमेकलोऽभूतपूर्वश्च । उदयपुरस्थ-राजस्थान-साहित्य-संगमस्य 'स्वर मंगला' संस्कृत-पत्रिकाया अङ्क द्वयमपि समपादयत् ।

इदानीं यावत् डा. गुप्तस्य संस्कृतांगूलहिन्दी-भाषासु 250 शोधलेख-टिप्पणी-समीक्षाश्च प्रकाशमायन् । उपत्रिंशत् पुस्तकान्यपि प्रकाश्यं प्राप्नुवन् । एषु पुस्तकेषु रावणभाष्यम्, ऋग्वेदीयपर्यस्ततत्संदेशदर्शने, मेघदूतं, भारतीयदर्शनस्य सम्प्रदायाः, वेदलावण्यम्, संस्कृत-साहित्यस्य सुबोध इतिहासो, बाणश्च दण्डी चैकमध्ययनं, वेदभाष्य पद्धतयै दयानन्द-स्वामिनो योगदानमिति प्रभृतीनि सविशेषमुल्लेख्यानि । ईशोपनिषत्केनोपनिषद्विश्रुतचरित-शुकनासोपदेश-प्रभृति कतिपयकृतीनां नूतना संस्कृतटीका अपि व्यरच्यन्त । एषां कृतित्वस्याशिकमनुमानं भारती-विद्या-वैभवाद् भवति ।

डा. गुप्तस्य लेखाः प्रामुख्येन वेदविषयका भवन्ति । तत्रत्याः केचन-विचारा नूतना अपि वर्तन्ते । यथा—ऋषय एव शूद्रपदेनाभ्यधीयन्त । शिवपूजाया मूलं नारिकेलस्य पुरुषविधवर्णने विद्यते । सुपरीक्ष्य निर्धारितं यत् त्रयम्बको नारिकेलः, तन्निर्मितं 'त्र्यम्बकं' नामौषधं बहुरोगनिवारक-मिति । वैदिकी भाषा मूलत एकाक्षर-स्वरूपा । निघण्टुस्थान्यैकपदिक-प्रकरणगतानि पदानि पदशब्दस्य पर्यायाः सन्ति । पदशब्दस्य स्वकीयान् च धातुजानर्थान् प्रकाशयन्ति । वैदिक-शाखा-संहिता मूलवेदसंहितानां व्याख्यानं किंचिद् किंचिद् विदधति । वेदमन्त्राणामृषिछंदोदेवतानामानि तत्तन्मन्त्रसूक्तानां विषयाणामभिधायकानि यौगिकपदान्यैव । वेदव्याख्यानाय भारतीयनिर्वचनपद्धतिरेवोपयोगमावहति । भारत-योरोपीय-भाषायाः कल्पना निराधाराऽवैज्ञानिकी, भ्रामिका चास्ति । दयानन्द सरस्वतिनो वेदभाष्यपद्धतिः वैज्ञानिकतमा प्राचीनतमामृषीणां शैलीमवलम्बमाना च वर्तते । काव्यकारः कालिदासो नाटककारकालिदासाद् भिन्नो भिन्नकालीनश्च । एवं गौप्तान्यनुसंधानानि भारतीयतया श्रोतानि च प्रोतानि च सन्त्यपि नूतनं वर्णन-विश्लेषण-तुलना-विशिष्टां पद्धति-मवलम्बन्ते । तत्र यथावश्यकम् ऐतिहासिकत्वमपि समाविश्यते लेखन-शैल्यां सारल्य प्रवाहः स्पष्टता च फलीभवन्ति ।

डा. सुधीरकुमार गुप्तः सामाजिक-धार्मिक-शैक्षिक-क्षेत्रेष्वपि सक्रियोऽनुभूयते । अत्रापि प्रमुखा रुचिरस्यार्यसमाजे शिक्षणसंस्थासु च

दृश्यते । अनानेन प्रधानत्वेन, मन्त्रित्वेन सदस्यत्वेन च योगोऽदीयत । गतैः कैश्चिद् वर्षैः श्रीमत्याः परोपकारिणीसभायाः कार्यकारिण्याः साधारण-सभायाश्च न्यासी, राजस्थान-संस्कृत परिषदः संस्थापकः, अखिल भारतीय-प्राच्य-विद्यासम्मेलनस्य भाण्डारकर-प्राच्य-विद्याशोध-प्रतिष्ठान, भारतीय साहित्यदेववाणी-विश्ववेद-परिषदां, राजस्थानसर्वकारसंस्कृतपरामर्श-मण्डलस्य, उदयपुरस्य-राजस्थान-साहित्यसंगमस्य संस्कृत-समितेरन्येषां च बहूनां प्राच्य-विद्यायाश्च शिक्षायाश्च संस्थानानां सदस्य आसीद् अस्ति च ।

## (5) आचार्याः श्रीकाशीनाथ चन्द्रमौलि महोदयाः

कवि-तार्किक-चक्रवर्तिनां श्री काशीनाथ चन्द्रमौलि-महाभागानां जन्म 1912 तमे ख्रिस्ताब्दे जनवरीमासस्य प्रथमे दिने वाराणस्यामभवत् । तत्रैव विद्याध्ययनं कुर्वद्भिरेभिः प्रथमा परीक्षातः समारभ्य नव्यव्याकरणाचार्यपर्यन्तं सर्वासु परीक्षासु प्रथम श्रेणी समधिगता, विरला संस्कृत कालेजतः स्वर्णपदकमपि लब्धम् । अध्ययनकाले एव कविता-लेखनक्षेत्रे एतेषां विशिष्टा प्रवृत्तिः संजाता । अखिलभारतीय-स्तरेषु प्रान्तीयेषु वा विविधेषु कविसम्मेलनादिषु भवद्भिः अनेकशः स्वर्णरजतपदकानि प्राप्तानि । वाराणसेय—संस्कृत-छात्रसम्मेलनस्य वर्षत्रयं प्रधानमन्त्रित्वमपि निर्व्यूढम् । तदनन्तरं भवन्तो बीकानेरनगरस्य—श्रीशार्दूल-संस्कृत विद्यापीठे द्वादश वर्षं यावत् आचार्यपदं समलङ्कृतवन्तः । ततश्च राजकीयसेवायां नियुक्ताऽभवन् । शास्त्रानुशीलने अध्यापने चैतेषामतीवरुचिः समवलोक्यते । वैदिककर्मकाण्डादिकर्मसु निष्णाता इमे बहूनां स्मार्तयज्ञानामाचार्यपदं स्वीकृतवन्तः । जीवने वैदिककर्मणः प्रभावे सत्यपि जैन-बौद्धादिदर्शनानां तुलनात्मकमध्ययनमध्यापनंच भवद्भिः विहितम् । साम्प्रतमेतेषां महती छात्रपरम्परा वर्तते । एभिः शोधछात्राणां शोधविधौ सर्वविध-सहाय्यमाचरितम् । सामाजिकेषु कार्यकालेषु एतेषां सक्रियता दर्शनीया वर्तते । अद्यत्वे श्रीमन्तः अनेकानां संस्थानां परिचालकाः सदस्याश्च सन्ति । प्रवर्तमानेऽस्मिन्समये तत्रभवन्तो भवन्तः राजस्थान-संस्कृतसाहित्य-सम्मेलनस्य बीकानेर-मण्डलाध्यक्षपदे सम्मानिता सन्ति ।

रचनात्मके क्षेत्रे भवतां महत् प्रदेयं वर्तते । विविधासु पत्रिकासु नैकशो लेखाः भवद्विरचिताः प्रकाशिताश्च सन्ति ।

संस्कृत-गीतांजलिः, अभिनवरूपकम्, बाललघुकथाः, श्रीमद् जवाहर-यशोविजयं महाकाव्यम्, चन्द्रस्मृतिः, निबन्ध-संग्रहः, आत्म-संस्मरणम् इत्यादयो ग्रंथा संस्कृत-भाषायां रचयित्वा इमे लोकोपकारं कृतवन्तः। श्रीमतां नामधेयं हिन्दी-भाषा कविष्वपि विश्रुतं वर्तते। एवं च श्रीमद्भिः हिन्द्यामपि केचन ग्रन्थाः प्रणीताः सन्ति। संस्कृतगद्यलेखने च श्रीमताम् अप्रतिहता गतिः विद्यते ।

## (6) विद्वाल्लजाः श्री विश्वनाथ मिश्रमहोदयाः—

श्री मिश्रमहोदयानां जन्म बिहारराज्यस्य 'सिवान' मण्डलान्तर्गते 'अगेयां' नामके ग्रामे त्रिशदुत्तरैकोनविंशतिशततमे खिस्ताब्दे जूनमासस्य पंचदशे दिनांके समभवत्। एतेषां पितुर्नाम श्रीमद् रामकेशव मिश्र आसीत्। वाराणस्यामध्ययनं कुर्वद्भिः एभिः साहित्याचार्य-व्याकरणा-चार्यस्य च परीक्षामुत्तीर्य संस्कृते एम.ए. परीक्षाऽपि समुत्तीर्णा। ततः 1957 वर्षतः 1960 वर्षपर्यन्तं यावत् वाराणस्यामेवाध्यापनकार्यं सम्पादितम्। तदनन्तरं कतिचिद् दिनानि यावत् बिहारराज्यस्य राजकीय-विद्यालये शिक्षणकार्यं विहितम्। ततोऽपि राज्यसेवां परित्यज्य एते 1963 तमे वर्षे राजस्थानस्य बीकानेर-नगरस्थे श्रीशार्दूलसंस्कृत-विद्यापीठे प्राचार्यपदम-लंकृतवन्तः, तस्मात् कालादद्यावधि तत्रैव विराजन्ते।

श्री मिश्रमहाभागानां लेखनकार्यं निरन्तरं प्रचलति। भारती-स्वर-मंगला प्रभृतिषु संस्कृतपत्रिकासु पंचाशत् संख्याकाः विशिष्टाः लेखाः, निबन्धाश्च प्रकाशिताः सन्ति। वामन-विजयम्, कलिकौतुकम् इति नाटकद्वयं भारतीपत्रिकायां प्रकाशितमस्ति। साम्प्रतमेतेषां संस्कृत-व्या-करण-प्रवेशिका नामिका लेखमाला भारत्यां क्रमशः निःसरति। एभिः रचिता परिभाषेन्दुशेखरस्य प्रौढा विस्तृता च हिन्दी व्याख्या अचिरादेव प्रकाश्यमाना वर्तते। दिल्लीनगरस्थया एन. सी. ई. आर. टी. संस्थया संस्कृत-पुस्तक-लेखनकर्मणि नैकवारमिमे समाहूताः। भवन्तः संस्कृत-भाषायाः समुपासकाः नव्यव्याकरण-साहित्य-विषयोश्च पारम्परिका विद्वांसः लेखनाध्यापनादिकर्मसु कालं नयन्ति।

(7) विद्वद्वरेण्याः पं० श्री रामगोपालशास्त्रिणः

विद्वद्वरेण्यानां श्री रामगोपालशास्त्रिणां जन्म जयपुरस्य "पुरानी-बस्ती" इत्यभिधे भागस्थे गोपाल-कुञ्जे 1978 तमे वैक्रमाब्दे कार्तिक-शुक्ल-दशम्यां तिथौ संजातम्। एतेषां पितृचरणाः श्री लादूरामशर्माणः विश्रुता संगीताचार्याः आसन्। श्रीमद्भिः जयपुरीये महाराज-संस्कृत-कालेजे नियमितछात्ररूपेणाध्ययन विधाय 1948 तम ख्रिस्ताब्दे 'साहित्याचार्य' परीक्षा समुत्तीर्णा। ततश्च तस्मिन्नेव कालेजे प्रवेशिका-विभागेऽध्यापनकार्यं प्रारब्धम्। स्वतंत्रछात्ररूपेणैभिः 1958 तमे ख्रिस्ताब्दे "धर्मशास्त्राचार्य" परीक्षा पारिता। तदनन्तर 'प्रभाकर', 'साहित्य-रत्न', 'शिक्षा शास्त्री' त्यादि परीक्षास्वपि साफल्यं लब्धम्। भवन्तः महाराज-संस्कृत-कालेजातिरिक्तं बगरूस्थे राजकीय-संस्कृत-विद्यालये, प्रधानाध्यापकाः, सीकरनगरस्थे श्रीकल्याण-राजकीय-संस्कृत-महाविद्यालये, महापुरा-संस्कृत-महाविद्यालये च साहित्यविषयस्य व्याख्यातृपदमलंकृतवन्तः। ततश्च श्रीमन्तः महाराज-संस्कृत-कालेजे धर्मशास्त्रस्य व्याख्यातृपदे नियुक्ताः कानिचिद् वर्षाणि यावत् धर्मशास्त्र-विषयमध्यापयामासुः। परतश्च संस्कृत-निदेशालये 'उपनिदेशक' पदे साफल्येन निरीक्षण-कार्यं सम्पाद्य पञ्चपञ्चाशततमे वयसि सेवा-निवृत्ता अभवन्।

श्रीमन्तः संस्कृताध्ययन-कार्यातिरिक्तं विविधाभ्यः सामाजिक-संस्थाभ्यः स्व-सहयोग-प्रदानेन समाज-सेवाकार्यमपि सम्पादयन्ति। भारतीय-साहित्य-विद्यालये, गौड़-विप्र-विद्यालये, भारत-साधुसमाजे, अन्यास्वपि संस्थासु भवद्भिः मन्त्रि-पदे कार्यं निष्पादितम्। निम्बार्क-सत्संग-मण्डलस्य, निम्बार्क-पीठस्य च मन्त्रित्वकार्यं सम्पाद्य भवन्तोऽधुना निम्बार्क-संस्कृत-महाविद्यालयस्य संचालने साहाय्यमाचरन्ति।

भवतां लेखन-सम्पादन-कार्यमुल्लेखनीयं वर्तते। भवद्भिः पञ्चविंशतिवर्षपर्यन्तं यावत् श्री निम्बार्कव्रतोत्सवदीपिका-पत्रिकायाः सम्पादनं कृतम्। भवतां प्रयासेन श्री-जयन्ती महोत्सवपदावल्याः त्रयो भागाः प्रकाश्यतामिताः। धार्मिककृत्यसम्पादनाय भवद्भिः "आवाहन-प्रदीपः" इत्याख्यः ग्रंथः निर्मितः प्रकाशितश्च। श्रीमद्भिः केषाञ्चन ग्रंथानां भूमिका अपि लिखिताः। 'श्री-सर्वेश्वर', 'निम्बार्क', 'भारती', 'स्वर-

मंगलादि पत्रिकासु समये समये भवल्लिखिताः लेख-कविता-मंगला चरणादयः प्रशस्ताः सन्ति । भवतां रचनात्मककार्येषु—

कुवलयानन्दस्य हिन्दीव्याख्या, श्रीकृष्णस्तवराजस्य हिन्दीपद्यानुवादः, धर्मसंग्रहः, वैष्णवी श्रीपार्वती, साहित्यदर्पणे श्लेषालंकारः, दुर्गाधिकारिणी, श्रीमदप्पयदीक्षितानां नवीनालंकारकल्पना, सर्वकामप्रदं पुण्यं तन्त्रं वै वेद-संमितम्, पु भूम्निदाराः, विद्यामानवभूषणम्, पण्डितराजाभिमतं काव्यलक्षणम्, इत्यादयः विश्रुताः प्रकाशिताश्च सन्ति । एवमेव भवद्भिः वेदान्तकामधेनोः, श्रीमिथिलेशसुताष्टकस्य, तत्त्व सिद्धान्त-बिन्दोः, ईशावास्योपनिषदः, मनोबोधस्य च हिन्दी-भाषायामनुवाद. कृतः । एतदतिरिक्तं श्रीमद्भिः पञ्चाशिका-त्रयस्य सम्पादनमपि विहितम् । संस्कृते समस्यापूर्तावपि भवन्तः दक्षाः सन्ति । पद्यरचनायां भवतां प्रतिभायाश्चमत्कारः श्लाघनीयो वर्तते । साहित्यशास्त्रे धर्मशास्त्रे च श्रीमताम् अप्रतिहता गतिः विद्यते । राजकीयसेवानिवृतेरनन्तरं श्रीमतां स्वकीयः सर्वोऽपि समयः सुरभारत्या प्रचारे प्रसारे, धार्मिककृत्येषु च व्यतीतो भवति ।

**(8) समीक्षाधुरीणा डा. श्री पुष्करदत्त शर्माणः—**

तत्रभवतां श्रीमतां श्रीशर्ममहोदयानां जन्म राजस्थान-प्रान्तस्य चूरू जनपदान्तर्गतस्य तारानगराख्ये ग्रामे सप्त-विंशत्युत्तरैकोनविंशतिशततमे खिस्ताब्दे अप्रैल मासस्य एकविंशति तमे दिनांके समभवत् । श्रीमतां पितृचरणाः श्री जयनारायणशर्ममहोदयाः प्रख्याताः ज्योतिर्विदः विद्वांसश्च सन्ति । श्रीमतां प्रारम्भिकी शिक्षा तत्रैव ग्रामे समभवत् । परतश्चोच्चशिक्षार्थं भवन्तः डूंगर-महाविद्यालये प्रविष्टाः अभवन् । तत्र चाधीयानैः श्रीमद्भिः संस्कृते एम. ए. परीक्षा सर्वप्रथमं स्थानमधिगत्य प्रथम-श्रेण्यां समुत्तीर्णा । संस्कृत-भाषावद् इमे हिन्दी भाषायामपि एम ए. परीक्षोत्तीर्णाः सन्ति । ततश्च "आधुनिक संस्कृत कथा-साहित्य का समालोचनात्मक अध्ययन" विषयमवलम्ब्य पी-एच. डी. उपाधिं गृहीतवन्तः । इममुपाधिं श्रीमतां प्रवीणचन्द्रजैनमहोदयानां निर्देशने सम्प्राप्तवन्तः । एभिर्महात्मभिः साहित्यशास्त्रीति परीक्षा समुत्तीर्णा, डेक्कन कालेज पूनातः भाषा-विज्ञाने योग्यताप्रमाणपत्रम्, रशियनफ्रेंचादि भाषासु च योग्यताप्रमाणपत्राणि समधिगतानि । 1958 तमे वर्षे राजस्थानशिक्षासेवायां

चयनिता सन्तः बीकानेरस्थे डूंगर-महाविद्यालये व्याख्यातृपदे नियुक्ता अभवन्। साम्प्रतं श्रीमन्तः तत्रैव संस्कृतविभागाध्यक्ष-पदमलङ्कुर्वन्ति। शोधकार्ये मनोवैज्ञानिकानां कथानां लेखने च श्रीमतां सविशेषा रुचिर्वर्तते। रामायण-महाभारतादीनां प्रबन्धग्रन्थानां भासभवभूति-भट्टनारायणादीनां संस्कृत-वाङ्मये विश्रुतानां नाटकानां मनोवैज्ञानिकमध्ययनमेतेषां शोध-निर्देशने समभवत्। अधुनाऽपि केचन छात्राः एतेषां शोध-निर्देशने शोधरताः सन्ति।

डा. शर्मणां लेखनं, प्रकाशनं सम्पादनकार्यञ्च सुविस्तृतं वर्तते। एतेषां प्रकाशितेषु सम्पादितेषु च ग्रन्थेषु संस्कृत-साहित्येतिहासः, आधुनिकं संस्कृत-व्याकरणम्, लघुसिद्धान्त-कौमुदी (भाष्यम्), राजस्थानस्य आधुनिक-संस्कृत-कथालेखकाः, कथा-संग्रहस्य सम्पादनम्, संस्कृत-गद्यप्रभा, संस्कृतकाव्य-मंजरी, संस्कृत-पीयूषम् (अन्याभिः सह सम्पादनम्) इत्यादयः विश्रुताः सन्ति। वाचस्पतिमिश्रस्य कृत्यमहार्णवो नामको ग्रन्थः श्रीमद्भिः समालोचनात्मकभूमिकया सह सम्पादितोऽपि प्रकाशन प्रतीक्षते।

श्रीशर्ममहोदयानां बहवः शोध-लेखाः, निबन्धाः, कथानिकाश्च सागरिका—स्वरमंगला—विश्वम्भरादि—पत्रिकासु प्रकाशिता सन्ति। एतदीया "प्रतिवेशिनी" ति संस्कृतकथानिका कन्नड—भाषायामप्यनूदिता। हिन्दी-भाषायां निबद्धस्य "प्रहलादमहाकाव्यस्य कतिपय-अंशाः" सर्वेश्वर-पत्रिकायां प्रकाशिताः सन्ति। कथासंग्रहेषु काव्यसंग्रहेषु चैतेषां कृतयः प्राकाश्यतां गताः। सम्प्रत्येते काव्य-कथोपन्यासादिलेखने संलग्नाः सन्ति। संस्कृत-गद्य-निबन्धकारेष्वपि श्रीमतां नामधेयं राजस्थान-प्रान्तीयेषु लेखकेषु विश्रुतमस्ति। मुख्यतः एते महाभागाः समीक्षकाः प्राच्यप्रतीच्योभयविधासु निष्णाताः सन्ति।

(9) मनीषिणो डा. श्रीगंगाधर भट्ट महोदयाः—

श्री भट्टमहोदयानां जन्म सप्तत्रिंशत्युत्तरैकोनविंशतिशततमे ख्रिस्ताब्दे जनवरी मासस्य प्रथमे दिनांके राजस्थानप्रान्तस्यालवरनगरे संजातम्। एतेषां पितृचरणाः पण्डित-श्रीरामचन्द्र भट्टमहोदयाः अलवरस्थे संस्कृतमहाविद्यालये व्याकरण-विभागस्याचार्यपदमलङ्कुर्वाणाः भगवत्या

शारदादेव्याः सुरभारत्याः समुपासका आसन् । श्रीभट्टमहोदयैः दशमे वर्षे प्रवेशिकापरीक्षा समुत्तीर्णा । व्याकरणं प्रमुखविषयत्वेन स्वीकृत्य श्रीमद्भिः उपाध्यायपरीक्षा ततश्च शास्त्रिपरीक्षा च योग्यतापुरस्सरं समुत्तीर्णे। तत्पश्चात् सामयिकीं सामाजिकी स्थितिं समवलोक्य प्रतीच्यशास्त्रेषु पारङ्गमत्वं लब्धुं भट्टमहोदयैः क्रमशः हाईस्कूल-इण्टरमीडिएट-बी. ए. परीक्षाः समुत्तीर्य एम. ए. परीक्षायां सर्वप्रथमस्थानं समधिगतम् । तदा महानुभावा एते स्वर्णपदकत्वेन सभाजिताः । कालानन्तरं विश्रुतानां शिक्षाविदां श्री प्रवीणचन्द्रजैन-महोदयानां निदेशने "संस्कृत-काव्य में नीति-तत्व" इति विषयमाश्रित्य 1963 तमे वर्षे पी-एच०डी इत्युपाधिर्गृहीतः । प्रकाशितश्चायं शोधप्रबन्धः शोधकर्त्तॄणां" कृते साहाय्यं वितरति ।

श्रीमन्तः 1951 तमे वर्षे राजस्थान-लोक-सेवा आयोग-द्वारा चयनिताः सन्तः डीडवाना कालेजे संस्कृत-विषयस्य व्याख्यातृपदे नियुक्ता अभवन् । तदनन्तरं भरतपुर-कोटा-जयपुरादिस्थानेषु संस्कृत-व्याख्यातृरूपेणाध्यापयन्तः राजस्थान-विश्वविद्यालयस्य संस्कृते विभागे चयनिताः। तत्र च समयानुसारं विभागाध्यक्षपदमलङ्कुर्वन्तः साम्प्रतं सह-आचार्यरूपेण सुरभारत्याः सेवां कुर्वन्ति ।

श्रीभट्टमहोदयानां शोधनिबन्धाः समीक्षकात्मकनिबन्धाश्च संस्कृतपत्र-पत्रिकासु प्रायशः प्रकाशिता भवन्ति । पाणिनीये व्याकरणशास्त्रे श्रीमतामप्रतिहता गतिः श्रूयते । संकलनेऽस्मिन् श्रीमद्भिः प्रस्तुते निबन्धेऽपि व्याकरणशास्त्रीया विवेचनैव गुम्फिता वर्तते ।

### (10) प्राच्यप्रतीच्योभयशास्त्रज्ञाः श्रीकलानाथ-शास्त्रिणः

श्रीमतां शास्त्रिमहोदयानां जन्म जयपुरे कविशिरोमणिभट्ट-श्रीमथुरानाथ शास्त्रिणो ज्येष्ठपुत्रत्वेन 15.7.1936 दिनांके समभूत् । प्रवासिनामान्ध्रब्राह्मणानां कृष्णयजुर्वेदीयतैत्तिरीयशाखाध्यायिनि गौतमगोत्रीये परिवारे, यस्मिन् कविकलानिधि श्रीकृष्णभट्ट प्रभृतयो विद्वांसोऽभूवन्, श्रीमद्भिर्जनिर्लब्धा । प्रथमतो महाराजसंस्कृत कालेजेऽध्ययनं कुर्वद्भिरेभिः साहित्याचार्य-परीक्षा 1952 तमे वर्षे सर्वप्राथम्येनोत्तीर्णा । तदनन्तरे *महाराज-कालेजे* आधुनिकशिक्षापद्धत्या बी. ए. इत्यादिपरीक्षाः उत्तीर्य, 1957 तमे वर्षे आङ्ग्लभाषायां एम. ए. परीक्षा समुत्तीर्णा । हिन्दीभाषायां

लेखनादिषु प्रावीण्यमधिगत्य, राजस्थानविश्वविद्यालयीये महाराज-कालेजे 1957 वत्सराद् आङ्ग्लभाषा-प्राध्यापकपदं भवद्भिरधिष्ठितम् । 1965ई. वर्ष यावदाङ्ग्लभाषा प्राध्यापकत्वमनुष्ठाय राज्यशासनेन राजकीये भाषा-विभागे सहायक-निदेशकपदे समाकारिता इमे 1970 वर्षतः उपनिदेशकपदे कार्यं कुर्वाणाः सम्प्रति 1976 तः निदेशकपदस्य कार्यमनुतिष्ठन्ति ।

श्रीमद्भिः जयपुरीयाया "भारती" संस्कृत-मासिक-पत्रिकायाः सम्पादनकार्य 1954 वत्सरात् 1963 वर्षपर्यन्तं विधाय 1978 वत्सरे त्रैमासिक-स्वरमंगलायाः सम्पादनमप्यनुष्ठितम् । "संस्कृत-कल्पतरुः" (1972) प्रभृतिग्रन्थानां झाबरमलशर्माभिनन्दनग्रन्थादीनामनेकानामभिनन्दनग्रन्थानां च सम्पादनमपि भवद्भिर्विहितम् । 'जान-पासमोर' इत्याख्यस्य दार्शनिकस्य ग्रन्थः "दर्शन के सौ वर्ष" इत्याख्यया, दासगुप्त-कृतस्य भारतीयदर्शनेतिहासस्य प्रथमो भागश्च श्रीमद्भिः हिन्द्यामनूदितौ, यौ राजस्थान-हिन्दी-ग्रंथ अकादमीतः क्रमशः 1967, 1978 वर्षयोः प्रकाशितौ । एभिर्महोदयैः "ऋषिभाषितानि" इत्याख्यः प्राकृतग्रन्थः आंग्लभाषायाम्, राजस्थानी-भाषाया लघुकथा आंग्लभाषायाम्, उर्दू गजलानि च संस्कृतभाषायामनूद्य पारस्परिकानुवादस्य क्रमः प्रचालितः ।

संस्कृते कविता-निबन्ध-लघुकथोपन्यास-नाटक-विमर्शलेख-शोधलेखादीनामेभिः प्रभूता संख्या प्रणीता, देशस्य प्रथितेषु पत्रेषु प्रकाशमाप्तवती । 'जीवनस्य पृष्ठद्वयम्' शीर्षक-उपन्यासः, द्वादश कविताः, दश शोधलेखाः, दश लघुकथाः, षष्टि-निबन्धाश्च श्रीमद्भिः संस्कृते लिखिता, अद्यावधि प्रकाशिताः । आकाशवाण्या जयपुरकेन्द्रात् द्वादश संस्कृतरूपकाणि भवद्भिः लिखितानि प्रसारितानि, पंचाशीतिः वार्ताश्चाद्यावधि प्रसारिता । 'संस्कृत-प्रतिभा', 'संस्कृत-रत्नाकर', 'भारती' स्वरमंगला', 'विश्वसंस्कृतम्' इत्यादि सावधि-पत्रेषु श्रीमतां रचनाः प्रकाशिताः सन्ति भवन्ति च । हिन्दीभाषायां विंशति शोधलेखाः, त्रिंशदधिकशतं (130) निबन्धाश्च भवतां प्रकाशिताः सन्ति । 'आलोक' 'भाषा परिचय' महाविद्यालय-पत्रिका-प्रभृति-हिन्दी-सावधि-पत्राणां सम्पादनम्, राजकीयशब्दकोषाणां ग्रन्थानां च सकलन प्रकाशनं च श्रीमद्भिः हिन्दीसाहित्यसेवाक्षेत्रे विहितम् । आंग्लभाषायां द्वादश निबन्धाः प्रकाशिताः सन्ति । 'सम्मेलन पत्रिका', 'साप्ताहिक हिन्दुस्तान-

नवभारत टाइम्स-दैनिक हिन्दुस्तान-संस्कृति-भाषा-जनसाहित्य-राजस्थान-पत्रिका-राष्ट्रदूत-नवज्योति-मधुमतो-अणिमा-प्रभृति हिन्दीपत्र-पत्रिकासु श्रीमता शोधलेखा: निबन्धाश्च प्रकाशिता: सन्ति।

तत्रभवन्तो भवन्त: प्रायो विंशति-साहित्यसेविसंस्थानां सदस्यत्वं पदाधिकारित्वं वा समलंकुर्वन्ति। एते महाभागा अनेकासां राजकीय-समितोनां सचिवा: सदस्याश्च सन्ति। आन्ध्र-गुर्जर-वंगीयादिभारतीय-लिपीनां भाषाणां चाभिज्ञैरेभि: सम्प्रति 'अनुप्रयुक्त-भाषिकी' विषयोपरि शोधसन्दर्भकेन्द्रस्थापनाकार्यमप्यारब्धम्।

**(11) साहित्तीविद: श्रीश्यामाचरणत्रिपाठिन:**

श्रीत्रिपाठिनां जन्म त्रयस्त्रिंशदुत्तरैकोनविंशतिशततमे खिस्ताब्दे अक्तूबरमासस्य पंचदशे दिनांके संयुक्तप्रान्तस्य वाराणसीमण्डलान्तर्गते नरहननामके ग्रामे श्रीरामवदनत्रिपाठिनां गृहेऽभवत्। वाराणस्यामध्ययनं कुर्वद्भिरेभि: साहित्यव्याकरणदर्शनाचार्यपरीक्षा: समुत्तीर्णा:। तत्पश्चात् शिक्षाशास्त्रीति परीक्षाऽपि समुत्तीर्णा। एभिर्महोदयै: 1957 खिस्ताब्दत: 1963 खिस्ताब्दपर्यन्तम् उत्तरप्रदेशस्य हरदोई-मण्डलस्थिते श्रीशिवशंकर-हरण-संस्कृतमहाविद्यालये, 1964 त: 1969 वर्षपर्यन्तं प्रयागे श्रीराम-देशिकसंस्कृत-महाविद्यालयेऽध्यापनकार्यं विहितम्; ततश्च राजस्थानस्य राजधान्यां जयपुरे 1970 वर्षत: 1975 वर्षपर्यन्तं श्रीदादूसंस्कृतमहाविद्या-लयेऽध्यापनं प्रशासनं च कृतम्। 1975 खिस्ताब्दतोऽद्यपर्यन्तमेते बीकानेरस्थे श्रीशार्दूलसंस्कृतविद्यापीठे व्याकरणविभागाध्यक्षपदे कार्यप्रवृत्ता: सन्ति।

श्रीमद्भि: राजस्थान-साहित्य-अकादमी-संस्थायास्त्रैमासिक-संस्कृत-पत्रिकाया: 'स्वरमंगलाया:' अंकद्वयस्य (वर्ष 6, तृतीयचतुर्थयोरंकयो:) सम्पादनमपि कृतम्। यद्यपि भवतां संस्कृतनिबन्धादय: संस्कृत-पत्र-पत्रिकासु प्रकाशिता विरलैवावलोक्यन्ते, तथापि श्रीमद्भिर्यद्-किमपि लिखितं प्रकाशितंच, तत्सर्वं श्रीमतां विषयवैदुष्यं शास्त्रसमर्त्वंच प्रकटीकरोति।

**(12) साहित्यसमालोचका: श्रीचन्द्रकिशोरगोस्वामिन:**

तत्रभवन्तो भवन्त: श्रीगोस्वामिमहोदया: राजस्थानप्रान्तस्य पूर्वांचले भरतपुरनगरे फरवरीमासस्य षड्विंशतितमे दिनांकेऽष्टात्रिंशद-

घिकैकोनविंशति-शततमे खिष्टाब्दे राजगुरूणां गौरवासीत्युपाह्वानां कुले जनि लब्धवन्तः। राजस्थानविश्वविद्यालयस्य सर्वाः परीक्षाः साफल्येनोत्तीर्य तत एव 'संस्कृतसाहित्ये वात्सल्यरस.' इतिविषयमुद्दिश्य विद्वद्-वरेण्यानां डा० ब्रह्मानन्दशर्ममहोदयानां निदेशने शोधकार्यं सम्पाद्य पी-एच०डी० इत्युपाधिना समलंकृताः। विदेशीयभाषासु आंग्लभाषया सह फ्रेंचभाषामपि श्रीमन्तोऽधीतवन्तः। राजस्थानराज्यस्य टोंक-डीडवाना-श्रीगगानगर शाहपुरा-प्रतापगढ़-प्रभृतीनां नगराणां राजकीयमहाविद्यालयेषु संस्कृतप्रवक्ततृपदेऽध्यापनकार्यमेभिः कृतम्। ततश्च राजस्थानगौरवभूतस्य विश्रुतस्य वनस्थलीविद्यापीठस्य ज्ञानविज्ञानमहाविद्यालयेऽधिस्नातकसंस्कृतविभागे संस्कृतप्राध्यापकपदं समलंकृत्य सम्प्रति तत्रैव विभागाध्यक्षपदे विराजन्ते।

विद्यार्थिकालादेव संस्कृतपद्यलेखादिरचनासु रुचिशीलैः भवद्भिः 'भावशतकम्', बहूनि स्तोत्राणि, रेडियोरूपकानि च प्रणीतानि। संस्कृतसाहित्ये साहित्यशास्त्रे च भवतां परमा रुचिः। तच्छ्रद्धा नैके शोधलेखाः राजस्थान-संस्कृतपरिषदोऽखिलभारतीय-प्राच्यविद्यासम्मेलनस्य चाधिवेशनेष्वेभिः पठिताः, विद्वद्भिश्च प्रशंसिताः। श्रीमद्भिः लिखिताः अनेके निबन्धाः पत्रपत्रिकासु प्रकाशिताः सन्ति। इदानीं भवन्तः साहित्यशास्त्रस्य ग्रन्थानां सम्पादने रससिद्धान्तस्य च पुनर्मूल्यांकने निरताः संस्कृत-निबन्धलेखनेष्वपि संलग्नाः संति।

**13 शास्त्रधुरीणाः कांकरोपाह्वाः डा० श्रीनारायण-शास्त्रिणः**

श्रीशास्त्रिणां जन्म जयपुरे त्रिंशदुत्तरैकोनविंशतिशततमे खिस्ताब्दे जुलाई मासस्य त्रयोदश दिनांके समभवत्। एतेषां शिक्षा-दीक्षादयः प्रथितविदुषां स्वपितृचरणानां श्रीमन्नवलकिशोरकांकरमहोदयानां निर्देशने समजायत। जयपुरस्थे महाराजसंस्कृतकालेजे अध्ययनं कुर्वद्भिरेभिः व्याकरणाचार्यपरीक्षा समुत्तीर्णा। ततश्च 'साहित्याचार्य' परीक्षा प्रथमश्रेण्यां, 'सांख्यदर्शनाचार्य'-परीक्षा द्वितीयश्रेण्यां संस्कृते 'एम०ए०' प्रथम श्रेण्यां 'साहित्यरत्न' प्रभाकराद्यश्च परीक्षा यथाकालं समुत्तीर्णा.। प्रथमा-मध्यमा शास्त्रि-परीक्षास्वपि महाभागैरेभिः सर्वत्र प्रथमश्रेण्यधिगता। 1975 तमे खिस्ताब्दे डा० सुधीरकुमारगुप्तमहोदयाना निर्देशने "तैत्तरीय संहिता का एक अध्ययन" इति विषयमाश्रित्य राजस्थानविश्वविद्यालयात् पी-एच०डी० उपाधिः गृहीतः :

अध्ययनकालादेव एते रचनाकर्मणि संप्रवृत्ताः, विविधेषु स्थानेषु समायोजितेषु लेखप्रतियोगितासु सर्वप्रथमस्थानं स्वर्णपदक-पुरस्कारादिकं च लब्धवन्तः। जयपुरे भवद्भिः "संस्कृत-वाग्विवर्द्धिनी परिषद्" इत्यास्य-संस्थायाः संचालनमपि कृतम्। संस्कृतरत्नाकर-भारतीत्यादिषु पत्रिकासु भवता अनेके लेखाः एकाङ्कि रूपकाणि, पद्यानि, समस्यापूर्तयः कथाश्च प्रकाशिताः सन्ति। विश्रुतासु रचनासु श्रीरामकृष्णपरमहंसः, श्रीशंकराचार्यः, लोकमान्यतिलकस्य बाल्यकालः भ्रातृभक्तो भरतः, स्वामी दयानन्दः, प्रणवीरः महाराणाप्रतापः, श्रीकृष्णद्वैपायनः, जयन्तविष्णुनार्लिकरः, जीवनदर्शनात्मकाः लेखाः, राष्ट्रस्योन्नतिमूलम्, अमेरिकादेशे क्रिसमिस दिवसः, स्वधर्मः परिपाल्यताम्, शतं जीवेम शरदः सर्ववीराः इति शीर्षका लेखाः, तथा च त्यागः, जीवितशवश्चेति कथाद्वयम् प्रकाशिताः सन्ति।

श्रीमतां पुस्तकाकारासु प्रकाशितासु रचनासु-व्याकरणसाहित्यप्रकाशः, आदर्श-संस्कृतप्रवेशिका, छन्द-अलंकार-प्रवेश, अभिनवसंस्कृतमाधुरी, शुकनासोपदेशः (संस्कृत हिन्दी टीका), संक्षिप्त-कादम्बरी-हिन्दी टीका, द्विजदशाप्रकाशः, सरल-काव्यप्रवेश इत्यादयः साम्प्रतमपि वैदुष्यं प्रथयन्ति। एतेषां 'स्वातन्त्र्य-यज्ञाहुतिः' इति नामकं नाटकं, संस्कृत-भाषायाः अन्तर्राष्ट्रीयं महत्त्वम्, इत्याख्यश्च लेखः एवमन्येऽपि केचन लेखाः विद्वत्समाजे बहुसमादृताः सन्ति। साम्प्रतमेते जयपुरस्थे राष्ट्रिय आयुर्वेद-संस्थाने संस्कृतस्य-प्राध्यापकपदे कार्यं कुर्वन्तः संस्कृत-संस्कृति-सेवायां संलग्नाः सन्ति।

## 14. कोविदा डॉ० श्री सत्यव्रत शास्त्रिणः

सम्प्रति राजस्थान-प्रान्तस्य आंग्लमहाविद्यालयानां संस्कृत-विभागेषु कार्यरतेषु प्राध्यापकेषु द्वित्राः पंचषा वा विद्वांसः एव एतादृशाः वा समवलोक्यन्ते, ये निबन्धादि-लेखन कार्येषु सम्प्रवृत्ता सन्ति तेष्वन्यतमः सन्ति, डाक्तरोपाधिधारकाः श्री सत्यव्रतशास्त्रिणः। श्रीमन्तः राजस्थान-शिक्षासेवायां 1964 तमे वर्षे राजस्थान-लोकसेवा-आयोगेन चयनिताः, ततः प्रभृति राजस्थानप्रान्ते सुरभारती-सेवां विदधति। श्रीशास्त्रिणां जनिः हरियाणा प्रदेशस्थिते अम्बाला मण्डलान्तर्गते खारखनाभिधे ग्रामे एकोनचत्वारिंशदुत्तरैकोनविंशतिशततमे ख्रिस्ताब्दे अक्टूबर मासस्य त्रयोदशदिनाङ्के श्रीमद्विद्यानन्दशास्त्रिण. गृहेऽभवत्। प्रारंभिकमध्ययनं सम्पाद्य

1958 तमे खिस्ताब्दे एते पंजावविश्वविद्यालयतः एम० ए० परीक्षामुदतरन्। ततो अमृतसरस्य दयानन्दमहाविद्यालये पञ्चहायनान्यध्यापनकार्यं विहितवन्तः। परतश्च 20-10-1964 तः राजस्थान-प्रान्तीये राजकीय-महाविद्यालये श्री गंगानगरे सर्वकारेण नियुक्ता अद्यापि तत्रैव कार्यं कुर्वन्ती। शास्त्रिमहोदयानां संस्कृत-आंग्ल-हिन्दी-भाषायां विरचिताः षष्टिकल्पाः शोधनिबन्धाः विभिन्नासु विश्रुतासु पत्रिकासु प्रकाशिताः श्रूयन्ते। 1973 तमे खिस्ताब्दे एभिः "जैनसंस्कृतमहाकाव्यमिति" विषयमवलम्ब्य मान्यानां विद्वद्वरेण्यानां डा० सुधीरकुमारगुप्तमहोदयाना निदेशने राजस्थान-विश्वविद्यालयात् पी-एच०डी० इत्युपाधिर्गृहीतः। सम्प्रत्यमी लेखनकर्मणा सह संस्कृताध्यापन-कार्ये प्रवृत्ताः सन्ति।

## 15. विद्वद्वरेण्य डॉ० श्री रूपनारायण-त्रिपाठी-

श्री त्रिपाठिनः जन्म उत्तरप्रदेशस्य गढवालमण्डलान्तर्गते उत्तराखण्डक्षेत्रे किमाना नामधेये ग्रामे एकचत्वारिंशत् उत्तरैकोनविंशतिशततमे खिस्ताब्दे सितम्बरमासस्य द्वितीये दिनांकेऽभवत्। अस्य पितृचरणाः स्वर्गताः श्रीमन्तः इन्द्रलाल-त्रिपाठिनोः विश्रुताः वाल्मीकिरामायणस्य मर्मज्ञाः आसन्। श्री उत्तराखण्ड-विद्यापीठतः प्रथमा-मध्यमा-साहित्यशास्त्रि-परीक्षाः नियमितछात्ररूपेण समुत्तीर्यानेन वाराणसेय-संस्कृत-विश्वविद्यालयात् स्वतंत्रछात्ररूपेण साहित्याचार्य परीक्षायां प्रथमश्रेण्यधिगता। ततश्च साहित्यरत्न, विशारद, शिक्षाशास्त्रीति परीक्षास्वपि साफल्यं लब्धम्। अनेन एम० ए० परीक्षापि राजस्थान-विश्वविद्यालयतः 1976 तमे वर्षे प्रथमश्रेण्यां पारिता। 1965 तमे खिस्ताब्दे जयपुरमागत्य अत्रस्थे राजस्थान-संस्कृत-कालेजेऽनेनाऽध्यापन-कार्यं प्रारब्धम्। एतस्मिन् कालेजे 1970 वर्षपर्यन्तं यावत् साहित्यविषयस्याध्यापनं विहितम्। तदनन्तरं श्रीदिगम्बरजैनआचार्य संस्कृत-महाविद्यालये साहित्य-व्याख्यातृ-पदे नियुक्तः। साम्प्रतं च साहित्यविभागाध्यक्षपदमलंकरोति।

एष अद्यत्वे सुरभारत्यां रचना-कर्मणि प्रवृत्तो वर्तते। भारती-वागीश्वरीत्यादि पत्रिकास्वस्य केचन लेखः प्रकाशिताः सन्ति। तेषु 'नागानन्द-नाटके रस-मीमांसा', 'उत्तररामचरिते रसमीमांसा', 'काव्ये कलातत्त्वानां स्थानम्', इत्यादयः समालोचनात्मक-निबंधाः प्रमुखाः सन्ति। अस्य 'नूतन-संस्कृतव्याकरण-रचना', 'हिन्दी व्याकरण तथा पत्र-निबंध' इति नामकं

पुस्तकद्वयमपि प्रकाशितं वर्तते । एतदतिरिक्तं सम्पादन-कर्मण्यपि जन एप सलग्नः दृश्यते । 'वागीश्वरी' पत्रिकायाः अंकत्रयस्य, जयपुरे समायोजिते राष्ट्रिय-संस्कृत-शिक्षा-सम्मेलनावसरे प्रकाशितायाः पत्रिकायाः स्मारिकायाश्च सम्पादनेऽपि अनेन सहयोगो विहितः । साहित्यिक-सांस्कृतिक-कार्यक्रमेष्वपि एतस्याभिरुचिः दृश्यते । असौ राजस्थान-विश्वविद्यालयात् पी-एच० डी० इत्युपाध्यर्थं मम निर्देशने एव 'श्री सीताराम भट्ट पर्वणीकर-कृत नल विलास महाकाव्य का पाठ संपादन एवं समालोचनात्मक अध्ययन" इति विषयमवलम्ब्य शोध कार्यं सम्पाद्य ग्रन्थलेखनं करोति ।

## 16. डॉ० श्रीमती उषा गोस्वामी

श्रीमत्याः उषा गोस्वामिनः जन्मस्थली उत्तरप्रदेशस्य मिर्जापुरं नामकं सुप्रसिद्धं तीर्थस्थलं वर्तते । तत्र सप्तपंचाशदुत्तरैकोनविंशतिशततमे (1957 ई०) खिस्ताब्दे अक्तूबरमासस्य प्रथमे दिने अस्याः जनिरभवत् । श्रीमत्या मैट्रिक-परीक्षातः प्रारम्य एम० ए० (संस्कृत) परीक्षा-पर्यन्तं सर्वाः परीक्षाः प्रथमश्रेण्यां समुत्तीर्णाः । अध्ययनकाले अनया अध्ययनपाटवेन राष्ट्रिय-छात्रवृत्तिरपि समधिगता । आशैशवं शिक्षया सह सांस्कृतिक-गतिविधिष्वपि अस्याः अत्यधिका रुचिः विद्यते । शिक्षणकाले स्नातक-पूर्वार्द्ध-स्तरे संस्कृत-संगीत-विभागसमितेः सचिवपदमलंकृत्य स्नातकोत्तरार्द्धे छात्र-संघस्याध्यक्षपदमपि श्रीमत्या निर्व्यूढम् । एवमेव अध्ययनकालतः एतस्याः रुचिः पठने पाठने च वर्तते । श्रीमत्या विश्रुतशोधनिर्देशकानां डा० श्रीपुष्करदत्तशर्ममहोदयानां निदेशने "भवभूति के पात्रों का मनोवैज्ञानिक अध्ययन" इति विषयमाश्रित्य राजस्थान-विश्वविद्यालयस्य 'पी-एच० डी० उपाधि गृहीतः । सम्प्रति लेखनाध्ययनकर्मणि प्रवृत्तावलोक्यते ।

## 17. डॉ० श्रीकृष्णचंद्रशर्मा

राजस्थानप्रान्तस्य मेवाडमण्डलान्तर्गते आसीन्दनगरोपकण्ठे दांतड़ा ग्रामवास्तव्यानां सुप्रसिद्धज्योतिर्विद्-स्व० पं० श्रीमोहनलालशर्मणां पौत्रत्वेन, पं० श्रीगणपतिलालशास्त्रिमहोदयानां च पुत्रत्वेन पंचपंचाशदधिकैकोनविंशतिशततमे खिस्ताब्दे सितम्बरमासस्य विंशति तारिकायां श्रीकृष्णचंद्रशर्मणः जनिरभवत् । एतस्य गोत्रं दगोलिया, कौशिक-अत्रि-जमदग्नि-

भारद्वाजइत्यादयः ऋषयः, एवं चासौ यजुर्वेदस्य काठकसंहिताध्यायी वर्तते। अनेन पंचवर्षात्मके वयस्यध्ययनं प्रारब्धम्। अध्ययनं कुर्वन्नसौ षोडशवर्षात्मके वयसि 1972 तमे ख्रिस्ताब्दे विज्ञानवर्गे आसीन्दतविद्यालयाद् उच्चमाध्यमिक परीक्षामुत्तीर्णवान्, ततश्च सनातनधर्म-राजकीय-महाविद्यालयब्यावरतः 1975 तमे ख्रिस्ताब्दे बी० ए० इत्युपाधिं प्राप्तवान्। तदनन्तरं राजस्थानप्रान्तस्य प्राचीनतमविद्याकेन्द्रात् अजयमेरुनगरात् राजकीयमहाविद्यालयस्य नियमितछात्ररूपेण 1977 तमे ख्रिस्ताब्दे अनेन संस्कृते एम०ए० परीक्षा प्रथमश्रेण्यां समुत्तीर्णा।

अध्ययनकालेऽस्य निबन्ध-भाषण-श्लोकपाठाद्यनेकासु प्रतियोगितासु प्रथमस्थानं प्राप्तवान्। तथा च स्नातकोत्तर-संस्कृत-परिषदः, छात्रावासे चापि विभिन्नेषु पदेषु कार्यं कृत्वा स्वाभिरुचिं प्रादर्शयत्। ततश्च लेखनकर्मप्रयत्नशीलोऽभवत्। स्वरमंगला-भारतीत्यादिपत्रिकासु समये समयेऽस्य नैकशो लेखाः प्रकाशिताः सन्ति।

असौ राजस्थान-विश्वविद्यालयतः मम निर्देशने "राजस्थानस्य स्वातन्त्र्योत्तरसंस्कृतगद्यसाहित्यम्" इति विषयमधिकृत्य पी–एच. डी. इत्युपाधिं समधिगत्य ततः परमपि उच्चस्तरीयं शोधकार्यं कृतवान्। सम्प्रति राजकीयाधीनस्थसेवायां कार्यं करोति।

---

# निबन्ध-संग्रह-सार-संक्षेपः

निबन्ध-सग्रहस्यास्य निबन्धकानां यथायोग्यं यथाशक्यं च परिचयादिसमुल्लेखानन्तरं साम्प्रतं तेषां निबन्धानां सारगर्भितं विवेचनमुपस्थाप्यते, पाठकानां विषयपरिज्ञानाय तोषाय च।

## 1. साहित्यदर्शनस्य समीक्षा

संस्कृतवाङ्मये साहित्यशास्त्रस्य सातिशयं महत्त्वं स्वीक्रियते विद्वद्भिः। भरतभामहादितः प्रारम्य वर्तमानकालपर्यन्तमनेके साहित्यशास्त्राचार्याः अभूवन्, तैश्च स्वस्वबुद्ध्या शास्त्रस्यास्य विवेचनं विहितम्। यद्यपि काव्यशास्त्रस्य सर्वप्राचीनं विवेचनमग्निपुराणे समुपलभ्यते, तथापि काव्यालंकारशास्त्ररूपेणास्य प्रतिष्ठा भामहादिभिः विहिता। परस्ताच्च भट्टोद्भट-दण्डी-रुद्रट-वामनादिभिश्च वाच्यार्थोपस्कारकतया ध्वन्यमानोऽर्थः अलंकारशास्त्रस्य कोट्यां समावेशितः। उपकारकत्वादलंकारः सप्तमभंगमिति समुद्घोषितश्च विद्वद्भिः। समीक्षात्मकेऽस्मिन् निबन्धे श्रीमद्भिः द्विवेदिमहोदयैः साहित्यशास्त्रस्य विविधमतवादाः समुपन्यस्ताः।

साहित्यशास्त्रस्य प्रारम्भः काव्यरचनापद्धतेर्विकासदृष्ट्या काव्ये च शब्दार्थयोजनापरिष्कारपूर्वकं काव्यात्मभूततत्त्वाना विनिवेशनधिया संजातः। प्रारम्भे गुरुपरम्परातः सम्प्राप्तः काव्यमार्गः सम्प्रदायतत्वेनाभिधीयमानः साम्प्रतं काव्यशास्त्रस्यार्थे रूढित्वमापन्नो अलंकार-रीति-वक्रोक्ति-रस-ध्वन्यादि-विविधसम्प्रदायत्वमभजत। तत्रापि च पंचसु पक्षेष्वाद्यः उद्भटादिभिरंगीकृतः, द्वितीयो वामनेन, तृतीयः कुन्तकेन, चतुर्थो भट्टनायकेन पंचमश्चानन्दवर्धनेन स्वीकृतः। एवं विवेचयता विदुषा लेखकेन गदितं यत् विशिष्टशब्दार्थयोरेव काव्यत्वम् तथा विवेचितं धर्मेण व्यापारेण व्यंग्येन च। अस्यैव सर्वांगीणं सोद्धरणं-सारगभितच विवेचनममुस्मिन् लेखे विस्तरेण प्रतिपादितमस्ति। समेषामेषां सम्प्रदायानां समन्वयात्मकमौचित्यं साहित्यदर्शने भवितव्यमिति प्रतिपाद्य श्रीमद्भिः साहित्यस्य सहभावत्वमेव

प्राणतत्त्वरूपेण स्वीकृतम् । श्रीमन्तः पाश्चात्यसाहित्यशास्त्रं नैव स्वीकुर्वन्ति, यतोहि तेन भारतीयस्य काव्यशास्त्रस्य मूलव्याघातो भविष्यति । भारतीयमतस्य प्राबल्येन प्रतिपादन कुर्वता लेखकेन तस्यैव विकासाय प्रयतितव्यमिति स्वराद्धान्तः समुपन्यस्तः ।

## 2. व्यंजनाधारताविमर्शः

श्रीमिश्रमहोदयाः साहित्यशास्त्रीय-विवेचनाकारेषु साम्प्रतमग्रगण्याः वर्तन्ते । साहित्यशास्त्रीयेषु ग्रन्थेष्वानन्दवर्धनाचार्यादिभिःध्वनिविवेचकैः व्यंजनावृत्तिविषये यत्किमपि प्रतिपादितं, तत्सर्वं लक्ष्यीकृत्य परवर्तिभिः साहित्यदर्पणरसगंगाधर-सदृशलक्षणग्रन्थकारैः खण्डितं मण्डितञ्च विषय साम्प्रतमपि विदुषां कृते समालोच्यमेव वर्तते । अमुस्मिन् लेखेऽपि विदुषा समालोचकेन व्यंजनाभेदोपभेदपुरस्सरं विवेचितम्: यथा व्यजना प्रथमं द्विधा शब्दनिष्ठार्थनिष्ठा चेति । परतश्च अभिधामूलायाः लक्षणामूलायाश्च व्यंजनायाः शास्त्रीयं विवेचन शब्दार्थविशेषदृष्ट्या समीक्षितम् ।

श्रीमिश्रमहोदयैः शब्दानामनेकार्थत्वं प्रतिपादयता स्पष्टीकृतं यद् व्यंग्यार्थप्रतीतौ संकेतग्रहस्य अनावश्यकत्वं तत्र भवति, यत्र न भवेयुऽनेकार्थकाःशब्दा इति । अस्मिन् विषये श्रीमद्भिश्चतुर्णां मतानां विश्लेषणं विहितम् । संक्षेपेण निगदितुं शक्यते, यच्छब्दस्य येषु येष्वर्थेषु संकेतो गृहीतः, ते सर्वेप्यर्थाः अभिधयैव बोद्धुं शक्यन्ते, न तु व्यज्यन्ते । एवं पण्डितराजजगन्नाथमहाशयेन स्पष्टीकृत ध्वनिविषयकं मत प्रस्तूय विश्लेषित यत् व्यंजना यथा अर्थव्यापारः तथैव शब्दव्यापार इति ।

## 3. रसाद्वैत-मीमांसा

रसाद्वैतमीमांसा-शीर्षकेऽस्मिन् निबन्धे 'रसो वै सः' इति तैत्तिरीयोपनिषदः वाक्यमंगीकृत्य रसत्वेन परमात्मा एवं लक्ष्यीकृतः, स एव सर्वेषामकाम्योऽपि काम्यमानः । अत एव चेतनाचेतनेषु घटपटादिषु सर्वेष्वपि लौकिकेषु विषयेषु तस्यैव भगवतो रसरूपस्याशिकी अभिव्यक्तिः स्वीकृता श्री त्रिपाठिमहाभागैः । स चायं रसः प्राकृताप्राकृतभेदेन द्विधा विभक्तः, तत्रापि अप्राकृतरसस्य विवेचने भक्तिरसायनग्रन्थादुद्धृतं श्रीमधुसूदनस्वामिनां पद्यमेकं समुत्थाप्य स्वमतं प्रतिपादितम् ।

साहित्यशास्त्रीयेषु विभिन्नेषु ग्रन्थेषु रसविषये यत्किमपि विवेचितम्, आचार्यैः, तत्सर्वमपि परमात्मपरकं वर्तते, इति सिद्धान्तितम्। एवंच सर्वेषां शास्त्राणां महातात्पर्यविषयीभूते परमात्मन्येव सच्चिदानन्दादिशब्दाना रसानन्दादिशब्दानां वा प्रवृत्तिः साक्षाद् भवतीति निबन्धमुपसंहरद्भिः त्रिपाठिमहोदयैः निगदितं यत् रसानुभवस्य वैद्यान्तरस्पर्शशून्यत्वं ब्रह्मानन्दसहोदरत्वंच समीक्षकैः उद्घोष्यते तत्साध्वेच ।

### 4. सत्यानुभूतिरात्मा काव्यस्य

साहित्यशास्त्रीयेषु विश्रुतेषु सम्प्रदायेषु रसालंकारध्वनिरीतिवक्रोक्तिऔचित्यानां स्थानं वर्तते, परं साम्प्रतं सत्यानुभूतेरपि विवेचनं परमावश्यकं महत्त्वपूर्णंचेति मन्यन्ते डॉ० ब्रह्मानन्दशर्माणः। काव्ये सत्यानुभूतेः प्रधानतत्त्वेन संस्थापकाः सत्यानुभूतिरात्मा काव्यस्येति सिद्धान्तप्रतिष्ठापकाः श्रीशर्ममहोदयाः कथयन्ति यत् सर्वेषामभीष्टं, अतः काव्येऽस्य स्थितिरनिवार्या। अस्मिन् सत्ये सूक्ष्मतायां सत्यां प्रभावकारितायाः आविर्भावो भवति, एवं प्रतिपादयता शर्ममहोदयेन भौतिकपदार्थनामुदाहरणैः स्वमतस्य समीक्षणमत्र विहितम्। तत्रापि भौतिकपदार्थाना त्रैविध्यं कठोररूपत्वं द्रवरूपत्वं वाष्परूपत्व चेति। सर्वोऽपि विषयः सूक्ष्मदृष्ट्या विस्तरेण च विवेचितः। एषा सत्यानुभूतिः वस्तुतः यथार्थानुभूतिः एव। सर्वस्यापि स्वराद्धान्तस्य सूक्ष्मं विवेचनं श्रीशर्ममहोदयैः स्वरचितासु कारिकासु प्रतिपादितं, यथा—

"लोको मूल हि सत्यस्य लोके सत्यं प्रतिष्ठितम्।"
लोकाधारस्ततो रक्ष्यः, कविताभिनिवेशिना ॥
लोकसत्येऽनुरागश्चेत् काव्यस्य रसनीयता।
तत्रैव तदभावे च तस्य नीरसता मता ॥"

श्रीशर्ममहोदयानां दृष्ट्या काव्यगतमेतत् सत्यं लोकसम्बद्धम्। काव्यसत्यस्यास्य कविप्रतिभयोपस्थापनं कविप्रतिभायाश्च लोकविषय इति लोकादेव कविभिरस्य सत्यस्य ग्रहणं क्रियते। एवंच काव्यगतमेतत् सत्यं श्रीशर्ममहोदयानुसारेण त्रिविधम्-प्रकृतिगतम्, प्राणगतम्, हृदयगतंच। तथापि प्राणगतमेव सत्यम् आर्थिकसत्यस्यापरपर्यायमिति, त्रिविधेषु सत्येषु सत्यस्यैवास्य प्राधान्यं प्रतिपादितम्। श्रीशर्ममहोदयेन अतिविस्तृतेऽस्मिन्

निबन्धे विशेषतः रससिद्धान्तप्रतिपादकानां उत रससूत्रव्याख्याकाराणां सर्वेषामाचार्याणा सिद्धान्तानां सूक्ष्मबुद्ध्या खण्डन विधाय स्वमतस्य प्रतिष्ठापन विहितमिति संक्षेपः ।

**5. व्याकरणशास्त्रीया विवेचना**

वेदस्य सर्वज्ञानमयत्व स्वीक्रियते, उच्यते च वेदस्य सर्वविद्यानिधानत्वमिति। विदुषा लेखकेन श्रीभट्टेन अस्मिन् लेखे शब्दशास्त्रस्य मूलमपि वेदेष्वन्वेषितम्, अनेकैः उद्धरणैश्च ससाधितम् । शब्दशास्त्रस्य कृते व्याकरणशब्दस्य प्रयोगो वैदिकवाङ्मये रामायणमहाभारतादिषु च प्राप्यते; तत्र च द्वैपायनव्यासस्य वचनमिद समुपस्थापितम्—

'सर्वार्थानां व्याकरणाद् वैयाकरण उच्यते ।
तन्मूलतो व्याकरण व्याकरोतीति तत्तथा ।।" इति

अस्मिन् विषये श्री भट्टस्याभिप्रायो वर्तते यद् येन तन्त्रेण साधुशब्दानां सम्यग् बोधो जायते, तद्धि व्याकरणमिति । व्याकरणंच वेदागेषु मुखस्थानीयं वर्तते । तत्रापि च तस्य प्राधान्यमिति विवेचयता लोके विश्रतानां नानाव्याकरणभेदानां "ऐन्द्र चान्द्र काशकृत्स्नं कौमारं शाकटायनम् । सारस्वतं चापिशलं शाकतं पाणिनीयकम् ।" इत्यादीनां समुल्लेखनं विधाय केवलं पाणिनीयव्याकरणविषये महर्षः पाणिनेश्च व्यक्तित्वविषये सकलनं कृतमस्ति । पाणिनीयव्याकरणस्य परिचयात्मकोऽयं विशिष्टो लेखः तस्य ज्ञान-गरिमानं द्योतयति । प्रायशः निखिलमपि संस्कृतवाङ्मय पाणिनीयतन्त्राधीनम् इत्यनेन आचार्यस्य पाणिनेः अतिशयितं महत्त्वमभिव्यज्यते ।

**6. श्री निम्बार्काचार्य–समयसमीक्षा तद्दर्शनंच —**

समीक्षकात्मकस्य विशिष्टस्यास्यास्य लेखस्य लेखकाः सन्ति श्रीनिम्बार्काचार्यपीठस्य शिक्षामन्त्रिणः पण्डितश्रीरामगोपालशास्त्रिणः । श्रीशास्त्रिमहाभागाः श्रीनिम्बार्काचार्यस्य सच्छिष्याः, तद्दर्शनस्य च विशिष्टा विद्वांसः । श्रीमद्भिः स्वकीय समस्तमपि जीवनं निम्बार्कदर्शनस्य तत्त्वान्वेषणे व्यतीतम्, अतएव श्रीमन्तोऽस्य दर्शनस्य विवेचने प्रमाणिका विद्वांसः। यद्यपि श्रीमतां निंबार्कदर्शनमधिकृत्य अनेके शोधलेखाः विभिन्नासु पत्र-पत्रिकासु प्रकाशिताः वर्तन्ते, तथापि प्रस्तुतेऽस्मिन् लेखे श्रीमद्भिः भूयान् परिश्रमः कृतः इति निबन्धस्यास्य पाठकाः स्वयमेव ज्ञास्यन्ति ।

श्री निम्बार्काचार्याणां प्रादुर्भावः कदा बभूव इति विषयमाश्रित्यास्य निबन्धस्य प्रथमः खण्डो वरीवर्ति । अस्मिन् लेखे तेषां सर्वेषां समयविवेचकानां मतनिर्देशनपुरस्सरं समीक्षणं कृतम्, ये द्वापरान्ते कलिप्रारम्भे युगसन्धिकाले श्रीनिम्बार्काचार्याणां प्रादुर्भावसमयमामनन्ति, येषु श्रीवृन्दावनदेवाचार्य-श्रीगोविन्दशरणदेवाचार्यमुश्रीसुन्दरकुंवरी-प्रभृतीनां भारतेन्दु-हरिश्चन्द्रप्रमुखानांच भारतविभूतिभूतानां समीक्षकाणां सिद्धान्तस्य समुल्लेखनं वर्तते । एवमेव पाश्चात्यलेखकानां डा० मोनियर-विलियम्स-हेस्टिंग्स-ग्रियर्सन-ग्रौस-हंटर-प्रभृतीनामपि मतं प्रस्तुतीकृतं वर्तते, यैः श्रीनिम्बार्काचार्यसमयः श्रीरामानुजाचार्यादिसमस्तधर्माचार्येभ्यः प्राचीनतमः प्रतिपादितः । श्रीशास्त्रिवर्यैः डॉ० आर० जी० भण्डारकरमहोदयानां भ्रान्तिमूलकं मतमत्र साधु विवेचितम् । अस्मिन् विवेचने श्रीमद्भिः पुराणधर्मशास्त्रादीनां साम्प्रदायिकग्रन्थानामेतत्सम्बन्धिशिलालेखताम्रपत्रादीनां च प्रमाणोपन्यासेन भ्रान्तेः निरसनं विहितम् स्वमतंच एकादशभिः विवेचनबिन्दुभिः सुदृढीकृतम् ।

निबन्धस्यास्य द्वितीये खण्डे श्रीनिम्बार्काचार्याणां दर्शनं साधुतया विशदीकृतं तत्र च तत्त्वत्रयं चित् पदार्थः, अचित्पदार्थः, नियन्त्रितपदार्थः, अर्थपंचकम् इति विषयबिन्दुभिः, आचार्यदर्शनं सम्यक्तया प्रतिपादितम्, विदुषां शोधार्थिनांच कृते सर्वथा महत्त्वपूर्णं वर्तते इत्यत्र नास्ति कापि सशीतिः ।

## 7 रीतिसिद्धान्ते रसस्य स्थानं महत्त्वंच

वनस्थलीविद्यापीठस्याधिस्नातकसंस्कृतविभागाध्यक्षैः डा० श्रीचन्द्रकिशोर-गोस्वामिमहोदयैः प्रस्तुतोऽयं शोधनिबन्धः समीक्षादृष्ट्या उल्लेखनीयतामावहति । सारगर्भितेऽस्मिन् विवेचने श्रीमद्भिः लेखसन्दर्भरूपेण समुद्धरणानां षष्टिः संख्या प्रतिपादिता-इत्यनेन श्रीमतां विषयवैदुष्यं स्वत एव प्रकटीभवति, नात्र काप्यतिशयोक्तिः । एते महाभागाः भारतीयकाव्यशास्त्रस्य साम्प्रतिकाः समीक्षका विवेचकाश्च । अस्मिन् निबन्धेऽपि श्रीमद्भिः आचार्यवामनस्य रीतिसिद्धान्ते रसस्य स्थानं महत्त्वंच साधु संसाधितम् । सामान्यतः रीत्यलंकारसिद्धान्तानां मते रीतितत्त्वमलंकारत्वं वा काव्ये प्रधानं रसश्चाप्रधानं वरीवर्ति, परमत्र श्रीमद्भिः आचार्यवामननिरूपिता भिन्ना अपि रीतिं रससम्बन्धिनो इति निरूपिता । निबन्धस्यास्यावसाने

गुणानां रसानांच परस्परसम्बन्धविवेचनेन प्रतिपादितं यन्माधुर्यगुणोपपन्नाया: रीतेः शृंगारशान्तरसाभ्यां सह विशेषेण सम्बन्धो वर्तते। अतएव माधुर्यौजप्रसादाख्यास्त्रयो गुणाः रसनिष्ठाः सन्तीति साधुतया विवेचितम्।

## 8. वैदिकमैतिह्यं विद्या च

नातिविस्तृते सारगर्भिते चास्मिन् निबन्धे वेदविद्यापारंगतैः समीक्षकधुरीणैः डा० सुधीरकुमारगुप्तमहोदयैः सर्वज्ञानमयस्य वेदस्य यत्किमपि वैदुष्यपूर्णं विवेचनं विहितं, तत्सर्वं मूलतः शोधार्थिनां कृते महत्त्वपूर्णं वर्वति इत्यत्र नास्ति सन्देहावसरः। श्रीमद्भिः गुप्तमहोदयैः अस्मिन् निबन्धे वेदविषयको राद्धान्तः न परित्यक्तः यस्य विवेचनमधुनातने समये आवश्यकं वर्तते। वेदशब्दस्य व्युत्पत्तिपरकोऽर्थः वेदानां भाषाविषये विचारः, वेदमन्त्राणामर्थादीनांच विषये महर्षियास्कादीनां स्थितिः, वेदस्य शाखासंहितादीनांच विषयप्रतिपादनं वैदिकवाङ्मयस्य सूत्रसाहित्यस्य षडंगानां विवेचनं वेदस्य अध्यात्मविद्याप्रतिपादकानामुपनिषदां षड्दर्शनानांच दिङ्मात्रेणोपस्थापनं, वेदार्थानां दुरूहतया पुराणोत्पत्तिप्रसंगविवेचनं, तत्र च वेदभाष्यकाराणां सर्वेषामेव विदुषां समीक्षकाणांच अवदानं वेदाध्ययने वैदिकभाषायाः व्याख्यानपद्धतेश्च निर्वचनं विवेचयद्भिः श्रीगुप्तमहोदयैः वैदिकमन्त्राख्याने देवशब्दस्य महत्त्वं प्रतिपादितम्। श्रीमतां मतानुसारि वैदिकदेवतावादे परमेश्वर एवैक उपास्यः प्रार्थनीयश्च जीवो नित्यं शरीरश्च नश्वरं, जीवस्य लक्ष्यं मोक्षप्राप्तिः, आत्महननं न श्रेयसे-इत्यादि विवेचनं वर्तते। श्रीमन्तः वेदेषु यज्ञविषयं प्रमुखतया स्वीकुर्वन्ति। लोकोपकारस्य यज्ञस्य आचार्यभेदेन विवेचनं कुर्वद्भिः श्रीमद्भिः प्रतिपादितं यत् एतादृशानां वेदानामध्ययनं सर्वेषां जनानां पवित्रमनिवार्यंच कर्त्तव्यमस्ति। वेदज्ञश्च स्वकीयान् कर्मजान् दोषान् सार्थवेदाध्ययनेन भस्मसात् करोतीति निश्चप्रचम्।

## 9. मनोविश्लेषणात्मलेकं समालोचनम्

साम्प्रतिकेषु शोधविद्वत्सु श्रीशर्ममहोदयानां विशिष्टं स्थानं वर्तते। श्रीमतां मनोविज्ञानविषये विशिष्टा गतिः वर्तते, अतएव श्रीमतां निदेशने वाल्मीकिरामायण-महाभारत-भवभूति-भास-श्रीहर्षादिकवीनां ग्रन्थानां च

मनोविश्लेषणात्मकमध्ययन शोधकार्य च सम्पादितं संपाद्यमानं चास्ति। अस्मिन् निबन्धेऽपि श्रीमद्भिः सर्वप्रथम मनोविज्ञानस्य स्वरूपं साहित्यशास्त्रस्य तदनुसारिणा व्याख्या, मनसश्च विश्लेषणे पाश्चात्यलेखकाना विचारसरणिः, तत्र च स्वकाय विश्लेषण सर्वमपि विवेचनं च सर्वथा नूतन वरीवर्ति ।

मनस्तत्त्वस्य विश्लेषणे श्रीमद्भिः सुप्रसिद्धस्य मनोवैज्ञानिकस्य फ्रायडमहोदयस्य विचाराणां समालोचन संस्कृतकाव्यानामुद्धरणपुरस्सर प्रस्तुतीकृतम् मनोविश्लेषणात्मकदृष्ट्या च विश्लेपितम् । तत्र च वाल्मीकेविषादः, महाकवेः कालिदासस्य रघुवशाख्ये महाकाव्ये वर्णिता विनम्रता, भवभूतेः सुप्रसिद्धाया सूक्तेः, (एवञ्च) तथा भर्तृहरेः गद्यलेखकस्य बाणभट्टस्य, विल्हणस्य, श्रीहर्पस्य, भट्टिकाव्यप्रणेतुश्च सूक्तीनां विश्लेषणं पूर्वतः समुपस्थापित परतश्च सुप्रसिद्धाना काव्यान्तर्गताना पात्राणामपि मनोविश्लेपण विहितमिति पाठकैः समालोचनीयम् ।

## 10. विहंगमदृष्ट्या संस्कृतगद्य-साहित्यस्य विश्लेषणम्

यद्यपि नास्ति काचन नूतना सरणिः निबन्धेऽस्मिन् दृष्टिपथमायाति, तथापि विदुषो लेखकस्य संस्कृतगद्यलेखने यद् वैशिष्ट्यं विद्यते, तत्तु संस्मरणीयमेव । शोधच्छात्राणां कृते संस्कृतभापा-शिक्षकाणां जनानां च कृते निबन्धोऽयमुपयोगी वर्तते । लेखकेनास्मिन् निबन्धे संस्कृतगद्यकाव्यकारेषु सुप्रथितयशसां दण्डि-सुबन्धु-बाणभट्टानां गद्यकाव्यकृतीनां सम्यग्रूपेण समालोचन प्रत्यालोचनं च प्रस्तुतीकृतं वर्तते । परतश्च संस्कृतगद्यकाव्यस्य विकासपरम्परा निदंष्टुं हितोपदेशबृहत्कथा-बृहत्कथामंजरी-वेतालपंचविंशतिका-शुकसप्तति-सिंहासनद्वात्रिंशतिका-प्रभृतीनां नीत्युपदेशकर्त्रीणां रचनानां समुल्लेखन विधाय संस्कृतनाटकेषु प्रयुक्तस्य संस्कृतगद्यस्य स्वरूपम्, कौटिलीयार्थशास्त्रस्य गद्यविकासे स्थानम्, ब्राह्मणग्रन्थेषु यज्ञविधानार्थं संस्कृतगद्येन निबन्धनम्, उपनिषदां गद्यस्य दिग्दर्शनम् तथा आधुनिकगद्यकाव्येषु शिवराजविजयस्य अन्येषांच कतिपयाना ग्रंथरचनानां नामग्रहणं कृतं वर्तते । सारगर्भितोऽयं निबन्धः संस्कृतगद्यकाव्यस्य ऐतिह्यविवेचने सर्वथा श्लाध्यः इति निश्चप्रचम् ।

## 11. काश्मीर-भ्रमणं मम

महामहिमोपाध्यायानां श्रीनवलकिशोरकांकरमहोदयानां संस्कृत-निबन्धकारेषु समुल्लेखनीयं स्थानं विद्यते, इत्यत्र नास्ति सन्देहावसरः। श्रीमतां संस्कृतनिबन्धलेखने यद्यपि वर्ततेऽप्रतिहता गतिः, परमयं-निबन्धः श्रीमता सुप्रसिद्धेषु निबन्धेषु पूर्वतः प्रकाशितमिति नावश्यकता प्रतिभाति विश्लेषण-विवेचनस्य। यद्यपि श्रीमद्भिः 'प्रबन्धामृतम्' इति नामके स्वकीये निबन्धसंग्रहेऽस्य प्रकाशनं विहितं, तथापि प्रस्तुतेऽस्मिन् निबन्धे यत्र तत्र सर्वत्र केषांचिद् विशेषणानां प्रयोगेन क्रियापदानां च परिवर्तनेन नूतनत्वं प्रतिपादितम्। साहित्यिकगद्यस्य सामासिकशैल्यां विरचितस्यास्य साहित्यिकनिबन्धस्य साम्प्रतिकेषु निबन्धेषु महत्त्वपूर्णं स्थानं विद्यते-इति कृत्वाऽत्र संगृहीतः।

## 12. याचना-पुराणम्—

लोके याचनायाः इतिहासः संस्मरणीयः। सामान्यतः जनाः याचनां विधाय स्वकीयं कार्यं संसाधयन्ति। तेषां न प्रवर्ततेऽस्मिन् विषये कापि विचारणा, यत् याचना लाघवकरी वर्तते। अद्यत्वे तु याचना सर्वसामान्या सामान्या-नायिकेव सर्वेषां जनानां हृदि कौतुकं जनयति। विदुषा लेखकेन याचना-विषयमुररीकृत्य वार्तालापशैल्यां हास्य-व्यंग्यात्मकदृष्ट्या पूर्वपक्ष-सस्थापनपुरस्सरं सिद्धान्तपक्षसंस्थापनाय च निबन्धस्यास्य प्रस्तुतीकरणं विहितम्। निबन्धस्यास्य मनोविश्लेषणात्मकं विवेचनमपि कर्तुं शक्यते। याचनासमये न केवलं याचकस्य, अपितु याच्यमानस्यापि विचित्रा दशा भवति-इति विषयो लेखकेनात्र स्वपत्न्या साकं संवादरूपेण प्रस्तुतः। 'मा च याचिष्म कंचन' इत्युद्घोषयतापि जनेन स्वजीवने केचन एतादृशाः अवसराः प्राप्यन्ते, येषु सः याचनार्थं विवशो भवति। किं याचनावृत्तिः भिक्षावृत्तिसमा वर्तते, इत्यत्रापि विदुषा लेखकेन स्वीया विचारसरणिः पुरःस्थापिता। याचना-विषये प्रस्तुतोऽयं निबन्धो वस्तुतः आह्लादकरः प्रच्छन्नरूपेण प्रकाशरूपेण च लोके विद्यमानानां याचकानां स्वरूप-माविष्करोति प्रकटीकरोति-इति निबन्धपाठकैः निबन्धस्यास्यानुशीलनोत्तरं एव निर्णेतव्यम्।

**13. हस्ति-दन्ताः—**

डाक्तरोपाह्वाना श्रीनारायणशास्त्रिकांकरमहाभागानां सोऽयं निबंधः प्रसिद्धस्य लोक-ग्राभाणकस्य स्मरणं कारयति—"हाथी के दांत खाने के और दिखाने के और।" सामान्यतः हस्तिनःयौ द्वौ दीर्घौ विशालौ श्वेतदन्तौ लोकानां दृष्टिपथं समागच्छतः, तौ किं तस्य भक्षणकार्ये सहायकौ भवतः, इत्यत्र वर्तते विचारणा। ताभ्यां खादनं सर्वथा दुःशकम्, अतस्तस्य मुखे पराः दन्ताः अपि स्युः येषां साहाय्येन सः भक्षणं सम्पादयति। एवमेव लोके सामान्यतो व्यवहारेऽनुभवे च विभिन्ना सरणिः समालम्ब्यते। तदेवं वक्तुं शक्यते—जीवनस्य द्वौ पक्षौ विद्येते—एकः आदर्शरूपः द्वितीयश्च यथार्थरूपः। वस्तुतोऽयं निबन्धः व्यंग्यात्मकः, विदुषा लेखकेन स्वीयेऽस्मिन् निबन्धे यस्य व्यंग्यस्य विश्लेषणं कृतं, तत्तु सहृदय-हृदयगम्यम्। शशिशेखरशास्त्रिमहोदयस्य 'हस्तिदन्ताः' इति विषयमवलम्ब्य प्रदत्तस्य भाषणकौशलेन यथा लोकाः अत्यन्तं प्रभाविता अभवन्तथैव लोके केवलं भाषणपटूनां जनानां शब्दविच्छित्या कथं समाकृष्टाः न भवन्ति, तस्य वैदुष्यंच स्वीकृत्य केवलं तमेव कथं न विद्वत्तल्लजमामनन्ति। यद्यपि श्रीशशिशेखरशास्त्रिमहोदयेन स्वकीये सुदीर्घे भाषणे निश्चितस्य विषयस्यैकांशोऽपि न विवेचितः, तथापि अत्यन्तं रोचकस्य स्वस्वप्नवृत्तान्तस्य कथामिषेण आकर्षकशैल्यां समुपस्थापनं हस्तिदन्तता-विवेचने सर्वथा समर्थं प्रतिभाति।

**14. चन्दनमुनिकृतं पद्यसाहित्यम्**

श्रीसत्यव्रतशास्त्रिमहोदयेन त्रयोदश-चतुर्दश शताब्दिकानां जैन-विदुषां संस्कृतसाहित्ये योगदानमिति विषयमवलम्ब्य एकः शोधप्रबन्धो लिखितः। तत्र च श्रीचन्दनमुनेरपि विश्लेषणं वर्तते। तं विषयमधिकृत्य तस्य मुनेः व्यक्तित्वं कृतित्वंच विवेचयितुकामेन विदुषा लेखकेनास्मिन् निबन्धे केवलं तस्य पद्य-साहित्यस्य समालोचनात्मकं सोद्धरणं प्रस्तुतीकृतम्। तस्य कृतिषु संवरगुप्तेयस्य गीतिकाव्यस्य, शतक-काव्यकेषु प्रास्ताविश्लोकशतकम् अनुभवशतकंचेति काव्यद्वयस्य, वर्धमान-शिक्षासप्तशत्याः, उपदेशामृतकाव्यस्य, प्रकीर्णकुसुमांजलेश्च सोद्धरणं विवेचनमत्र उपस्थापितमिति शोधसूचनाप्रदानार्थं निबन्धकाय शुभाशंसनम्।

## 15. पर्वणीकरोपाह्व श्रीसीतारामभट्टविरचितं नलविलासमहाकाव्यम्

श्रीत्रिपाठिमहोदयाः साम्प्रतं श्रीसीतारामभट्टपर्वणीकरविरचितस्य नलविलासमहाकाव्यस्य सम्पादनं विधातुं शोधकर्मणि सम्प्रवृत्ताः सन्ति। जयपुरीये संस्कृतवाङ्मये श्रीपर्वणीकरमहोदयानां महत्त्वपूर्णं स्थानं वर्तते, नात्र कापि संशीतिः। अप्रकाशितस्यास्य महाकाव्यस्य सोद्धरणं विवेचनं कृत्वा विदुषा लेखकेन अन्येषां शोधकर्मपराणां विदुषामपि साहाय्य कृतम्। द्वात्रिंशत्सर्गात्मकेऽस्मिन् महाकाव्ये पुण्यश्लोकस्य राज्ञो नलस्य कथा विवेचिता वर्तते। महाभारतस्य नलोपाख्यानात् कथांशमुद्धृत्य कविना स्वपाटवेन अस्य रचना कृता वर्तते। नलकथाप्रस्तोतृणां काव्यानां परम्परासु श्रीहर्षस्य नैषधीयचरितात् परतः अस्य महाकाव्यस्य महत्त्वपूर्णं स्थानं निश्चेतुं शक्यते। निबन्धोऽयं सर्वतः पूर्वं पर्वणीकरमहोदयस्य जीवनवृत्तं व्यक्तित्वं च विवेचयति, परतश्च नलविलासमहाकाव्यस्य काव्यशास्त्रानुसारि सोद्धरणं विवेचनमुपस्थापयति।

## 16. भवभूतेर्नाटकेषु स्वप्नविश्लेपणम्—

श्रीमती उपागोस्वामी अमुं निबन्धविषयमधिकृत्यैव शोधप्रबन्धं समुपस्थापितवती, यथाशीघ्रं पी-एच. डी. इत्युपाधिना समलंकृता भवितेति ज्ञायते। शोधनिबन्धेऽस्मिन् श्रीमत्या पूर्वं मनोविश्लेपणस्य सिद्धान्तानाम् उपस्थापनं कृतं, परतश्च तदनुसारि भवभूतेर्नाटकानां विश्लेषणं सम्पादितम्। नाटकेष्वपि केवलमुत्तररामचरितस्य तत्रापि च केवलं भगवत्याः सीतायाः स्वप्नस्य विश्लेषणं समीचीनतया प्रतिपादितं वर्तते। नूतनदृष्ट्या प्रस्तुतोऽयं निबन्धो वस्तुतः श्लाघ्यः।

## 17. राजस्थानस्य संस्कृतलहरीकाव्य-परम्परा

शोधकर्मणि प्रवृत्तेन श्रीकृष्णचन्द्रशर्मणा लिखितोऽयं निबन्धः मुक्तककाव्यविधायाः लहरीकाव्याभिधानायाः परिचयं प्रस्तौति। शर्मणा स्वीयेऽस्मिन्निबन्धे विशेषतः दशाधिकाना राजस्थानीय-लहरीकाव्यकाराणां परिचयः, तेषां कृतित्वविषये च संसूच्य तत्तत् लहरीकाव्यस्योद्धरणपूर्वकं विवेचनं प्रस्तुतीकृतम्। श्रीशर्ममहोदयः राजस्थानस्य स्वातन्त्र्योत्तर गद्यसाहित्यमिति विषयमवलम्ब्य शोधकर्मणि संप्रवृत्तो वर्तते।

एवं निबन्धसंग्रहेऽस्मिन् सप्तदशनिबन्धकाराणां निबन्धानां संकलनं विधाय सुरभारती-समुपासकानां विदुषां कृते समर्पयन्नहं मुदमावहामि। अन्येऽपि केचन निबन्धकाराः साग्रहं सादरं च निवेदनपुरस्सरं संसूचिता आसन्, परं तैः स्वकीयैर्निबन्धैः नानुगृहीतोऽयं जन इति संसूचयन् यैः स्वनिबन्धप्रेषणेन अनुगृहीतोऽयं जनः, तान् प्रति साभारं धन्यवादानर्पयामि। ते नैरन्तर्येण आकल्पान्तं सुरभारतीसमुपासनायां निरता भवेयुरिति शुभाशंसनपूर्वकं तेषां सुस्वास्थ्यसम्पत्तये भगवन्तं भूतभावनं भवं प्रार्थये।

राजस्थान-साहित्य-अकादम्याः अध्यक्षमहोदयेभ्यो निदेशकमहोदयेभ्यो अन्येभ्यश्च सहायकेभ्यः सप्रश्रयं धन्यवादान् वितरामि, यैरियं निबन्ध-संकलनयोजना स्वीकृता, अहं चास्मिन्कर्मणि नियोजितः। दुःस्वास्थ्याद् अन्यकर्मणि व्यापृतत्वाच्च नाहमशकं सम्पादनकार्यं समये एव समापयितुमिति भृशं दोदूयते चेखिद्यते चेतः। आशासे सर्वेऽपि मां क्षमिष्यन्ते इति।

अस्य सम्पादकीयवक्तव्यस्य लेखनं मया पञ्चवर्षपूर्वमकारि। तदाहं राजस्थान साहित्य अकादम्याःसस्कृतसमितेः संयोजकमासम्। परतश्च राजस्थान सर्वकारेण राजस्थानप्रान्ते स्वतन्त्रता "संस्कृत अकादमी" संस्थापिता। साहित्य अकादम्या सोऽयं निबन्धसंग्रहः तत्र प्रकाशनाय संप्रेषितः। राजस्थान-संस्कृत-अकादम्याः अध्यक्षमहोदयैः डा. मंडनमिश्र महाभागैः अस्य प्रकाशनं स्वीकृतमिति समिति उरस्सरासोऽपि अभिनन्दनीयाः धन्यवादार्हाश्चेति निवेदयति—

विनयावनतः विदुषां चरणचञ्चरीकः
डॉ. प्रभाकर शास्त्री

---

# "साहित्यदर्शनस्य समीक्षा"

—गंगाधर द्विवेदी

(यू. जी. सी. प्रोफेसर-संस्कृत विभाग, राज. विश्वविद्यालय)

काव्यालङ्कारः, काव्यानुशासनं, काव्यालङ्कारशास्त्रमिति चिरन्तनैः भामहादिभिराचार्यैरभिधीयमानं ततश्च काव्यपदप्रवृत्तिनिमित्तं पुरस्कृत्य स्वारस्यबुद्ध्या अर्वाक्तनैः विश्वनाथकविराजप्रभृतिभिः साहित्यशास्त्रमिति व्यपदिश्यमानमिदं साहित्यदर्शनं शास्त्रान्तरसमानकक्षं वेदाङ्गोपाङ्गसमान-कालिकमिति पुरातत्त्वविदामुद्घोषः। ततश्चेदं दर्शनं कस्यापि शास्त्रविशेषस्य अनुयायि पुच्छभूतमङ्गं वा भवितुमर्हति इत्यपि प्रमाणान्तरनिरपेक्षम्। यत अनेनैव दर्शनेनाविष्कृतः, प्रतिभातः, सिद्धान्तरूपेण वादिप्रतिवादि-मतोपमर्दपूर्वकं संस्थापितश्चायं काव्यजीवनाधायको व्यङ्ग्यरूपोऽर्थः। यो हि इतः प्राक् काव्यतत्त्वार्थभावनाविमुखानां वाच्यवाचकलक्षणामात्रकृत-श्रमाणां शब्दार्थशासनविदां नैव प्रतिपत्तिपथमवातरत्। एवमेव मीमांसादि-शास्त्रैरनभ्युपगतस्यापि स्फोटकवादस्य यथायथं व्यवस्थापनात् तथा न्याया-दिदर्शनैर्विसंवादे सत्यपि व्यञ्जनावृत्तेरारोहणाच्च स्वतन्त्रसत्ताकमिदं साहित्यदर्शनमिति पर्यवस्यति।

अतएव चास्य महत्त्वमुद्गिरन्तः प्रशंसन्ति विवेचकाः—

'प्रशस्तेर्यः पात्रं, तिलकयति यं सूक्तिरचना,
य आद्यः स्वादूनां श्रुतिचुलुकलेह्येन मधुना।
यदात्मानो विद्याः, परिणमति यश्चार्थवपुषा,
स गुम्फो वाणीनां सहृदयनिषेव्यो विजयते॥"

अथ चेदं दर्शनं समीक्षादृष्ट्या द्विधा विभक्तुं शक्यते—

एकतः काव्यरचनापद्धतेर्विकाशः, यो हि गतानुगतिकेन वर्त्मना प्रचलन्नपि यतोत्तरं सौष्ठवं भजन् स्पृहणीयस्योत्कर्षस्य परां काष्ठामानीतः।

अपरतश्च शब्दार्थयोजनापरिष्कारेण सह काव्यशरीरे उत्कर्षाधायकानां जीवनाधायकानाञ्च विषयवस्तूनां अन्तरङ्गबहिरङ्गभावेन परीक्षणानन्तरं शास्त्रोद्दिष्टसरण्या स्वस्वप्रतिभोन्मेषेण काव्यान्तर्निहितस्य तत्त्वरूपेण समाहृतस्य च रसस्वरूपस्य विभिन्नाभिभाषाभङ्गीभिः समालोचनं तन्निर्यासश्च प्रतिफलति ।

एतन्मूलक एव चात्र प्रयुज्यमानः अलङ्कारशास्त्रस्य पूर्वानुवृत्तः कालगणनाक्रमः । यो हि रचनापद्धतिमाधारीकृत्य प्रवृत्तोऽपि प्राणप्रदं उत्कर्षमावहन्—अलङ्कारसम्प्रदायः, रीति-सम्प्रदायः, रससम्प्रदायः, ध्वनिसम्प्रदायः, वक्रोक्तिसम्प्रदायः, औचित्यसंप्रदायश्चेति यथायथं नानाभूमिकाप्रतिपन्नो व्यवहारभूमिमलङ्करोति ।

या चात्र सम्प्रदायशब्दस्य योजना दृश्यते साऽपि तस्य परम्परागतमहत्त्वमेवाख्याति-इति सम्प्रदायशब्दस्य निर्वचनोऽपि स्पष्टं प्रतीयते । सम्प्रदीयते गुरुपरम्परातो यस्मै शिष्याय स एव सम्प्रदाय इति परिभाष्यते । अतश्चिरन्तनतमोऽयं काव्यमार्गः प्रतिभाशालिभिः नवनवैर्विशेषैः संयोजितः कामप्यद्भुतां काव्यविच्छित्तिमाविष्करोति । ततश्च परम्परायातः कविरचनाप्रवाहः विविधैः सम्प्रदायैराश्लिष्टः स्वस्वप्रतिभासाक्ष्येण अनेकधा प्रवहन् सामाजिकानाह्लादयतीति साहित्यविदामनुभवः । ततश्चैषां सम्प्रदायानामनुसरणं न कथञ्चिदपि वाच्यताकोटिमानेतुं शक्यते इत्यपि निष्पन्नम् । परं हन्त, सांप्रतिकेऽस्मिन् युगे सम्प्रदायशब्दोऽयं अन्यथान्यथानीयमानारूढिदुश्चक्रपतितः, एकान्ततो धर्मक्रोडपङ्के निमग्नः, धर्मध्वजैराक्रान्तः विषमां दशामनुभवति इति किं क्रियताम् ? यद् भवतु तद् भवतु । वयन्त्वत्र श्रद्धावन्तो वाच्यार्थोचितामास्थामेव बिभृमः ।

व्यापकपरिप्रेक्ष्येण सह कविकर्मणि परीक्ष्यमाणे सर्वासामेव अष्टादशप्रस्थानभिन्नानां विद्यानामत्र सहभावः समवाप्यते । उक्तं च भामहेन—

"न स शब्दो न तद्वाच्यं न स न्यायो न सा कला ।
जायते यन्न काव्याङ्गमहो भारो महान् कवेः ॥"

अपि च–कविवचनायत्ता खलु लोकयात्रा । सा च निःश्रेयसमूलम् ।
यदाह भामहः

'काव्यमय्यो गिरो यावच्चरन्ति विशदा भुवि।
तावत्सारस्वतं स्थानं कविरासाद्य मोदते ॥'

'वल्मीकजन्मा स कविः पुराणः,
कवीश्वरः सत्यवतीसुतश्च।
यस्य प्रणेता तदिहानवद्यं,
सारस्वतं वर्त्म न कस्य वन्द्यम् ॥'

साहित्यस्य विश्वजनीनतामावेदयन्ती मत्पितामहचरणानां म०म०-श्री दुर्गाप्रसादद्विवेदानामियमुक्तिरप्यत्रार्थे विभाव्यतामर्हति—

'स्वस्वाभिलापादिव यत्र सर्वे,
विद्याविलासा मिलिता लुठन्ति।
सल्लोकवैदग्ध्यविधानयन्त्रं,
साहित्यतन्त्रं कलयन्ति कल्याः ॥'

तदेवमिह साहित्यदर्शनस्य दर्शनान्तरेभ्यो वैशिष्ट्यं प्राचामर्वाचाञ्च परःशतानां प्रबन्धानां सूक्तीनाञ्च निभालनेन च व्यक्ततरमवसीयत इति। किमत्र बहुना निदर्शनप्रयासेन।

अथेदं प्रस्तूयते यत् काव्यसौन्दर्यं तत्रानुस्यूतं विषयजातं च विभिन्नेषु देशकालेषु कविभिरुपवर्णितं वस्त्वलङ्काररसतत्त्वात्मना परिगृह्यमाणं आलंकारिकपरिषदा च हृदयसंवादेन सह सूक्ष्मतर-तम-प्रणाल्या विभावितं अनेकत्वेन प्रतिभासमानमपि मौलिकरूपेण एकात्मतां प्रतिपन्नं अक्षुण्णमेव प्रतिपत्तव्यम्। यदि लोकहृदयावर्जनेन सह रसानुभवः काव्यतत्त्वस्य अवलम्बभूतः सर्ववादिसंमतश्च स्वीक्रियते तदा 'बहुधाप्यागमैर्भिन्नाः पन्थानःसिद्धिहेतवः' इति महाकवेः कालिदासस्य सूक्तिमनुसरता अथवा पुष्पदन्तचार्यस्य—

'रुचीनां वैचित्र्याद् ऋजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव।''

इति महिम्नस्तव-पद्यभावनया न कस्यापि विसंवादप्ररोहस्य अवसरः समुदेति। 'वाग्वैदग्ध्यप्रधानेऽपि रस एवात्रजीवितमिति मन्यमानः वक्रोक्ति-

जीवितकारोऽप्यत्र संवादीभवन् मूलभूतस्य रसतत्त्वस्य एव प्राधान्यमङ्गी-करोति। अत्र च समानरूपेण यदि सर्वेषां विचारकधुरन्धराणामैकमत्य-मासाद्यते तर्हि को विसवादः, का वा विप्रतिपत्तिरूपस्याप्येत ? केवलया बाह्यविचारभङ्ग्यैव आपाततो भेदालोके साहित्यशास्त्रे विविधानां संप्रदाया-नामुदयमुद्दिश्य 'अलंकारसर्वस्वस्य' टीकाकारेण समुद्बन्धनेन यदुल्लिखितं तस्यायमंशोऽपि तत्त्वदृष्टिमेवाक्षिपति—

'इह विशिष्टौ शब्दार्थौ काव्यम्' तयोश्च वैशिष्ट्यं व्यापारमुखेन धर्ममुखेन व्यङ्ग्यमुखेन चेति त्रयः पक्षाः। आद्येऽलंकारतो गुणतो वेति द्वैविध्यम्। द्वितीयेऽपि भणितिवैचित्र्येण भोगकृत्त्वेन वेति द्वैविध्यम्। इति पञ्चसु पक्षेष्वाद्यः उद्भटादिभिरङ्गीकृतः, द्वितीयो वामनेन, तृतीयो वक्रो-क्तिजीवितकारेण, चतुर्थो भट्टनायकेन पञ्चमो आनन्दवर्धनेन।'

अदसोयलेखस्यायं फलितार्थः—विशिष्टशब्दार्थयोरेव काव्यत्वम्। तयोर्वैशिष्ट्यं च त्रिधा संभवति धर्मेण, व्यापारेण, व्यङ्ग्येन चेति। तत्र धर्मोत्थं वैशिष्ट्य नित्यानित्यधर्माभ्यां द्विविधम्-तत्र नित्यधर्मान्तिर्गतः गुणसंप्रदायो रीतिसंप्रदायो वा। अनित्यधर्मान्तिर्गतं अलंकारसंप्रदायः। व्यापारोत्थोऽपि वक्रोक्ति–भोजकत्वाभ्यां द्विविधः, तत्र भट्टनायकोक्तं भोज-कत्वं तु रससंप्रदायान्तर्गतं मन्तव्यम।

व्यङ्ग्यमुखेन काव्यवैशिष्ट्यवादी ध्वनिसंप्रदायस्य आचार्यो आनन्द-वर्धनः। अनेन ध्वनिविरोधिना त्रयाणामपि मतानां सम्यक् खण्डनं विधाय स्वतन्त्रो ध्वनिसिद्धान्त स्थापितः। तत्र अभावादिषु त्रयो लघुसम्प्रदायाः। केचन एकान्ततो गुणालङ्कारादीन् काव्योपकरणतया स्वीकृत्य ध्वनिसत्तां सर्वथैव तिरस्कुर्वन्ति। अपरे अलंकारोदरे ध्वनिं समावेशयन्ति। अन्ये भक्तिवादिनश्च लक्षणयैव गतार्थो ध्वनिरिति मन्यन्ते। ये च अनिर्वचनीयत्वं ध्वनितत्त्वस्य संश्रयन्ते तेऽपि प्रत्युक्ताः ध्वनिकृता।

तदित्थं भामहादारभ्य पण्डितराजपर्यन्तं काव्यविधासु रसप्राधान्यं मन्यमानानां आलंकारिकाणां ऐकमत्ये वस्तुस्थापनधिया न पर्यनुयोगसंक्रान्त-शरीरतो प्राधान्यपक्षपातिनी बहिरङ्गयोगिनी दृष्टिः योग्या प्रतिभाति। अवशिष्यते च प्रकारभेदः, स तु वस्तुस्वभावाश्रितः ऊहापोहविचारणासु

भूयस्तरां प्रतिष्ठो न कथञ्चिदपि प्रत्याख्यातुं शक्य इति पूर्वतनाचार्यमतेन सह इदानीमवधि प्रवृत्तेन नूतनविचारसंरम्भेणापि मुहुरुक्तप्राय एव द्रष्टव्यः।

ध्वनिवादिनां नये रसो न वाच्यः, न च तात्पर्य्यम्, न वा लक्ष्यः किन्तु व्यङ्ग्य एवं इत्यनेकधा विवेचनपुरस्सरं निर्णीतम्। एवं वस्त्वलङ्कार-रसादिध्वनयोऽपि व्यङ्ग्यकक्षोद्राग्नातिरिच्यन्ते। अलंकारसर्वस्वकारेण 'प्राञ्चः प्रतीयमानमर्थं अलंकारपक्षनिक्षिप्तं मन्यन्त इत्यभिदधता तेषां मतान्युपस्थाप्य यद् विवृतं तदत्र दृष्टिपातमपेक्षते। अतस्तन्मतनिष्कर्षोऽपि संक्षेपत अत्र पर्यालोचनीयः—

भामहादयः पर्यायोक्त-अप्रस्तुतप्रशंसा-समासोक्ति-आक्षेप-व्याजस्तुति-उपमेयोपमा-अनन्वयादौ वस्तुमात्रं गम्यमान वाच्योपस्कारकतया 'स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम्, इति यथायोगं अर्थात् क्वचित् वाच्यार्थः स्वसिद्धये परं प्रतीयमानमर्थमुपक्षिपति, क्वचिच्च स्वयमनुपपद्यमानः सन् प्रतीयमाने एवार्थे स्वं समर्पयति इति द्विविधया भङ्ग्या प्रत्यपादयत्। तथा हि—

'अधाक्षीद्यो लङ्कामयमयमुदन्वन्तमतरद्,
विशन्त्यां सौमित्रे रयमुपनिनायौषधिवनाम्।
इति स्मारं स्मारं त्वदरिवलभीचित्रलिखितं,
हनूमन्तं दन्तैर्दशति कुपितो राक्षसगणः॥'

इति पर्यायोक्ते राक्षसवृत्तान्तो वाच्यः सन् स्वसिद्धये परं कारणरूपं अरिपलायनाद्याक्षिपति। तत्पलायनाद्यन्तरेण राक्षसवृत्तान्तस्य असंगतेः। एवमन्यदपि योजनीय रुद्रटेन तु—

'यस्य विकारः प्रभवन्नप्रतिबद्धेन हेतुना येन।
गमयति तदभिप्रायं तत्प्रतिबद्धं च भावोऽसौ॥'
ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम्।
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया॥ इति॥

'अभिधेयमभिदधानं तदेव तदसदृशगुणदोषम्।
अर्थान्तरमवगमयति यद्वाक्यं सोऽपरो भावः॥'

'एकाकिनी यदबला तरुणी तथाहृ—
मस्मद्गृहे गृहपतिश्च गतो विदेशम्।
कं याचसे तदिह वासमियं वराकी,
श्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ ।।' इति च।।

एवं भावालंकारद्वयं सोदाहरणं गुणीभूत–अगुणीभूतविषयत्वेन द्विधा एव अभिहितम्। अथवा पूर्ववदुपादानलक्षणलक्षणाभ्यां द्वैविध्यम्। तथा च प्रथमे स्वसिद्धये पराक्षेपः, द्वितीये अपरार्थं स्वसमर्पणम्। तथा रूपक-दीपक-अपह्नुति-तुल्ययोगितादौ उपमालंकारो वाच्योपस्कारकतया प्रतिपादितम्। तत्र रूपकं यथा—

भीमभ्रूकुटिपन्नगीफणमणिः कामस्य चण्डं चिता,
कुण्ड कुण्डलितेन्दुनालवलयं प्रभ्रंशि रक्तोत्पलम्।
घ्राणस्फाटिकमल्लिकापरिचिते भालाग्रशालांजिरे,
दीप्ता दीपशिखा शिवस्य नयनं कार्शानवं पातु नः ।।

अत्र नयनादीनामुपमा वाच्योपस्काराय अवगम्यते। तां विना सादृश्यस्य अप्रतीतेः। एवमग्रेऽपि। उत्प्रेक्षा तु रसभावादिवच्यिहेतुत्वेन निरुक्तः। तदेवं त्रिविधमपि प्रतीयमानं अलंकारतया ख्यापितम्।

वामनेन तु—'सादृश्याल्लक्षणा–वक्रोक्तिः' इति सादृश्यनिबन्धनाया लक्षणाया वक्रोक्त्यलंकारत्वं ब्रुवता काश्चिद् ध्वनिभेदोऽलंकारतयैवोक्तः।

उद्भटादिभिस्तु गुणालंकाराणां प्रायशः साम्यमेव सूचितम्। विषयमात्रेण भेदप्रतिपादनात् संघटनाधर्मत्वेन चेष्टेः। भिन्नकक्ष्याणां हि उपस्कार्योपस्कारत्वस्य अनुपपत्तेः। तथात्वे च अलंकाराणामपि गुणोपस्कार्यत्वं प्रसज्यते समानन्यायात्। तथा च औद्भटा गुणालंकाराणां तुल्यत्ववादिन इति निष्पन्नम्।

आचार्यकुन्तकस्तु वैदग्ध्यभङ्गीभणितिस्वभावां बहुविधां वक्रोक्तिमेव प्राधान्यात् काव्यजीवितमुक्तवान्। कविप्रतिभोल्लिखितस्य काव्यस्य प्राधान्यं च प्रतिपादितवान्। अभिधानप्रकारविशेषा एवं चालंकाराः। सत्यपि त्रिभेदे प्रतीयमाने व्यापाररूपा भणितिरेव कविसंरम्भगोचरा। उपचार-

वक्रतादिभिः समस्तोऽपि ध्वनिप्रपञ्चः स्वीकृतः। केवलं उक्तिवैचित्र्य-जीवितं काव्यं न व्यङ्ग्यप्रतीतिजीवितमिति तदीयं दर्शनं व्यवस्थितम्।

भट्टनायकेन तु व्यङ्ग्यव्यापारस्य प्रौढोक्त्या अभ्युपगमस्य काव्यांशत्वं ब्रुवता न्यग्भावितशब्दार्थस्वरूपस्य कविकर्मणः प्राधान्यमुक्तम्। तत्रापि अभिधाभावकत्वं लक्षणव्यापारधर्मोत्तीर्णो रसचर्वणात्मा भोगापरपर्यायो व्यापारः प्राधान्येन विश्रान्तिस्थानतया स्वीकृत इति यथायथं तदुक्तिभिर्विज्ञायते :—

ध्वनिर्नामापरो योऽपि व्यापारो व्यञ्जनात्मकः।
तस्य सिद्धेऽपि भेदे स्यात् काव्यांशत्व न रूपिता ।।
शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग् विदुः।
अर्थतत्त्वेन युक्तं तु वदन्त्याख्यानमेतयोः ।।
द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यधीर्भवेत्।
अभिधा भावना चान्या तद् भोगीकृतिरेव च ।।
अभिधाधामतां याते शब्दार्थालङ्कृती मतः।
भावनाभाव्य एषोऽपि शृङ्गारादिगणो मतः ।।
तद्भोगीकृतिरूपेण व्याप्यते सिद्धिमान्नरः।
दर्शयमानोऽथवा मोक्षे यास्यत्वङ्गमिति स्फुटम् ।।' इति।

तदेवं प्रतीयमानस्वरूपं स्वस्वभावानुरूपं अन्यथान्यथा व्याख्यातमपि परिणामतः लक्ष्यबिन्दुं नातिक्रमति। प्रकारविशेषमाश्रित्यापि तत्त्वदृष्ट्या समन्वयस्य स्थापनायां च न कश्चिदवरोधः सङ्गच्छते।

पूर्वोक्तेषु संप्रदायेषु रससम्प्रदायो विशिष्य अस्माकं लक्ष्यभूतो दृश्यते। यतः 'विभावानुभावव्यभिचारिसंयोगात् रसनिष्पत्तिः' इति भरत-सूत्रस्य स्वस्वप्रतिभानुसारेण व्याख्यां कुर्वद्भिः अनेके पक्षाः प्रस्तूयन्ते। किन्तु भट्टलोल्लट-भट्टशङ्कुक-भट्टनायक-आचार्याभिनवगुप्तान्ताश्चत्वारः पक्षा एव मुख्यभूताः विचारकैरादृताः समभवन्। तत्र संयोगादिति सूत्र-प्रयुक्तया पञ्चम्या एव विभावानुभावव्यभिचारिणः समूहालम्बनतया रसं प्रति हेतुतां प्रतिपन्नाः तथा च शब्दोपहितरूपाणां विभावादीनां व्यापारात् उत्पाद्योत्पादक-गम्यगमक-पोष्यपोषक-व्यङ्ग्यव्यञ्जक भावा एव यथाक्रमं वादिभिराहृताः। अथापि पूर्वप्रतिपादितेषु त्रिष्वपि पक्षेषु तत्र तत्र विसंगतिं अनुपपत्तिं चोद्भाव्य पर्यन्ते व्यङ्ग्यव्यञ्जक पक्ष एव बहु-सम्मतः सिद्धान्तरूपेण समादृतश्च।

इत्थमत्र समासतो विचारप्रक्रियायां निर्व्यूढायां ध्वनिसंप्रदायः सर्वानप्यतिशेत इति तत्त्वचिन्तकानामयमेव पक्षः सुतरां हृदयङ्गमो युक्तियुक्तो व्यङ्ग्यस्वरसानुकूलश्चेति निष्प्रत्यूहं फलितम्।

इयता तत् तत् सन्दर्भदृष्टिमाक्षिप्य प्रस्तुतेन विचारेण साहित्यदर्शनस्य महतो विचारसमृद्धिः तत्त्वानुसन्धानसहचरी भवन्ती कविमार्गस्य शब्दार्थपुरस्कृतस्य कमप्यतिशयमहिमानं गौरवमाख्यापयति।

संप्रति रचनाधर्मितायां विवेचितुमुपक्रान्तायां कविकर्मणः सौष्ठवमाधाय यद्वक्तव्यं तदपि संक्षेपतः साररूपेण इहोपस्थाप्यते— आचार्यभामहेन सूत्ररूपेणाङ्कुरिते ध्वनिकारेण च—

'अनौचित्यादृते नान्यत् रसभङ्गस्य कारणम्।
प्रसिद्धौ चित्यबन्धस्तु रसस्योपनिषत्परा॥

इत्याद्युक्तिभिः सम्पोषितः सोऽयमौचित्यवादः पूर्वतः परिचयमागतोऽपि-प्रसुप्तकल्प इव संजज्ञे। तदनन्तरे महाकविक्षेमेन्द्रस्य प्रतिभाप्रभावमारूढः औचित्यसंप्रदाय नाम्ना प्रवृत्तः। सोऽयं वस्तुतः सर्वतो बलवत्तरो हृदयङ्गमश्च भवन् विचारकान् अधिकमाकर्षति। यतोऽत्र औचित्यवादे पुरस्कृते काव्यस्य अन्तरङ्ग-बहिरङ्गभाजां विषयाणां समावेशः महते काव्यसौन्दर्याय प्रभवति इति न स्तोकोऽपि संशयावसरः। औचित्यं पुरस्कुर्वतस्तस्योक्तिषु कियत्स्वारस्यं प्रतिबिम्बितमिति विलोक्यताम्—

'काव्यस्यात्ममलंकारैः किं मिथ्यागणितैर्गुणैः।
यस्य जीवितमौचित्यं विचिन्त्यापि न दृश्यते॥
अलंकारास्त्वलंकारा गुणा एव गुणाः सदा।
औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम्॥'

किमियता—

'उचितस्थानविन्यासादलंकृतिरलंकृतिः।
औचित्यादच्युतानित्यं भवन्त्येव गुणा गुणाः॥'
'उचितं प्राहुराचार्याः सदृशं किल यस्य यत्।
उचितस्य च यो भावस्तदौचित्यं प्रचक्षते॥'

एवमस्य महाकवेः औचित्यसंविधानकं अतितरं स्पृहणीयं काव्य-प्रतिभाया-निर्मलीकरणाय च महदुपयुक्तमिति न कस्यापि विचारकस्य विमतं भवेत्। वस्तुतः काव्यविधायाः उत्कर्षारोहणे, व्यवहारतश्च विविध-सम्प्रदायानां समन्वयपूर्वकं सरलीकरणे, काव्यसौष्ठवस्य च उत्कर्षकक्षा-धिरोहणे अस्य भूयान् योगः प्राप्यते।

काव्यविद्यायाः साहित्यशास्त्रस्य च शिक्षणे-प्रशिक्षणे चास्य भूयसी-मुपयोगितां दृष्ट्वा अस्य सम्प्रदायस्य प्रचार-प्रसारः सर्वथा प्रोत्साहनार्हः सिद्ध्यति। एतन्मार्गानुसरणे च न कश्चित् विसवादः प्रत्यवायो वा दृष्टि-गोचरीभवति। प्रत्युत काव्यसपत्तेः अनवद्यं सौन्दर्यमधिगतं भवेत्। प्रायेण प्रसिद्धानामालंकारिकाणां काव्यतत्त्वविवेचनासु यावानभिवेशो दृश्यते न तावान् संरम्भो रचनामधिकृत्य तत्सौन्दर्यप्रसाधनाय इति विदन्त्येव साहित्यरसिकाः। परं कविशिक्षाविषये मूर्धन्यभूतः कविराजो राजशेखरः प्राथम्येन दृष्टिपथमवतरति। यो हि काव्यमीमांसायां काव्यशिक्षाया रहस्यार्थबहुलां प्रमेयमांसलां सूक्ष्मतमा च प्रक्रियां स्फीतस्फीतां विविच्य काव्यवर्त्मनि प्रवेष्टुमभिनन्दनीयं प्रयासं विदधे। अस्मिन् प्रस्तावे तस्य सन्दर्भग्रन्थो दर्शनार्हः—

'गृहीतविद्योपविद्यः काव्यक्रियायै प्रयतेत। नामधातुपारायणे, अभिधानकोशः, छन्दोविचितिः, अलंकारतन्त्रं च काव्यविद्याः। कलास्तु चतुःषष्टिरूपविद्याः। सुजनोपजीव्यकविसन्निधिः, देशवार्ता, विदग्धवादो, लोकयात्रा, विद्वद्गोष्ठ्यश्च काव्यमातरः पुरातनकविनिबन्धाश्च।'

किञ्च—

'स्वास्थ्यं प्रतिभाभ्यासो भक्तिर्विद्वत्कथा बहुश्रुतता।
स्मृतिदार्ढ्यमनिर्वेदश्च मातरोऽष्टौ कवित्वस्य॥'

(काव्य मी. १० अ)

महाकविः क्षेमेन्द्रोऽपि काव्यक्रियायामुपदेश्यान् प्रतिपथप्रदर्शनं कुर्वाणः अल्पप्रयत्नसाध्यः, कृच्छ्रसाध्यः, असाध्यश्चेति त्रिधा विभागमकरोत्। तत्र कवित्वसंस्कारशीलः कविकर्मणि अल्पप्रयासेन साफल्यं लभते। किंतु कवित्वशक्तेः संवर्धनोपायास्तेनापि परिपालनीया भवन्ति। यथा—

'कुर्वीत साहित्यविदः सकाशे श्रुतार्जनं काव्यसमुद्भवाय।
न तार्किकं केवलशाब्दिकं वा कुर्याद् गुरुं सूक्तिविकासविघ्नम्॥

विज्ञातशब्दागमनामधातुश्छन्दोविधाने विहितश्रमश्च।
काव्येषु माधुर्यमनोरमेषु कुर्यादविघ्नः श्रवणाभियोगम्॥

गीतेषु गाथास्वथ देशभाषाकाव्येषु दद्यात् सरसेषु कर्णम्।
वाचां चमत्कारविधायिनीनां नवार्थचर्चासु रुचिं विदध्यात्॥
रसे रसे तन्मयता गतस्य गुणे गुणे हृष्टवशीकृतस्य।
विवेकसेकस्वकपाकभिन्न मनःप्रसूते ऽङ्कुरवत्कवित्वम्॥

अत्र कविना स्वानुभवेन परीक्षितः प्रकार एव शिष्यशिक्षायै समुपनिबद्धः वस्तुनः उपादेयः, अनुकरणीयश्चेति। अन्तिमौ द्वौ तु मन्दप्रयोजनतया नात्र लक्ष्यभूतौ।

हरविजयाख्यमहाकाव्यस्य प्रणेता काश्मीरको महाकविः रत्नाकरस्तु स्वकीयकाव्यपरिशीलनोपलब्धिः वर्णयन्नेवं प्रतिज्ञातवान्—

'हरविजयमहाकवेः प्रतिज्ञां शृणुत कृतप्रणयो मम प्रबन्धे।
अपि शिशुरकविः कविः प्रभावाद् भवति कविश्च महाकविः क्रमेण॥'

तदित्थं भारतदेशे पूर्वकालभवा काव्यविद्यासमृद्धिः परमुत्कर्षमधिगतवती इति प्राचां कवीनामालङ्कारिकाणाञ्च विविधैः शास्त्रप्रबन्धैर्निबाधमवगन्तुं शक्यते।

साम्प्रतं तु कवित्वं पाण्डित्यं वा उत्सन्नप्रायमेवावलोक्यते। क्व सन्ति ललितोक्तिचतुराः वश्यवाचः कवयः, शास्त्ररहस्यपरिष्कृतशेमुषीको विपश्चितो वा। शिक्षा-पद्धतेर्विपर्यासात् सर्वमेव अहरोत्तरं संजातम्। क्लेशेऽपि प्रयासे इदानीन्तने समये संस्कृतकाव्यप्रतिभाया अन्वेषणं दुर्लभतामापन्नम्। ये केऽपि क्वचित् कथञ्चित् कविमार्गस्यानुयायिनः पृष्ठपोषका वा तेऽपि विरला एव दृश्यन्ते। ये केचन प्रख्यत कविसंप्रदायस्य संरक्षणकामाः सत्यावश्यके छन्दोबद्धासु शब्दयोजनासु प्रवर्तन्ते तेऽपि समाजस्य औदासीन्येन उपेक्षया वा हतोत्साहारतत्तो विरताभवन्ति। किं क्रियताम्? स एष कालमहिमादुरदृष्टसंक्रमणं वा मन्तव्यं यत् स्वराज्यलाभादनन्तर

संस्कृतभाषाकवित्वस्य क्रमिको ह्रासः कल्पनातीतेन वेगेन प्रचलन् परीक्ष्यते तथापि तत्र प्रतीकारे प्रयत्नपराङ्मुखाः सांप्रतिकाः शिक्षाकर्णधारा इति महद् वैषम्यम्। एवंस्थिते क प्रतिकरिष्यति–को वा उद्धरिष्यति–इति प्रश्नो भूयोभूयः मानसमालोडयति। किन्तु कश्चन प्रतीकारो न बुद्धिमुपारोहतीति किमधिकेन दुरवस्थानिवेदनेन।

सम्प्रति संस्कृतसाहित्यक्षत्रे शनैः शनैः संक्रममाणः पाश्चात्यसाहित्यपद्धतेः प्रभावोऽपि भारतीयं साहित्यं कियदुपकरोति इत्यपि प्रश्नः समुचितं चिन्तनमपेक्षते। 'सत्यं शिवं सुन्दरमिति भारतीयस्य साहित्यस्य मूलप्रकृतिसूत्रम्। यदनुरोधेन अस्मत्पूर्वपुरुषा श्रद्धानताः सन्त निःश्रेयसाकाङ्क्षिणः गौरवपूर्वहा साहित्यसेवां समाचरन्। ऋषिभिरनुज्ञातां मौलिकीं पद्धतिं च यथावदक्षुण्णां रक्षितुं कृतप्रयत्नश्चाभूवन्। साहित्यक्षेत्रे पूर्वपश्चिमयोः मौलिकं कियदन्तरं विद्यत इति प्राच्यनव्यविचारसरणिषु दीक्षिताः सम्यक् परिचिन्वन्ति। तयोश्च परस्परमेकान्ततः समन्वयो भवेदिति दुराशामात्रम्। भिन्नप्रकृतिकस्य समन्वयायोगात्। तथा च सिद्धान्तानां चिरपरीक्षितानां युक्तितदाभासविजृम्भितैः सङ्करीकरणं न कथञ्चिदपि न्याय्यं प्रतीमः। न च तथाकरणे काश्चिदभिनवा उत्कर्षोपलब्धिः। यद् यथा तत् तथैव परिशीलितं परिशील्यमानं शोभनं भवति। स्वोत्प्रेक्षितेन साङ्कर्येण मूलव्याघात एव परिणमति। अतः सिद्धान्तसंकरः यावच्छक्यं परिहरणीय एव।

साहित्यस्य विकासस्तु सर्वेषां लक्ष्यभूतः। परं स च समुचितेन मार्गेणैव संपाद्यमानः लोकस्य हितावहो भवति न तूत्पथेन, अतो देशान्तरप्रादुर्भूतेन साहित्येन सह तावदेव आदान-प्रदानं साहित्यस्य स्वास्थ्यकरं मन्येत, यावत् तत्प्रयोगः स्वरूपव्याघाताय तद्विलोपाय वा न कल्पेत। अतश्च नूतनतत्त्वान्वेषणव्याजेन ये महान्तः तत्र-तत्र यत्नसिद्धान्तयोजनां विपरिवर्तयितुं बद्धपरिकराः साहसमनुतिष्ठन्ति ते विरमेयुरस्माद् दुर्व्यापारादिति निवेदयन्नुपसंहरामीति शिवम्।

२३, 'सरस्वती पीठ' ब्रह्मपुरी, जयपुर

# व्यञ्जनाधारताविमर्शः

**श्रीविश्वनाथमिश्रः**

वाच्यलक्ष्यतात्पर्यार्थव्यतिरिक्तस्य सहृदयतासहकृतभावनाविशेषमहिम्नाऽनुभवपथगोचरीक्रियमाणस्य विच्छित्तिविशेषाधायकस्य कस्यापि प्रतीयमानार्थस्य द्योतिका वृत्तिर्व्यञ्जना । उक्तञ्च—

विरतास्वभिधाद्यासु ययार्थो बोध्यते परः ।
सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च ॥[1]

तत्र व्यञ्जना प्रथम द्विविधा—शब्दनिष्ठा, अर्थनिष्ठा च । तत्रापि शब्दनिष्ठा व्यञ्जना अभिधालक्षणामूलत्वात् द्विविधा । यथा 'अभिधा शब्दव्यापारस्तथैव लक्षणापि शब्दस्यैवेति तन्मूलाऽपि व्यञ्जना शाब्दी एवेत्युक्तम्—

अभिधालणामूला शब्दस्य व्यञ्जना द्विधा ॥[2]

आर्थी व्यञ्जना च वक्तृबोधव्यकाक्वादीनां वैशिष्ट्यात् काव्यवासनापरिपक्वबुद्धीनां पुरो वाच्यलक्ष्यव्यतिरिक्तार्थस्य प्रतीतिहेतुर्वाच्याद्यर्थत्रयनिष्ठो व्यापारः । प्रसिद्धश्चायं तत्तदलंकारग्रन्थेषु ।

अस्याश्च व्यञ्जनायाः शब्दार्थगतत्वव्यवस्थापकावन्वयव्यतिरेकावेव स्तः । तच्छब्दसत्त्वे तदर्थप्रत्ययः तच्छब्दाभावे च न तत्प्रत्ययो यत्र, तत्र शाब्दीव्यञ्जना । यथा—"न्यक्कारो ह्ययमेव मे यदरयः" इत्यादिपद्ये "मे" "अरयः" "तापस" इत्यादिपदे. व्यक्तोऽर्थः सहृदयैरनुभूयमानः परावर्तितेषु तत्तच्छब्देषु नावतरति प्रतीतिपथमिति सर्वानुभवसिद्धं तथ्यम् ।

---

१ साहित्यदर्पणः—कृष्णमोहन शास्त्री पृ० ५३

२ तत्रैव पृ० ५५

यत्र च शब्दपरिवर्तनेऽपि तदर्थाभिव्यक्तिर्नापैति तत्रार्थीव्यञ्जनेति-विदुषामाकूतम्। 'अतिपृथुलं जलकुम्भमि' त्यादिकाव्यप्रकाशीयोदाहरणे प्रतीयमानो व्यङ्ग्यः शब्दपरिवर्तनेऽपि तथैव प्रतीयत इति तत्र व्यञ्जनाया आर्थत्वं शक्यवक्तव्यमेव। तस्मात् शब्दस्य पर्यायपरिवृत्त्यसहत्वमेव व्यञ्जनायाः शाब्दत्वे बीजम्। काव्यप्रकाशोद्योतकारास्तु 'नियन्त्रितार्थधीजनकत्वं शाब्दव्यञ्जनात्वमिति प्राचु.[१]। तद्यथा अभिधामूलव्यञ्जनामभिलक्ष्य काव्यप्रकाशे प्रोक्तम्—

अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।
सयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम्॥

दर्पणे तु एतत्समानार्थकं श्लोकान्तरं लिखितम्। एतेन ज्ञायते यद् अभिधामूला व्यञ्जना तत्रैव भवति यत्रानेकार्थकाः शब्दाः स्युः। तत्रैव नियन्त्रितायामभिधायां द्वितीयार्थप्रतीतिर्जायते व्यञ्जनया। किन्तु नियन्त्रितार्थधीजनकत्वमिति शाब्दव्यञ्जनाया लक्षणं केवलमभिधामूलामेवादाय प्रवृत्तमाहोस्वित् लक्षणामूलामप्यादाय? यदि लक्षणामूलव्यञ्जनाऽपि लक्ष्यं वर्ततेऽस्य तदा न हि "गंगायां घोष." "उपकृतं बहु तत्र किमुच्यते" इत्यादौ क्वचिदपि दृश्यते अनेकार्थकः शब्दस्तत् प्रयुक्तमभिधायां नियन्त्रणं वा। एवं स्थिते कथंकारमत्र शाब्दव्यञ्जनात्वमिति विप्रतिपत्तिः? यदि च शब्दस्य पर्यायपरिवृत्त्यसहत्वमूलकत्वेनात्र शाब्दत्वमभिप्रेतं तर्हि कुत्रचित् संभवेऽपि शाब्दत्वे 'गंगायां घोष." इत्यत्र "भागीरथ्यां घोषः" इत्युच्चार्य शब्दपरिवर्तनेऽपि शैत्यपावनत्वरूपव्यंग्यस्य तटे प्रत्यायनेन क्व गतं शाब्दव्यञ्जनायाः कृते शब्दस्य पर्यायपरिवृत्त्यसहत्वमित्यपरा विप्रतिपत्तिः। किञ्च विवक्षितान्यपरवाच्यध्वनौ भवति अभिधामूला व्यञ्जना। यतो हि तत्रैव वाच्यार्थमुपसर्जनीकृत्य व्यङ्ग्यार्थं प्रधानत्वेनावगम्यते। लक्षणामूलव्यञ्जना तु अविवक्षितवाच्यध्वनौ जायते। अत्र वाच्यमविवक्षितमेवावतिष्ठते। वाच्यार्थस्याविवक्षा च द्विधा, तस्यात्यन्तं तिरस्कारेणार्थात् त्यागेन तथा अर्थान्तरे तस्य संक्रमणेन च। तत्राविवक्षितवाच्यस्य ध्वनेरर्थान्तरसंक्रमितवाच्ये प्रयोजनवत्युपादानलक्षणामूला व्यञ्जना। "त्वामस्मि वच्मि" इत्यादिपद्ये सम्बोध्यमुद्दिश्य वक्तव्यविषय-

---

१. काव्यप्रकाश बालबोधिनी पृ० ६०

कथनेनैव सिद्धे पुनः "त्वामस्मि वच्मि" इति कथनमनुपयुक्तमिति उपदेश्यं त्वाम् आप्तोऽहमुपदिशामीत्यर्थो लक्ष्यते । तेन च व्यञ्जते हितसाधनत्वम् ।

अस्यैव ध्वनेरत्यन्ततिरस्कृतवाच्ये "उपकृतं बहु तत्र किमुच्यते" इत्यादि पद्ये उपकारादयः शब्दा विपरीतलक्षणया अपकारादीन् लक्षयन्ति । अपकारातिशयश्च तत्र व्यङ्ग्यः । अत्रोदाहरणेषु अभिधया शब्दस्य संकेतितार्थे बोधविषयतानुगते सति तेषां वाक्यघटकपदार्थान्तरेणान्वयासंभवात् तात्पर्यानुपपत्त्या लक्षणावृत्त्या मुख्यार्थसम्बद्धोऽन्योऽर्थोऽवबुध्यते । ततश्च व्यञ्जनया सहृदयानां तत्तदर्थबोध इति शाब्दीलक्षणामूलव्यञ्जना वर्ततेऽत्र । शाब्दत्वञ्चास्याः शब्दपरिवृत्त्यसहत्वेनैव नान्यथा । नहि "त्वामस्मि वच्मि" उपकृतादयः शब्दाः कदापि स्वपरिवर्तनं क्षमन्ते । परिवर्तिते तत्र पर्यायशब्दे नहि तादृशव्यङ्ग्यार्थप्रतीतिरिति स्वसंवेद्यो विषयः । न चैवं "गंगायां घोषः' इत्यत्र कथं पर्यायपरिवृत्तिसहत्वमिति चेत् लक्षकतावच्छेदकानुपूर्वीगतवैशिष्ट्यस्यैव परिवृत्त्यसहत्वेन विवक्षणात् । अत एव "गगायां घोषः" इति वाक्यत एव शैत्यपावनत्वप्रतीतिर्न तु "गंगातटे घोषः" इत्यतोऽपि । वस्तुतस्तु पर्यायपरिवृत्तिस्थलेऽपि शाब्द्या व्यञ्जनाया वक्ष्यमाणतया न काप्यत्रानुपपत्तिः ।

विवक्षितान्यपरवाच्यस्य ध्वनेरसंलक्ष्यक्रमव्यङ्ग्ये कीदृशी व्यञ्जना ? शाब्दी, आर्थी वा ? तत्रापि शाब्द्याम् अभिधामूला लक्षणामूलावेत्येवं संशये न तावदार्थी व्यञ्जना । तत्र वाच्यलक्ष्यव्यङ्ग्यानां त्रयाणामप्यर्थानां प्रथमं प्रतीतिपथमवतीर्णानां स्वात्मानमुपसर्जनीकृत्य क्रमशोऽपरव्यङ्ग्यार्थबोधकत्वेन दृष्टत्वात् । अत्र च केवलं वाच्यार्थ एवार्पयत्यात्मानं बुबोधयिषया व्यङ्ग्यार्थस्येत्याचार्यैः प्रतिपादितत्वात् । नापि लक्षणामूलव्यञ्जनाया एव वाऽवसरोऽत्र तस्या मुख्यार्थानुसन्धानतद्बाध-तत्-सम्बन्धान्वेषणप्रयुक्तमहद्वैकट्यग्रस्तत्वात् । रसस्थले चैतादृशवैकट्यस्य रसपरिपन्थित्वात् । यद्यपि दर्पणकारेण "निःशेषच्युतचन्दनम्" इत्यादिपद्ये उत्तमकाव्यत्वं स्वीकुर्वता तत्र लक्षणामूलध्वनित्व प्रोक्तं तथापि तत्र विदग्धोत्तमनायिकाया वाक्यानां साधारण्येन वाच्यार्थेऽवाधितत्वात् लक्षणाया अवसर एव तत्र नास्ति । तस्मादसंलक्ष्यक्रमव्यङ्ग्यस्थले अभिधामूलैव व्यञ्जना भवतीति निर्विवादम् ।

नन्वभिधामूलव्यञ्जनाया अनेकार्थकशब्दस्थले यत्र प्रकरणादिभिः अभिधाया नियन्त्रणं जायते तत्रैवापरार्थस्य बोधनाय स्वीकृतत्वेन, असंलक्ष्यक्रमव्यङ्ग्यरसादिस्थले चानेकार्थकशब्दानामभावात् कथ स्वीकर्तुम् अर्हा तत्राभिधामूलव्यञ्जनेति चेदत्रोच्यते—अभिधामूलव्यञ्जनाया द्वयी विधा। एका तु यत्रानेकार्थकाः शब्दाः स्युः। तत्र प्राकरणिकेऽर्थे नियन्त्रितायामभिधायाम् अप्राकरणिकस्यार्थस्य बोधस्तन्मूलव्यञ्जनया जायते। नाभिधा तमर्थं बोधयितुं क्षमा, तस्या नियन्त्रितत्वात्। "भद्रात्मनो दुरधिरोहतनोः" इत्यादिपद्ये करदानशिलीमुखादयः शब्दा नानार्थकाः। प्रकरणवशादेषामभिधा राजनि नियन्त्रिता। परमेभिरेव शब्दैः परिवर्तनमसहमानैस्तथा नियन्त्रिताभिधैरपि सहृदयानां वासनाबलात् गजस्य तदन्वययोग्यस्य चार्थस्य प्रतीतिर्भवत्येवेत्यप्राकरणिकोऽयमर्थः प्रतीयतेऽभिधामूलव्यञ्जनयैव। न चार्थभेदने शब्दभेद इति नयात् अत्र शब्दद्वयमस्ति। तच्चैकप्रयत्नोच्चार्यतया नानुभूयते पार्थक्येनेति प्रथमपरवारणादिशब्दैः राजाद्यर्थबोधनविरतायामभिधायां द्वितीयपरवारणादिशब्दवृत्त्यभिधया गजरूपोऽर्थो बोधनीय इति कृतमत्र व्यञ्जनास्वीकारेणेति वाच्यम्? शब्दद्वयस्वीकारे राजरूपार्थस्यैव प्राथमिको बोध इत्यत्र विनिगमनाविरहात्। द्वयोरप्यर्थयोरभिधेयत्वेन तत्र पूर्वपश्चाद्भावस्य वक्तुमशक्यत्वात्। किञ्च धर्मिकल्पनातो वरं धर्मकल्पनमिति द्वितीयार्थबुभुत्सया व्यञ्जनाया एवावश्यकत्वात्।

अपरा च विधा वर्तते अभिधामूलव्यञ्जनाया यत्रानेकार्थकाः शब्दा न स्युः, किन्तु भवेयुरेकार्थका एव शब्दाः। तत्राभिधया संकेतितार्थे ज्ञाते विभावादीनां साहाय्येन काव्यवृत्तिव्यञ्जनया जायते रसादिरूपव्यङ्ग्यार्थप्रत्यय इतीयमप्यभिधामूलैव व्यञ्जना। यथा—

> शयिता सविधेऽप्यनीश्वरा सफलीकर्त्तुमहो मनोरथान्।
> दयिता दयिताननाम्बुजं दरमीलन्नयना निरीक्षते॥

अत्रालम्बनस्य नायकस्य, सविधशयनाक्षिप्तरहःस्थानादेरुद्दीपनस्य, अपौत्सुक्यादेश्च व्यभिचारिणः सम्प्रयोगाद् वाच्यार्थबोधानन्तरमेव नायकविषयिण्या नायिकानिष्ठाया रतेरभिव्यञ्जनं सहृदयसाक्षिकमिति वर्तते प्रकारोऽयभिधामूलशाब्दव्यञ्जनायाः। विभावादिप्रतीतिमनु झगिति

जायमानो रसप्रत्ययः सक्रमोऽपि झटिति जायमानतयाऽसंलक्ष्यक्रम इत्युच्यते । न चात्र वर्तन्तेऽनेकार्थकाः शब्दाः । न वा शब्दस्य पर्यायपरिवृत्त्यसहत्वमेवात्रावलोक्यते । सविघदयितादिशब्दानपहाय समीपवल्लभादिशब्दप्रयोगेऽपि तथैव व्यङ्ग्यप्रत्ययात् । एवञ्चात्र व्यञ्जनायाः शाब्दत्वव्यवस्थापकयोर्मध्ये नास्ति कस्याप्यवस्थितिरिति यत्राभिधेयार्थबोधानन्तरमेव व्यङ्ग्यार्थबोधस्तत्रापि अभिधामूला शाब्दीव्यञ्जनेति शक्यते वक्तुं निर्विवादम् । अत एव "गतोऽस्तमर्कः" इति शब्दे श्रुतिपथमुपगते वाच्यार्थबोधानन्तरमेव तत्तद्व्यङ्ग्यार्थप्रत्ययस्तादृशानां वासनावासितान्तःकरणानां जायत इति प्रसिद्धमेव । नह्यत्राप्यनेकार्थकाः शब्दाः, न वा पर्यायपरिवृत्त्यसहत्वमेव । 'सूर्योऽस्तंगत' इत्युदीर्यमाणेऽपि तथैव व्यङ्ग्यबोधस्यानुभाविकत्वात् ।

विवक्षितान्यपरवाच्यस्य ध्वनेः संलक्ष्यक्रमव्यङ्ग्यस्थले शब्दशक्तिमूलके ध्वनौ अभिधामूलैव शाब्दीव्यञ्जना । तत्र शब्दशक्त्युद्भववस्तुध्वनौ "पथिक नात्र स्रस्तरमस्ति" इत्यादि पद्ये प्रयुक्ताः पयोधरस्रस्तरादयः शब्दा अनेकार्थकाः । तत्र प्रकरणवशात् पयोधरादीनामभिधा मेघाद्यर्थे नियन्त्रिता । अनन्तरं परिवृत्त्यसहैः पयोधरादिशब्दैरत्र शास्त्रज्ञानरहितेङ्गितानभिज्ञजनबहुले ग्रामे स्वैरविहारार्थिनीति शाब्दव्यञ्जनया प्रत्याय्यते । संलक्ष्यक्रमोयार्थशक्तिमूलकध्वनिस्थले तु आर्थीव्यञ्जना भवति । तादृश्यस्थले वक्तृबोधव्यकाकुना मध्ये यस्य कस्यापि नान्तरीयसत्ताकत्वेन तद्वैशिष्ट्याद् वाच्यलक्ष्यव्यङ्ग्याद्यन्यतमस्यार्थान्तरव्यञ्जकतया आर्थीव्यञ्जनायास्तत्र सूपपादनीयत्वात् । यथा—

> एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
> लीलाकमलपत्राणि गणयामास पार्वती ।।

अत्र शब्दव्यापारं विनैव नतवदनायाः पार्वत्या लीलाकमलपत्रगणनरूपोऽर्थो लज्जारूपं सञ्चारिणं व्यनक्तीति अर्थशक्तिमूलो ध्वनिरत्र । एवञ्च शाब्दीव्यञ्जना अनेकार्थकशब्दस्थले, शब्दपरिवृत्त्यसहस्थले, तत्परिवृत्तिसहस्थले चैतत् स्थलत्रयेऽपि भवतीति वक्तुं शक्यम् । यद्यपि व्यञ्जना शब्दतदर्थपदपदैकदेशवर्णरचनाचेष्टादिषु सर्वत्रैव तिष्ठति तथापि काव्यस्य शब्दार्थरूपतयाऽत्र तद्गतत्वेनैव विवेचनं प्रामुख्यमावहति । यद्यपि

शाब्द्याम् अर्थस्य, अर्थ्याञ्च शब्दस्य नान्तरीयकताऽपाकर्त्तुमशक्या, तथापि शाब्द्यामर्थस्य, आर्थ्याञ्च शब्दस्य गौणत्वं सहकारित्व वावेदनीयम्। तथा चोक्तम्—एकस्य व्यञ्जकत्वे ह्यन्यस्य सहकारता।

एव स्थिते सम्भाव्यन्तेऽत्र वहवो मतभेदा यत्-व्यञ्जना अर्थव्यापार एव न तु शब्दस्येति। तेषामिदमत्राकूतम्—कार्यानियतपूर्ववर्तिकारणम्। न हि शब्दस्य नियतपूर्ववर्तिता वर्तते व्यङ्ग्यार्थप्रतीतिकाले। अतो व्यङ्ग्यार्थस्य शब्देन सह प्रत्यक्षकार्यकारणभावाभावात् व्यङ्ग्यार्थोऽर्थबोध्य एव। अर्थश्च व्यापारद्वारेणैव व्यङ्ग्य प्रत्याययति। स व्यापारो नाभिधा, प्रथमार्थस्य द्वितीयार्थे सकेताभावात्। मुख्यार्थबाधाद्यभावाच्चात्र नावसरो लक्षणायाः। अतः परिशेषात् व्यञ्जनैव तत्र व्यापारः। व्यापारश्चाय प्रत्यक्ष-सम्बन्धाभावादर्थस्यैव सम्भवति न शब्दस्येति।

अत्रोच्यते—व्यङ्ग्यार्थस्य शब्देन सह प्रत्यक्षकार्यकारणभावाभावात् व्यञ्जना न शब्दव्यापार इति रिक्तं वचः। न हि शब्दार्थयोः कार्यकारणभावः कुत्रापि स्वीकृतो मानान्तरसिद्धो वा। शब्दनिष्ठकारणतानिरूपितकार्यतावच्छेदकमर्थविषयकशाब्दबुद्धित्वमेव भवति। एवञ्चार्थनिष्ठकार्यतानिरूपितकारणतायाः शाब्दे वक्तुमशक्यतया तद्द्वारा व्यञ्जनायाः शाब्दत्वनिराकरणं कर्त्तुमशक्यम्। किञ्च व्यङ्ग्यार्थप्रतीतेरव्यवहितपूर्वं शब्दस्यानुपस्थित्या तथा कस्यचन अर्थस्य च तत्र नियमतः समुपस्थितेः व्यञ्जनाया आर्थत्वमिति कथनमपि नालम्बते मनोग्राहिताम्। यतो हि नहि व्यङ्ग्यार्थाव्यवहितपूर्वक्षणवृत्तित्वं व्यञ्जनायाः शाब्दत्वेऽर्थत्वनियामकमपितु अन्वयव्यतिरेकावेव तन्नियामकौ। पर्यायपरिवृत्तिसहत्वासहत्वाभ्यामेव व्यञ्जनायाः शाब्दत्वं प्रतिष्ठापितम्। न चाभिधामूलव्यञ्जनायाः पर्यायपरिवृत्तिस्थलेऽपि पूर्वं वक्तव्यतया कथं तत्र शाब्दत्वमिति वाच्यम्? तस्य नियन्त्रितार्थधीजनकत्वातिरिक्तस्थले विशेषतोऽसंलक्ष्यक्रमव्यङ्ग्यस्थले एव स्वीक्रियमाणत्वेनादोषात्। किञ्च अविवक्षितो वाच्योऽभिधेयार्थो यत्रेत्यन्वर्थसंज्ञयाऽभिधामूलशाब्दव्यञ्जनायां केवलं वाच्यार्थ एवान्यपरो भवति। आर्थ्यां पुनर्वाच्यलक्ष्यव्यङ्ग्यानां समेषामन्यपरत्वप्रसिद्धतया अभिधामूलव्यञ्जनायाः शाब्दत्वमपाकर्त्तुमशक्यमेव।

किञ्च यत्र शब्दप्रतीत्यनन्तरमेव व्यङ्ग्यार्थप्रतीतिर्यथा—"चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीम्" इति शाकुन्तलपद्ये "हताः"

इत्यत्र हनूप्रकृत्या दुःखातिशयस्य प्रकाशनं तथा तत्रैव "मुहुरङ्गुलिसंवृताधरोष्ठमित्यादिपद्ये "तु" इति निपातस्यानुतापव्यञ्जनं शाब्दीव्यञ्जनामन्तरापपादयितुमशक्यमेव । किं बहुना— "न्यक्कारो ह्ययमेव मेय दरयः" इति प्रसिद्धपद्ये "ग्ररयः" इत्यत्र बहुवचनस्य "तापस" इत्येकवचनस्य "अत्रैव" इति निपातस्य "जीवति" इत्यत्राख्यातस्य "ग्रामटिका" इत्यत्र कप्रत्ययस्येत्येवं भूयसां शब्दानां वर्णरूपाणां रावणनिष्ठनिर्वेदादिव्यञ्जकत्वं कथमिवापलपितु शक्यते । नो चेदत्र शाब्दीव्यञ्जनायाः कृते को नु विप्रतिपद्येत ?

यदप्युच्यते—शब्दशक्तिमूलो ध्वनिस्तत्रैव भवति यत्रानेकार्थकाः शब्दाः स्युः । तादृशस्थले अभिधाया एकत्रार्थे नियन्त्रणात् द्वितीयार्थोपस्थापने तदशक्तेस्तत्प्रतीतिर्व्यञ्जनयैव । स च व्यङ्ग्यो वस्तुरूपोऽलंकाररूपो वा भवेत् । ध्वनिकारमते पुनरयं विशेषो यद्वस्तुना सह अलंकारोऽपि शब्दशक्त्या प्रकाशते, यत्र तु नैवं तत्र न शब्दशक्तिमूलो ध्वनिः ।

अत्रेदं वक्तव्यम्—वस्तुना सह अलंकारव्यञ्जनस्थले शब्दशक्तिमूलो ध्वनिः न स्वीकृतो ध्वन्यालोककारेणापितु केवलं तत्रैव स्वीक्रियते तेनायं ध्वनिर्यत्र स्यादलंकारव्यञ्जनम् । वस्तुनि प्रतीयमाने श्लेष इति ध्वनिकारस्य मतम् । उक्तञ्च तेनैव—

> आक्षिप्त एवालंकारः शब्दशक्त्या प्रकाशते ।
> यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः ।।[1]

यथा-अत्रान्तरे कुसुमसमययुगमुपसंहरन्नजृम्भत ग्रीष्माभिधानः फुल्लमल्लिकाधवलाट्टहासो महाकालः ।[2]

अत्र ऋतुवर्णनप्रकरणेन ग्रीष्मपक्षीयेऽर्थेऽभिधायां नियमितायां शिवपक्षीयोऽर्थस्तेन सह ग्रीष्मस्योपमानोपमेयभावसम्बन्धप्रयुक्तोपमा चाभिधामूलव्यञ्जनयैव प्रतीयते । एतेन ध्वन्यालोककारेण शब्दशक्तिमूलकध्वनिपदेन यत् स्वीक्रियते तत् श्लेपालङ्कारेणालंकारान्तरव्यञ्जनस्योदाहरणमिति कथनमप्यर्थहीनम् । नहि प्रस्तुतोदाहरणे श्लेषस्य विषयः । तत्र तु श्लिष्टैः

---

१. ध्वन्यालोक. पृष्ठ–२३४

२. तत्रैव २३५

पदैरनेकार्थस्याभिधयैव भानम्। अत्र तु अप्राकरणिकस्याभिधामूलव्यञ्जनयेति सुमहान् भेदः। नाप्यत्रार्थशक्तिमूलस्य ध्वनेरवसरः। नहि महाकालादिशब्दाः पर्यायपरिवर्तनं क्षमन्ते। न वा वक्तृबोधव्यकाक्वादिवैशिष्ट्यात् वाच्यलक्ष्यव्यङ्ग्याद्यन्यतमार्थस्यात्रार्थान्तरव्यञ्जकत्वं, येनात्रार्थोव्यञ्जनात्वं स्वीकर्तुं शक्येतापि।

अभिनवगुप्तपादास्तु अत्र विषये ध्वनिकाराद् विभिन्नमेवामनन्ति। तन्मते अनेकार्थशब्दस्थले प्रकरणादिवशादभिधाया एकस्मिन्नर्थे नियन्त्रणे जाते द्वितीयार्थप्रतीतिरभिधामूलव्यञ्जनया। स चार्थः स्वातन्त्र्येण क्वचिद् वस्तुरूपः, क्वचिच्चालंकारात्मकः। उक्तञ्च काव्यप्रकाशे—

अलंकारोऽथ वस्तु वा शब्दाद् यत्रावभासते।
प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा॥

परवर्तिभिः दर्पणकारादिभिश्चेदमेव मतं गृहीतम्। ध्वन्यालोकलोचने अभिनवगुप्तेनाभिधामूलव्यञ्जनाविषये चत्वारि मतान्युपक्षिप्तानि। तत्र प्रथम यथा—

"एतेषां शब्दानां पूर्वमर्थान्तरेऽभिधान्तरं दृष्टं ततस्तथाविधार्थान्तरे दृष्टतदभिधाशक्तेरेव प्रतिपत्तुर्नियन्त्रिताभिधाकेभ्य एतेभ्यः प्रतिपत्तिर्ध्वननव्यापाराद् एवेति शब्दशक्तिमूलत्वं, व्यङ्ग्यत्वं चेत्यविरुद्धम्।[1]

अयं भावः—नानार्थकशब्दानां तत्तदर्थागृहीतसङ्केतैरेव पुरुषैः ज्ञातपूर्वा भवन्ति, नागृहीतशक्तिकैः। पश्चाच्च कुत्रचिदभिधानियामकैर्नियन्त्रितायामभिधायां दृष्टतदभिधाशक्तेरेवप्रतिपत्तुरप्राकरणिकस्यार्थस्य बोधः। स च नाभिधया, तस्या नियन्त्रणात्। तस्माद् ध्वननमेव तत्र व्यापारान्तरमिति शब्दशक्तिमूलकव्यङ्ग्यत्वं, तत्र शब्दस्य पर्यायपरिवृत्त्यसहत्वात्। इदमेव मतं काव्यप्रकाशकारादिभिः स्वीकृतमिति तत एव विज्ञेयम्।

अत्र केचित्-यदि वस्तुतो द्वितीयार्थो व्यङ्ग्यार्थो भवेत् तदा नासौ केवलं तेषामेव प्रतीयेत येषां द्वितीयार्थेऽपि संकेतग्रहः स्यात्। व्यञ्जना-

१. ध्वन्यालोकः सं. पट्टाभिरामशास्त्री पृ० २४१

व्यापारेणार्थप्रतीतौ संकेतग्रहस्याकिञ्चित्करत्वात्। अतो द्वितीयार्थे संकेतग्रहविरहितस्यावश्यिकी व्यङ्ग्यप्रतीतिर्यतो न भवति, इति न शक्यते वक्तुं द्वितीयार्थस्य व्यङ्ग्यत्वम्।

अत्रोच्यते–व्यङ्ग्यार्थप्रतीतौ संकेतग्रहणस्यानावश्यकत्व तत्र भवति यत्र न भवेयुरनेकार्थकाः शब्दाः। यथा "गतोऽस्तमर्कः" "शून्यं वासगृहं विलोक्य" इत्यादौ च। तादृशस्थलेषु अभिधया वाक्यार्थबोधेवृत्ते सहृदयानां स्वस्ववासनानुसारं प्रतीयते व्यङ्ग्यार्थः। यत्र पुनरनेकार्थकाः शब्दाः नियन्त्रिता चाभिधा परार्थोपस्थापनेऽक्षमा तत्रागत्या गृहीतसंकेतस्यैवापरार्थ-बोधो व्यञ्जनया, न त्वगृहीतसंकेतस्यापि कदाचनेति भ्रमितव्यम्। प्रकरणादीनां विशेषस्मृतिहेतुत्वं चेदमेव यत् तेऽन्यतरार्थोपस्थापिकामभिधामवरुध्य केवलं प्राकरणिकमेवार्थमुपस्थापयन्ति। अन्यथा प्राकरणिकाप्राकरणिकयोरेककालाधिकरण्यं कथमिव वार्यताम्। यतो नास्ति तयोः सामानाधिकरण्यं, तेन व्यञ्जनमेव तत्रार्थान्तरोपस्थापकमिति निर्विवादम्।

द्वितीयं मतम्—साभिधैव द्वितीया, अर्थसामर्थ्यं ग्रीष्मस्य, भीषणदेवताविशेषसादृश्यात्मकं सहकारित्वेन यतोऽवलम्बते ततो ध्वननव्यापाररूपोच्यते।[१]

अस्येदं तात्पर्यम्—गृहीतपूर्वा द्वितीयार्था अभिधैव ध्वननव्यापाररूपोच्यते। परमियान् विशेषो यत् प्रथमाभिधा सकेतमात्रसहाया प्राकरणिकार्थप्रत्यायिका। इयं त्वप्रस्तुतार्थबोधिका, सकेतग्रहणातिरिक्तमर्थसामर्थ्यादिकं सहकारित्वेनापेक्षते इति द्वितीयाऽभिधैव साहाय्यान्तरेण बोधिकौपचारिकी व्यञ्जनेति तथ्यम्। अभिधादयो व्यापारा अर्थबोधानुकूलशक्तिविशेषरूपाः सन्ति। सहकारिभेदेनैवैषां भेदः सम्पद्यते। कुसुमसमययुगमित्युदाहरणे महाकालादिशब्दा अभिधया प्राकरणिकं ग्रीष्मर्तुरूपमर्थमभिदधति। ततः शिवापरपर्यायस्य महाकालस्य बोधिकाभिधा ग्रीष्ममहाकालयोरुपमानोपमेयभावं प्रकाशयितुं प्रवर्तते इति तस्या औपचारिकं नाम व्यञ्जना। अत्र मते वस्तुना सहालंकारव्यञ्जनाऽभिमतेति हृदयम्।

---

१. ध्वन्यालोकः स. पट्टाभिरामशास्त्री पृ० २४२

तृतीयं मतम्—एके तु शब्दश्लेषे तावद् भेदे सति शब्दस्य, अर्थश्लेषेऽपि शक्तिभेदात् शब्दभेद इति दर्शने द्वितीयः शब्दस्तत्रानीयते । स च कदाचिद-भिधाव्यापाराद् यथोभयोरुत्तरदानाय श्वेतो धावतीति प्रश्नोत्तरादौ वा तत्र वाच्यालंकारता । यत्र तु ध्वननव्यापारादेव शब्द आनीतस्तत्र शब्दा-न्तरबलादपि तत्र अर्थान्तरं प्रतिपन्नं प्रतीयमानमूलत्वात् प्रतीयमानमेव युक्तम् ।[1] अत्रायमभिसन्धिः—यत्रेकप्रयत्नोच्चार्यतयाऽभिन्नत्वेनानुभूयमान-भिन्नार्थकसदृशनानाशब्दत्वं तत्र श्लेष इति लक्षणलक्षितस्य श्लेषस्य शाब्दभेदे यथा भिन्नार्थप्रतिपादकं शब्दद्वयं, तथैवार्थश्लेषेऽपि तत्तदर्थ-बोधानुकूलशक्तिभेदात् शब्दभेद इति स्वीक्रियते । तत्र यदार्थद्वयेऽपि प्रकर-णादिकमवतरति, तत्रार्थद्वयमभिधेयमेव भवति । को धावति ? कीदृशं च तदीयं रूपमिति प्रश्नद्वये प्रोच्यते श्वेतो धावतीति । अत्र श्वेतपदे सन्धि-विच्छेदद्वारा" श्वा इतो धावतीति प्रथमस्यात्तररूपेण तथा 'श्वेतो धाव-तीति" द्वितीयस्योत्तररूपेण गृह्यते । अत्रोभावप्यर्थौ प्राकरणिकौ । प्रकर-णादिवशादभिधाया एकत्रार्थे नियमने जाते परिकल्प्यमानोऽपि द्वितीयः शब्दो नाभिधया अप्राकरणिकमर्थं प्रत्याययति, अपितु व्यञ्जनयैवेति सुस्पष्ट-मत्रापि व्यञ्जनायाः शाब्दत्वमेव ।

श्वेतशब्दस्य पर्यायपरिवृत्त्यसहत्वेन तथात्वस्यैव वक्तुं शक्यत्वात् ।

अत्र चतुर्थं मतम्—द्वितीयपक्षव्याख्याने यदर्थसामर्थ्यं तेन द्वितीया-भिधैव प्रतिप्रसूयते । ततो द्वितीयार्थोऽभिधीयत एव न तु ध्वन्यते । तदन-न्तरं तु तस्य द्वितीयार्थस्य प्रतिपन्नस्य प्रथमार्थेन प्राकरणिकेन साकं या रूपणा सा तावद् भात्येव न चान्यतः शब्दादिति सा ध्वननव्यापारात् । तत्रा-भिधाशक्तेः कस्याप्यनाशंकनीयत्वात् । तस्यां च द्वितीया शब्दशक्तिमूलं तया विना रूपणाया अनुत्थानात् ।

अत्रेदं रहस्यम्—शब्दस्य येषु येष्वर्थेषु संकेतो गृहीतस्ते सर्वेऽप्यर्था अभिधयैव बोध्यन्ते न तु व्यज्यन्ते । प्रकरणादिज्ञानं तदधीनतात्पर्यज्ञानं वा परार्थोपस्थापने प्रतिबन्धकं न भवति । सस्कारतदुद्बोधकयोः सत्वे स्मृतेः प्रतिबन्धस्य क्वाप्यदृष्टत्वात् । एवञ्चाभिधयैव द्वितीयार्थोपस्थितौ तस्य प्राकरणिकेनार्थेन सह नूनं कश्चन सम्बन्धोऽङ्गीकार्योऽन्यथाऽसम्बद्धार्थाभि-

---

१. ध्वन्यालोकलोचनम्-पट्टाभिरामशास्त्री सम्पादित पृ० २४३

धायित्वं प्रसज्येतेति प्रकरणाप्राकरणिकयोरभेदारोपरूपणा एव व्यक्तिर्वैधा। अयमभेदारोपः उपमादेरप्युपलक्षणम्। द्वितीयार्थोपस्थापिका शब्दशक्तिरेवात्र रूपकोपमाद्यालंकारध्वनौ मूलमिति शब्दशक्त्युयाभिधामूलोऽयं ध्वनिः। इदमेव मतं पण्डितराजजगन्नाथेन स्वीकृतमिति रसगंगाधरादौ स्पष्टमिति तत एव विज्ञेयम्।

एवञ्चोपर्युक्तविवेचनेन स्पष्टमिदं जातं यद् व्यञ्जना यथा प्रर्थव्यापारस्तथा शब्दव्यापारोऽपि सेति नात्र कश्चन विसंवादः।

प्राचार्यः
श्रीशार्दूल–संस्कृत–विद्यापीठम्
बीकानेरम्

---

# रसाद्वैतमीमांसा

श्रीश्यामाचरणत्रिपाठी

यद्यपि रसशब्दस्तत्राच्छास्त्रेषु विभिन्नार्थेषु दृष्टचरस्तथापि मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वं रसः..........छान्दोग्य. 3·2 । रसो वै सः । रसं ह्येवायं लब्ध्वानन्दी-भवति । तैत्तीरीय उप. 2·6 । इत्याद्युपनिषद्वचोभिः सर्वाधिष्ठानस्य निखिलहेयप्रत्यनीकस्य परमानन्दस्वरूपस्य भगवतः परमपुरुषस्यैव रस-रूपता सिद्धान्तकोटिमाटीकते ।

अतएव–'तन्त्वौपनिषदं पुरुषं पृच्छामि, यस्मिन् विज्ञाते सर्वं विज्ञातं भवति' इत्यादि विषयं जिज्ञासमानानां वचांसि रसत्वेन परमात्मानमेव लक्षयन्ति । स एव सर्वेषामकाममपि काम्यमानः । अतएव चेतनाचेतनेषु घटपटादिषु सर्वेष्वपि लौकिकेषु विषयेषु तस्यैव भगवतो रसरूपस्य आंशिकी अभिव्यक्तिर्जायते । एवञ्च आत्मस्वरूपावयवतया दुःखकालुष्याद्य-संसृष्टतया चात्मस्वरूपावगतिरेव रसोपलब्धिरानन्दोपलब्धिर्वा वक्तुं शक्यत इत्यौपनिषदधौरेयाद्वैतविशिष्टाद्वैतशुद्धाद्वैतादिसम्प्रदायानुसारेण सिद्धम् । एषु मतेषु स्यान्नाम विवेचनभेदः परन्तु आत्मनो नित्यत्वे सच्चिदानन्द-स्वरूपत्वे चैकमत्यमेव विदुषां तत्त्वविदाम् ।

यद्यपि चार्वाकनये आत्मनोऽभावो बौद्धमते च तस्य क्षणिकत्वं जैनमते च स्याद्वादसरणिमनुसृत्य आत्मनः कथञ्चिन्नित्यत्वेऽपि अनानन्दा-त्मतया तस्य रसरूपत्वं न साधयितुं शक्यन्तथापि सर्वानपि इमान् पक्षान् पूर्वपक्षीयत्वेन खण्डयित्वा अद्वैतादिवादेषु रसत्वं सूपपादितमिति निरतिशय-निर्विशेषानन्दस्वरूपस्य ब्रह्मणो रसरूपत्वे नास्त्यल्पमपि संदेहः ।

स चायं रसः प्राकृताप्राकृतभेदेन द्विधा विभज्यते । यत्र प्राकृत-नायिका (कान्ता) द्यवच्छिन्नविषयमवलम्ब्य रसाभिव्यक्तिः स प्राकृतो रसः । अप्राकृतभगवदालम्बनाच्च भवति अप्राकृतो रसः । तदुक्तं मधु-सूदनस्वामिना—

भगवान् परमानन्दः स्वरूपः स्वयमेव हि ।
मनोगतस्तदाकारो रसतामेति पुष्कलम् ।।

—भक्तिरसायनम्

अयं भावः—निखिलमपि वैषयिकं "अयमस्माकमित्याकारकं ममत्वं संगृह्य भगवच्चरणारविन्द एव समर्पितस्य कस्यचिद् सकलविषयतृष्णा-विमुखचेतसः पुण्यशालिनो महाभागस्य सर्वसाधनफलभूतायां विगलितायाम् भगवदाकाराकारितायां शुद्धायां चित्तवृत्तौ विभावानुभावव्यभिचारिसंयोगेन रसरूपतयाऽभिव्यक्तो भगवदाकारतारूपो रत्याख्यः स्थायिभावः स्वरूपभूतः परमानन्दसाक्षात्कारात्मकः प्रादुर्भवतीति । किञ्च 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यनुसारं नानाविषयाकारता निराकरणपूर्वकं चित्तस्य भगवदाकारता स्वाभाविकी । चित्तकारणीभूतसूक्ष्मभूतकारणनिर्वचनीयाचिन्त्यशक्तिमन्मायाधिष्ठानस्य नित्यव्यापकस्य निरस्तपुंदोषकलंकस्यासंख्येयकल्याणगुणगणस्य परमेश्वरस्य सर्वत्र वर्तमानत्वात् । एवं चित्तस्य विषयाकारता तु कल्पितत्वेनौपाधिकी । तदुक्तं गीतायाम्—

मत्तः परतरन्नान्यत्किंचिदस्ति धनञ्जय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।। गी० ७।७।

एवं रीत्या रसविवेचनस्य वेदान्तशास्त्रातिरिक्तशास्त्राविषयत्वं यद्यप्यनुभूयते तथापि काव्यशास्त्रीयमेतद् विवेचनमपि नान्तरीयकतामापद्यते प्रयोजनभेदस्य प्रस्थानभेदप्रयोजकत्वात् । तथाहि ये संसारिणोऽपरिपक्वमतयः सुकुमारा विविधभावभावितान्तःकरणाः काव्यार्थानुशीलनपरायणाः अपरिशीलितनिरावरणब्रह्मपन्थानः कथमिव झटित्यनुभवपथविषयमानयेयुरप्राकृतं रसम् । अतः—

'उपायाः शिक्षमाणानां बालानामुपलालनाः ।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ।।'

इति रीत्या तदुपायभूतया 'गुडजिह्विका' न्यायेन प्रथमं प्राकृतरसमास्वादयन्ति रसाचार्याः । यतो यावन्नानुभवपथविषयीक्रियते प्राकृतो रसस्तावदप्राकृतरसोपभोगभावनैव कथं भवेत् । अतः प्राकृतरसविचारो भावुकानां

मनसि रसावताराय प्राकृतरसविचारे प्राथम्यं भजते । अत एवोक्तं रसाचार्यैः—विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिरिति" ।

अत्रायं निष्कर्षः- आविधिकेऽस्मिन् विविधे वैचित्र्योपेते वैरञ्चे प्रपञ्चे जगज्जालेऽनुभवति मानवः प्रत्यहं नानाविधप्रपञ्चान् । स हि कदाचित् कुत्रचिदाकर्षति, कुत्रापि कुप्यति, कुतश्चिद् बिभेति, अपकर्षति चान्यत्र । क्षणिकत्वान्नष्टेषु प्रपञ्चेषु तज्जन्याः संस्काराः प्रेम-शोक-घृणा-हासादिबहवो भावा मानवान्तःकरणेषु वासनारूपेणावस्थिताः साहित्यक्षेत्रमारुह्य रति-हास-क्रोध-जुगुप्सा-भीति-उत्साह-शोक-विस्मयादि नामभिः स्थायिभावपदेनोच्यन्ते । तदुक्तं भरतेन मुनिना—

> रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयन्तथा ।
> जुगुप्सा विस्मयश्चेति स्थायी भावाः प्रकीर्तिताः ।। इति

अयं भावः—समुचितललितसन्निवेशचारुणा काव्येन समुपस्थाप्यमानेष्वभिनयादिप्रकारान्तरेण वा प्रत्यक्षीक्रियमाणेषु तेषु पुनः पुनरनुसन्धानात्मिकया काव्यार्थभावनया जायते तेषां साधारणीकरणम् । भवति च सहृदयानामन्तःकरणस्य तदाकाराकारात्मिका चित्तवृत्तिरपि, चित्तवृत्त्यानया विषयीक्रियते विषयावच्छिन्न चैतन्यमेव । चित्तवृत्तिरपि विषयतामुपगतैर्विभावादिभिः सम्मिल्य प्रादुर्भावितोऽलौकिको विभावनाऽपरपर्याय आनन्दांशावरणमात्रफलको भावकत्वव्यापारस्तेन-दूरीकृतेऽज्ञानावरणे सति द्रवावस्थापन्नायामन्तःकरणवृत्तावागत विषयावच्छिन्नचैतन्यमेव पूर्वं भावरूपतामापद्य विगलितवेद्यान्तरस्पर्शशून्येनानन्दस्वरूपेण वृत्त्यनवच्छिन्नप्रमातृचैतन्येन सहैकीभावमापद्यते । एकीभावमापन्नयोरनयोर्वृत्त्यवच्छिन्नानवच्छिन्नचैतन्ययोराभासेन स्फुरितोऽथवा तेनैवसहास्वाद्यतान्नीयमानो रत्यादिस्थायिभाव एव रसतामञ्चति । तदुक्तं मम्मटाचार्यमहाभागैः—

"व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः" इति ।

अत्र व्यक्त इत्यस्यार्थो व्यक्तिविषयीकृतः । व्यक्तिश्च भग्नावरणा चित् । तदास्वादोपयिकभूतव्यञ्जनव्यतिरिक्ता । अत्र रसस्यानुभवप्राक्कालिकसत्ता विरहात् दध्यादिन्यायेनैवाभिव्यक्तिर्ज्यायसी न तु घटादिन्यायेन । प्रपाणकरसन्यायेन विभावादिसंवलितविलक्षणास्वादनादनतिरिक्तं

तस्य विभावादिपरिणतिमात्रस्वरूपत्वात्। अतएव विभावादिजीवितावधिरेव रसस्योक्तमभियुक्तैः। स च रसश्चर्व्यमाणतैकप्राणः काव्यार्थमात्र—सभेदादात्मानन्दसमुद्भवः। चर्वणा च आनन्दांशाभिव्यक्तिः। लौकिक ज्ञानान्तरन्तु न तथा तत्रावरणभगस्य वक्तुमशक्यत्वात्। अन्यो हि लौकिकास्वादोऽन्यश्चानुभवो रसस्य। अतोऽयमतिरिच्यते लौकिकविषयास्वादात्। लौकिकसुखसाक्षात्कारे रजतमसोरनभिभवात् तत्र सुखदुःखभान स्वाभाविकम्। काव्यरसास्वादे तु रजस्तमसोर्लुप्तत्वात् सुखास्वाद एव केवलमिति विशेषः। तदुक्तं पण्डितराजेन—आनन्दो ह्ययं न लौकिकसुखान्तरसाधारण अनन्तःकरणवृत्तित्वात्। अत्रेद रहस्यम्—घटपदादि लौकिकविषयप्रत्यक्षस्थले इन्द्रियप्रणालिकया वहिर्गतस्यान्तःकरणस्य विषयाकारता सम्पद्यते। विषयाकारेण परिणतमप्यन्तःकरणं शरीराभ्यन्तरे वर्तमानं सत्-शरीरविषयोर्मध्ये मानमिवावतिष्ठते। अयं दण्डायमानो मध्यभागो वृत्तिज्ञानमित्युच्यते। एतद् भागत्रयावच्छिन्नेऽन्तःकरणे अतिस्वच्छकाचोपरि सूर्यप्रकाश इव आत्मचैतन्यप्रकाशः पतति। अत्रेदं ज्ञातव्यं यदत्रौपाधिकं चैतन्यद्वयं वर्त्तते। एकन्त्वन्तःकरणावच्छिन्नं प्रमातृचैतन्यम्, अपरञ्च विषयावच्छिन्न चैतन्यम्। अनयोश्चैतन्ययोर्मध्ये वृत्तिज्ञानद्वारा ऐक्यं सम्पद्यते। यथा घटमठयोर्मेलने घटाकाशमठाकाशयोरेकीभवन सम्पद्यते। तथैव विषयप्रदेशे इन्द्रियप्रणालिकया गतेऽन्तःकरणे विषयान्तःकरणयोरुपाध्योरेकीभवनेऽन्तःकरणावच्छिन्नं चैतन्यं विषयावच्छिन्नं चैतन्यञ्चैक्यमापद्यते। ततश्च विषयावच्छिन्नचैतन्येऽध्यस्ता विषया विषयावच्छिन्नचैतन्याभिन्नान्तःकरणावच्छिन्नप्रमातृचैतन्येऽध्यस्ता भवन्ति। अत एव प्रमातृचैतन्यद्वारा भवति विषयस्यापरोक्षज्ञानम्।

इदमत्र तत्वम्—अनावृतात्मचैतन्यप्रकाशितः स्थायी भावो रसः। यद्यपि वासनारूपतया स्थितस्य स्थायिनश्चैतन्यभास्यत्वमयोग्यतया न संभवति तथापि विभावादिसमवधाने सूक्ष्मरूपस्य तस्य स्थूलरूपत्वं भवतीति शक्यते वक्तुम्। अत एव व्यक्तो दध्यादिन्यायेन रूपान्तरं परिणत इत्योनत् दर्पणकारो विश्वनाथः। यथा शरावादिना पिहितो दीपोऽपसारिते आवरके स्वतेजसा घटपटादीन् प्रकाशयति स्वयं च प्रकाशते, एवमात्मचैतन्यमपगतेऽज्ञानावरणे विभावादिसम्बद्धान् रत्यादिस्थायिभावान् चर्वणा गोचरीकुर्वन् स्वयं चास्वादविषयो भवति। न च रत्यादिस्थायिभावा अन्तःकरणधर्मत्वेन प्रकाशन्ता साक्षिभासा किन्तु ये खलु विभावादयो-

ऽन्तःकरणधर्मास्ते कथं भासिष्यन्ते साक्षिणो भासा इति चेच्छृणु—यथा स्वप्नदशायां प्रत्यक्षीक्रियमाणास्तुरगादयो बाह्यपदार्थाः कल्पनारूढास्तदानीमिन्द्रियव्यापाराभावेऽपि साक्षादात्मना भास्यन्ते तथैव नायिकादयोऽपि बाह्यपदार्थाभावनालम्बिताः साक्षादात्मभारूाभास्या इति न कोऽपि विरोधः ।

नन्वेवमपि आत्मचैतन्याभिन्नश्चेद् रसस्तदा तस्य नित्यत्वे सिद्धे उत्पन्नो रसः, विनष्टो रसः, इत्यादयो व्यवहाराः कथ सम्पाद्यन्तामिति चेदत्रोच्यते—रसस्य व्यञ्जिका विभावादिचर्वणा । सा च जायते आवरणभंगात् । एवञ्च चर्वणायामावरणभगे चोत्पत्तिविनाशौ तु वर्त्तत एव तावेव रसे समारोप्य जायते उपर्युक्तो व्यवहारः । यथा वर्णानां नित्यत्व स्वीकुर्वाणाः शाब्दिकाः कण्ठताल्वादिव्यापारगतमनित्यत्व वर्णेष्वारोप्योत्पन्नः ककारो विनष्ट. ककार इति वदन्ति । वस्तुतस्तु चर्वणा अपि रसानतिरिक्ता तत्राप्युत्पत्तिविनाशयो. प्रतिपादनमनुचितमेव तथापि घटपटादिकार्येषु दृष्टि गतावुत्पत्तिविनाशौ कादाचित्कत्वसाधर्म्येण रसादिचर्वणायामारोप्य पश्चात्तद्विषयतया रसेऽप्यारोप्यते इति न काप्यनुपपत्तिः ।

एवञ्च सर्वेषां शास्त्राणां महातात्पर्यविषयीभूते परमात्मन्येव सच्चिदानन्दादिशब्दानां रसानन्दादिशब्दाना वा प्रवृत्तिः साक्षात् भवति, इति सिद्धम् । तथापि यथा विषयविशेषे सत्ता शब्दश्चैतन्यशब्दो वा प्रयुज्यते तथैव रसानन्दादिशब्दानामपि विषयविशेषे प्रयोगो भवितुमर्हतीति । अनेन सिध्यति यत् स्थाय्यवच्छिन्ने भग्नावरणचैतन्य एव रसशब्दप्रयोगो भवति । यावन्न भवति अन्त करणवृत्तेः सात्त्विकी द्रवता तावन्नानुभूयते रसानन्दः । अत एवोपेक्ष्येषु द्वेष्येषु च भग्नावरणचैतन्ये सत्यपि न भवति आनन्दानुभूतिः । तस्मादिदं शक्यते वक्तुं यत् रससिन्धुबिन्दुस्थानीयः सोपाधिको जीवोऽनवच्छिन्न रससिन्धुस्थानीयं परमात्मान प्राप्य अथवा स्थाय्यवच्छिन्नं भग्नावरण तदंशभूतं चिदशमादाय सुखीभवति । सावरणं निरावरणमादाय कृती भवत्युच्यते वा । नित्यप्राप्ते विस्मृतग्रैवेयके तथा मिथ्यासर्पादौ प्रेप्सा परिजिहीर्षा चावलोक्यते । अज्ञानेऽपाकृते लाभपरिहार-प्रयोगोऽपि दृश्यते । अनेनैव प्रकारेणावरणभगेन प्रेप्सानिवृत्तौ प्राप्तिव्यवहारो जायते । अतः प्राकृतपञ्चकोशातीतस्वरूपतटस्थलक्षणलक्षितः प्रत्यग्चैतन्याभिन्नब्रह्मस्वरूपः परमात्मा एव रसः । तमेव पूर्ण-

मशोपलक्षितं या प्रादाय सोपाधिको जीवो भवति कृतीत्युच्यते। एतस्यैवा-
नन्दस्यान्यानि मात्रामुपजीवन्ति, एष ह्येवानन्दयति' इत्यादि श्रुतिभिरलौ-
किकानन्दोऽपि परमात्मनोऽन्य एवेति स्थाप्यते। साधारणस्याब्रह्मविदः
पुरुषस्य न भवति उपलब्धिरनवच्छिन्नस्य ब्रह्मात्मकस्य रसस्य। रसो
वै सः, रस ह्येवायं लब्ध्वानन्दीभवतीति श्रुतिद्वयेऽनवच्छिन्नः स्थाय्यवच्छि-
न्नो भग्नावरणचिदात्मकः पारिभाषिकरसतदङ्गभूत एव रसो गृह्यते।
द्रवत्वस्थायिभावानपेक्षमहावाक्यजन्यापरोक्षब्रह्माकाराकारितचित्त वृत्तावा-
वरणभंगेनानवच्छिन्नब्रह्मरूपेणैव रसस्य भवत्युपलब्धिः।

किं बहुना रसानुभूतिः साक्षादपरोक्षानुभूतिः। यत्रापाश्रियन्ते
निखिलवेद्यान्तराणि, अत एव शिथिलीभवन्ति अशेषविषयविशेष-
ज्ञानानि। अनुभवपथमुपयान्ति निरावरणचिद्विशिष्टतत्तदस्थाय्या-
दिरत्यादीनि। तत्र कुतः शङ्कालेशोऽपि क्रियतां दुःखानुभवस्य।

य खलु द्रष्टा, स्प्रष्टा, श्रोता, घ्राता, रसयिता, मन्ता, बोद्धा,
कर्त्ता, विज्ञानात्मापुरुषस्तत्साक्षात्कारे न दुःखमनुभवति, नानुशोचति, न
परितप्यते, न खिद्यते। अथ च यस्मिन् विज्ञाते सर्वमिदं विज्ञातं भवति तत्रा-
मन्दानन्दकूपारे कृतेऽपि साक्षात्कारे परमार्थसारे दुःखसंश्लेषलेशोऽपि
चिकीर्षितश्चेत् सुखोपलब्धिः शशविषाणायितैव स्यात्, अत एव नित्य-
प्राप्तस्यापि तस्याविज्ञातस्य विज्ञेयत्वं श्रुतिरप्याह तद्विजिज्ञासस्वेति, येना-
मतं मतमश्रुतं श्रुतं स्यात्।

न चैव रसस्य परमानन्दभगवत्स्वरूपत्वे स एव आस्वाद्यः स
चैवास्वादयितेति, एकस्यैव कर्तृत्वं कर्मत्वञ्च विप्रतिषिद्धं भवतीति चेत्
निरावरणमावरणरूपोपाधिभेदभिन्नतामाकलय्य तदुपलब्धिपुरःसरमा-
नन्दीभवनस्य कृतार्थत्वात्। अतएव रसानुभवस्य वेद्यान्तरस्पर्शशून्यत्वं
ब्रह्मानन्दसहोदरत्वञ्च यदुक्तन्तद् साध्वेव। तस्मात् पुण्यवन्तः प्रमिण्वन्ति
योगिवत् रसमन्ततिमिति तत्त्वविदामाकूतमित्यलमत्र विस्तरः।

—व्याकरण–विभागाध्यक्षः
श्रीशार्दूल-संस्कृत-विद्यापीठम्
बीकानेरम्

# सत्यानुभूतिरात्मा काव्यस्य

**डा० ब्रह्मानन्दशर्मा**

ध्वनिकारं नमस्कृत्य, ध्वन्यालोकप्रसारिणम् ।
विद्याधरप्रसादेन, सत्यालोकं करोम्यहम् ।।
सत्यं प्रियं हि सर्वस्य, सौक्ष्म्येणास्य प्रकृष्टता ।
शास्त्रे ज्ञानमिदं प्रोक्तम्, काव्येऽनुभूतिरिष्यते ।।

—काव्यसत्यालोक:

सत्यं सर्वेषामभीष्टमिति काव्येऽप्यस्य स्थिति: । अस्मिन् सत्ये सूक्ष्म-
ायां सत्यां प्रभावकारिताया आविर्भाव: । भौतिकपदार्थानामुदाहरणेना-
य समर्थनम् । भौतिकपदार्थास्त्रिविधा:—कठोररूपा:, द्रवरूपा वाष्परूपा-
चेति । कठोररूपाद् द्रवरूपस्य द्रवरूपाच्च वाष्परूपस्य प्राप्ति: । अस्मिन्
रूपप्राप्तिक्रमे पदार्थस्य प्रभावकारितायां वृद्धि: । यथा जलं पूर्वं हिमरूपम्,
ततो द्रवरूपम्, ततश्चोष्णतायोगेन वाष्परूपम् । वाष्प जलस्यैव सूक्ष्मरूपं
तत्र च प्रभावकारिताया अतिशय इति सर्वं स्पष्टम् । एषा प्रभावकारि-
तैव काव्ये चमत्कार: । स च चित्तगतो वेग: । अनेन चमत्कारे तत्त्वद्वयम्-
एकत: *सत्यगता सूक्ष्मता* अपरतश्च चित्तगतो वेगस्तद्गता *तीव्रताप्रतीतिर्वा* ।
एषा तीव्रताप्रतीतिरनुभूतिरूपेति काव्ये सत्यानुभूतिरिति वक्तुं शक्यम् ।
विज्ञानादिष्वपि सत्यगताया: सूक्ष्मताया: स्थिति: । परमेषा बुद्धिप्रयत्नेन
जन्या । एष च बुद्धिप्रयत्नो विरुद्धशक्तिरूप (Opposite force) इति तत्र
चमत्काराभाव: । सत्योन्मुखतानन्तरं विज्ञानादिषु बुद्धिप्रयत्ने शिथिलतां
याते यत्र मुहूर्तं सत्यगताया: सूक्ष्मताया प्रतीतिस्तत्रांशिकचमत्कारोऽपि
सम्भाव्यते । काव्ये सत्यगताया: सूक्ष्मताया: सहृदयस्य समक्षं स्वत एवोप-
स्थितिरिति तत्र प्रयत्नस्यानपेक्षा । अत्र च कारणं कविप्रतिभैव ।

किञ्च काव्ये मूर्तिमत्ता । अत्र पात्रादियोग: कारणम् । अनेन सत्य-
गतसूक्ष्मताजन्यायामनुभूतौ तीव्रता । शास्त्रादिष्वस्या मूर्तिमत्ताया अभाव: ।

सत्यानुभूतिरेषा यथार्थानुभूतिरपि वक्तुं शक्यते। यथा—

ग्रीवाभंगाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः,
पश्चार्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम्।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा,
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति॥

—अभिज्ञान०

अत्र धावतो भयभीतस्य मृगस्य सूक्ष्मधर्माणां वर्णनम्। अनेन कियद् यथार्थं सत्यं वै तद्वर्णनमित्यत्र यथार्थानुभूतिः सत्यानुभूतिर्वा।

यथार्थतानुभूतिरेषा यथार्थतायाः यथार्थताबोधाच्च भिद्यते। यथा-

"गोरपत्यं बलीवर्दस्तृणान्यत्ति मुखेन सः।"

अत्र यथार्थतायाः सत्ता निर्विवादा। परं वर्ण्यधर्माणां सूक्ष्मताया अभावेनात्र यथार्थतानुभूतेरभावः।

"गोपुच्छं हस्तद्वयपरिमाणं जटिलस्तदन्तभागश्च द्वादशांगुलिपरिमाणः।"

अत्र गोगतधर्मेषु यथार्थतायाः प्रतीतिर्बुद्धिप्रयत्नजन्येत्यत्र यथार्थतानुभूतेरभावः।

अनेनैतत्स्पष्टं यत्सत्यानुभूत्यां तत्त्वद्वयमस्ति—सत्यं तद्गता सूक्ष्मता च। अत्र प्रथमं सत्यं निरूप्यते—

लोको मूलं हि सत्यस्य, लोके सत्यं प्रतिष्ठितम्।
लोकाधारस्ततो रक्ष्यः, कविनाऽभिनिवेशिना॥
लोकसत्येऽनुरागश्चेत्, काव्यस्य रसनीयता।
तत्रैव तदभावे च, तस्य नीरसता मता॥

—काव्यसत्यालोकः

काव्यगतमेतत्सत्यं लोकसम्बद्धम्। एतच्चेत्थम्—काव्ये सत्यस्यास्य कविप्रतिभयोपस्थापनम्। कविप्रतिभायाश्च लोको विषय इति लोकादेव कविनाऽस्य ग्रहणम्। लोकादस्य सत्यस्य ग्रहणे न हि कविनिष्ठोऽनुकरणात्मको व्यापारोऽस्माकं सम्मतः। अत्रायं हेतुर्यदनुकरणे वस्तुनस्तटस्थानु-

सरणम् । अत्र पुनः प्रतिभागम्यस्य लोकसत्यस्यात्मसात्करणम् । आत्मसात्कृतस्यैव चास्य प्रकाशनम् ।

काव्यगतमेतत्सत्यं त्रिविधम्–प्रकृतिगतं प्राणगतं हृदयगतञ्च । प्राणगतमेव सत्यमार्थिकसत्यापरपर्यायम् । अस्य च सत्यस्य त्रिषु प्रकारेषु प्राधान्यम् । यथा—

प्राणा मूलं हि लोकस्य, प्राणाश्चैतेऽर्थमास्थिताः ।
अर्थोन्मुखानि भूतानि, आर्थस्यातः परा स्थितिः ।।

—काव्यसत्यालोकः

काव्येऽस्य सत्यस्योपस्थितिरर्थरूपेण भवतीत्यर्थः काव्यस्य स्वरूपम् । अर्थश्चैष शब्दगम्यस्तदनुस्यूतश्चेति शब्दोऽपि काव्यस्य स्वरूपम् । अनेन प्रकारेण शब्दस्यार्थस्य चेत्युभयोः काव्यस्वरूपतेति साहित्यमित्यस्यान्वर्था संज्ञा ।

अत्र डा० रेवाप्रसादद्विवेदिमहाभागाः कथयन्ति यन्न हि शब्दस्य काव्यस्वरूपेऽन्तर्भावः । अत्र शब्देन किं तात्पर्यमिति तावत् प्रथमं विचारणीयं येन काव्यस्वरूपेणास्य सम्बन्धनिर्णयः स्यात् । शब्दस्यैकं कार्यमस्ति स्वोच्चारणरूपतया प्रस्तुतभावानुकूलस्य कठोरताकोमलतादिकस्य प्रस्तुतिः, अपरञ्च कार्यमस्ति अर्थद्योतकता । अस्मद्दृष्ट्या तु काव्ये प्रथमस्याप्युपयोगिता, द्वितीयस्य तु सा सर्वैरेव स्वीकार्या । किञ्च काव्येऽर्थद्योतनानन्तरं न हि शब्दस्य पृथग्भावोऽपितु काव्यानुभूतौ तस्य मुहुर्मुहुरुपस्थितिरिति न हि तस्य काव्याद्बहिर्भावः । शास्त्रे तु अर्थद्योतनानन्तरं शब्दस्य विराम इति न हि तत्रैतादृशी स्थितिः ।

किञ्च काव्ये न हि सामान्यस्यार्थस्योपस्थितिरपितु विशिष्टस्यार्थस्य । अस्य च प्रसंगविशेषे उपयुक्तता । एषोपयुक्तता शब्दजन्या तत्सम्बद्धा चेति सौन्दर्यचित्रेऽस्य शब्दस्यापि समावेशः । यथा स्त्रिया गुणविशेषान् लक्ष्यीकृत्य कान्ताप्रमदादीनां शब्दानां प्रयोगेऽर्थविशेषस्योपस्थितिः प्रकरणविशेषे च तेषामुपयुक्ततेति तज्जन्ये चारुत्वातिशये एषां शब्दानामपि समावेशः स्वीकार्य । कालिदासविरचितेन निम्नलिखितेनोदाहरणेनैतत्स्पष्टम्–

सरसिजमनुविद्धं शैवलेनापि रम्यम्,
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी,
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥

—अभिज्ञान०

अत्र कमलशब्दस्य स्थाने सरसिजशब्दस्य प्रयोगः प्रसंगदृष्ट्या चास्य प्रयोगस्योपयुक्तता । किञ्च व्याप्तं संलग्नमित्यादिशब्दानां स्थाने अनुविद्धमिति शब्दस्य प्रयोगः । एष चातीव हृद्यः । तन्वीति शब्दस्यापि प्रयोगोऽत्र सार्थक इत्येतच्छब्दजन्ये सौन्दर्यातिशये एषां शब्दानामपि समासोऽत्र स्वीकार्यः । अपरञ्च समग्रश्लोकगतेऽर्थे शब्दानां स्थानक्रमादिकस्यापि महत्त्वमित्येतज्जन्ये सौन्दर्यातिशये एतदनुपेक्षणीयम् ।

किञ्च कविदृष्ट्या सहृदयदृष्ट्या चेत्युभाभ्यामेव दृष्टिभ्यां काव्यस्वरूपे शब्दस्यान्तर्भावः । कविदृष्ट्या दृष्टिपक्षः सृष्टिपक्षश्चेति काव्ये पक्षद्वयम् । प्रथमोऽनुभूतिरूपो द्वितीयश्चाभिव्यक्तिरूपः । न हि एनं द्वितीयं पक्षं विना काव्यस्य पूर्णता । शब्दस्य चास्मिन्नेव पक्षेऽन्तर्भाव इति तस्य काव्यस्वरूपेऽन्तर्भावः स्वीकार्यः ।

अभिव्यक्तेः काव्यबाह्यत्वसाधनाय डा० रेवाप्रसादद्विवेदिमहाभागा निम्नलिखितं तर्कं प्रस्तुवन्ति—

अभिव्यक्तौ तु दुग्धस्य हेतुर्गोपालदारकः ।
किमसौ धेनुभावेन पूज्यते पामरैरपि ॥

—काव्यालंकारकारिका

अत्रोच्यते—

अभिव्यक्तौ तु दुग्धस्य, हेतुरुपस्नुतिः क्रिया ।
नास्या धेन्वा बहिर्भावः, तत्र तस्याः स्थितिर्मता ॥

—काव्यसत्यालोकः

अत्र द्विवेदिमहाभागा वक्तुं शक्नुवन्ति यदुपस्नवनक्रियाया अस्या गोगतत्वेऽपि गोपालदारकजन्यता । अत्रोच्यते यदुपस्नवनक्रिया धेनुगतेच्छाजन्येति गोपालदारकस्यात्र बाह्यतैव ।

डा० द्विवेदिमहाभागा आचक्षते यत्काव्यं ज्ञानरूपं शब्दश्च ज्ञानबाह्य इति तस्य ज्ञानरूपत्वाभावेन काव्यस्वरूपताभावः।

काव्यस्य ज्ञानरूपत्व शब्दत्वं नोपपद्यते।
शब्दस्य ज्ञानतायाञ्च शब्दतव विनश्यति॥

—काव्यालंकारकारिका

अत्रोच्यते —

काव्यस्य ज्ञानरूपत्वे, वैमत्यं न कदाचन।
बाह्यत्वेन स्थितः शब्दः ज्ञानाकारं प्रपद्यते॥
शब्दस्य ज्ञानतायां हि, शब्दो यदि विनश्यति।
अर्थस्य ज्ञानतायां हि, नश्येदर्थ इति ध्रुवम्॥

—काव्यसत्यालोकः

सत्यस्य विवेचनानन्तरं सम्प्रति सत्यगतायाः सूक्ष्मतायाः विवेचनं प्रस्तूयते। अस्मिन् प्रसंगे एतत्सूक्ष्मताधानस्य काव्यगता ये उपायास्तेऽत्र विचारणीयाः। अत्र प्रथम उपायो विद्यते लोकगतस्य सत्यस्य सूक्ष्मधर्माणामुपादानम्। समर्थनहेतूपादानादिभिरप्यस्याः सत्यगतायाः सूक्ष्मतायाः प्रकाशनमित्येतेऽन्ये उपायाः। काव्ये सूक्ष्मधर्मा शब्दगम्या इति तेऽर्थरूपाः शब्देनार्थप्रतीतिः शब्दव्यापाराश्रिता इत्यस्य व्यापारस्य सूक्ष्मतायां कश्चनातिशय इत्येषोऽपर उपायः। काव्ये सूक्ष्मधर्माणां प्रतीतिरनुभूतिरूपा भावयोगेन चात्र तीव्रतेत्येष भावयोगोऽपि विचारणीयः।

काव्ये सूक्ष्मधर्माणामुपादानम् :—लोके पदार्थानामुपस्थितिर्धर्मादिरूपेण भवति। धर्मादयश्च द्विविधाः-साधारणा असाधारणाश्च। साधारणधर्माणां पदार्थान्तरेष्वपि स्थितिरिति पदार्थोपस्थितौ न हि तेषां महत्त्वम्। असाधारणानां पुनः केवलं प्रस्तुत एव पदार्थे स्थितिरिति तदुपस्थितौ तेषां महत्त्वम्। किञ्च काव्ये लोकगतस्य सत्यस्य निरूपणमिति लोकगतानामेव पदार्थानामत्र वर्णनम्। इयांस्तावद् विशेषो यत्काव्यगताः पदार्था न हि पदार्थसामान्या अपितु पदार्थविशेषाः। एष च विशेष एतेषां स्थितिवैशिष्ट्यमिति स्थितिविशेषमापन्नानां। तेषां निरूपणमभीष्टम्। यथा-मृग एकः पदार्थसामान्यः। परं काव्ये न हि अस्य मृगसामान्यस्य

वर्णनमपितु स्थितिविशेषमापन्नस्य तस्य। 'ग्रीवाभंगाभिरामम्-' इति कालिदासविरचित प्रसिद्धे उदाहरणे भयमापन्नस्य मृगस्य धावनमेव स्थितिविशेष इत्यस्यैवासाधारणधर्माणामत्रोपादानम्। एत एव धर्माः सूक्ष्माः। एषाञ्चोपादानेन कियत्सत्यमेतद्वर्णनमित्येवरूपा सत्यानुभूतिः।

काव्ये सादृश्यविधानम्:—काव्यगते सत्ये सूक्ष्मताधानाय अप्रस्तुतविधानमपेक्षितम्। एतच्च सादृश्यरूपम्। तद्यथा-मुखगतं सौन्दर्यं कवेर्वर्ण्यविषयः। अत्र सौन्दर्यं न हि सौन्दर्यसामान्यमपितु सौन्दर्यविशेषः। एष विशेष एव तद्गता सूक्ष्मता। अस्य विशेषस्य प्रकाशनाय कमलचन्द्रादीनामन्यतमस्योपमानरूपेण प्रयोगः। तेन च कश्चन चारुत्वातिशय इति स्पष्टम्।

काव्ये समर्थनोपादानम्:—समर्थनं दृढीकरणापरपर्यायम्। इदञ्च द्विधा-सामान्यस्य विशेषेण विशेषस्य च सामान्येन। अनेन सत्यागतायाः सूक्ष्मतायाः प्रकाशनम्। यथा—

'बृहत्सहायः कार्यान्तं क्षोदीयानपि गच्छति।
सम्भूयाम्भोधिमभ्येति महानद्या नगापगा॥'

अत्र प्रथमायां पंक्तौ सामान्यसिद्धान्तस्योपादानम्। एष सिद्धान्तो लोकगतसत्यरूपः। द्वितीयायां पंक्तौ विशेषस्योपादानमित्यत्र अस्यैव सत्यस्य सविशेषा प्रतीतिः। अनेन चात्र सूक्ष्मताया आविष्करणम्।

काव्ये हेतुपादानम्:—हेतूपादानेनापि सत्यगतायाः सूक्ष्मतायाः प्रतीति। निम्नलिखितेनोदाहरणेनैतत्स्पष्टम्—

यस्त्वन्नेत्रसमानकान्ति-सलिले मग्नं तदिन्दीवरम्,
मेघैरन्तरितः प्रिये! तव मुखच्छायानुकारी शशी।
ये हि त्वद्गमनानुसारिगतयस्ते राजहंसा गताः,
त्वत्सादृश्य विनोदमात्रमपि मे दैवेन न क्षम्यते॥

अत्र चतुर्थपंक्तिग ऽर्थे न हि पूर्वतोऽस्माकं विश्वास इति तत्र सत्यताप्रतीतेरभावः। परं हेतुरूपेणोपात्तैरस्यैव विशेषैराद्यपंक्तित्रयगतैरर्थैर्नहि अत्र केवलं सत्यताविष्करणमपितु तत्र सूक्ष्मतायाः प्रतीतिः।

काव्ये विरोधोपादानम् :—विरोधोपादानेऽपि सत्यगतायाः सूक्ष्मतायाः प्रतीतिः। निम्नलिखितेनोदाहरणेनैतत्स्पष्टम्—

अनायासकृशं मध्यमशंकतरले दृशौ।
अभूषणमनोहारि वपुर्वयसि सुभ्रुवः॥

अत्र आयासाभावेऽपि मध्यभागस्य कार्श्यमिति विरोधः। विरोधोऽयमाभासरूपो न तु तात्त्विक इति मध्यभागकार्श्यस्य यौवनजन्यत्वेन प्रतीतिः। तेन च विरोधस्य परिहारः। कार्श्यमेतत्पूर्वस्मात्कार्श्याद्भिन्नमित्यत्र सूक्ष्मतायाः प्रतीतिः।

सूक्ष्मधर्मादयो य उपाया अत्र वर्णितास्त एव काव्येऽलंकारपदवाच्या इति मे मतिः।

व्यापारयोगः—व्यापारो वस्तुतो बुद्धिवर्तिनी क्रिया शब्दश्रवणानन्तरञ्च बुद्धौ अस्या आविर्भावः। अनेनैवार्थस्य प्रतीतिः। व्यापारेऽस्मिन् सूक्ष्मतामापन्ने एतद्गम्येऽर्थेऽपि सूक्ष्मताप्रतीतिः। अर्थसूक्ष्मताधायक अयमेव व्यापारो व्यञ्जनेत्यस्माकं मतम्। आनन्दवर्धनादिभिरप्यस्यैव मतस्य समर्थनम्। तद्यथा—

यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यंङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥
शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते।
वेद्यते स तु काव्यार्थतत्त्वज्ञैरेव केवलम्॥

—ध्वन्यालोकः

अत्र प्रथमायां कारिकायां व्यंग्यार्थस्य वाच्यार्थव्यतिरिक्तता, द्वितीयायाञ्चास्य काव्यार्थतत्त्वज्ञैरेव वेद्यता प्रोक्ता। अनेनास्यार्थस्य चेतनारोहे चेतनासूक्ष्मावस्थायां वा अभिव्यक्तिरित्येतदर्थंगतस्य व्यञ्जनाव्यापारस्य सूक्ष्मता ज्ञेया।

एवं सति गूढं सच्चमत्करोतीति मम्मटोक्तं मतमत्र विचार्यते। एतदेव स्पष्टीकुर्वता मम्मटेन कामिनीकुचकलशवद् गूढं सच्चमत्करोतीत्युपन्यस्तम्। अतो यथा वस्त्रादिसूक्ष्मावरणेन कामिनीकुचकलशस्य

शोभाधानं तथा वाच्यार्थरूपेणाप्यावरणेन व्यंग्यार्थस्य शोभाधानमिति पर्यवसितम्। मम्मटसम्मतस्यास्य मतस्य द्वावंशौ-व्यंग्यतादशायां वाच्यार्थस्य व्यंग्यार्थावरकत्वेन स्थितिः, आवरणस्य शोभाधायकत्वं लोकानुभवेन सिद्धञ्च। अत्र प्रथमांशो व्यञ्जनोदाहरणप्रदर्शनपुरस्सरं निरूप्यते। यथा–

मातर्गृहोपकरणमद्य नास्तीति साधितं त्वया।
तद् भण किं करणीयमेवमेव न वासरः स्थायी॥

—काव्यप्रकाशः

अत्र स्वैरविहारार्थिनीत्यर्थो व्यंग्यः। वाच्यार्थोऽस्यावरणम्। अतो वाच्यार्थस्यात्र व्यंग्यार्थावरकत्वेन स्थितिः। अथ गंगायां घोष इति द्वितीयमुदाहरणं प्रस्तूयते। अत्र घोषगतपावनत्वप्रतीतिर्व्यंग्या न च तत्र वाच्यार्थस्यावरकत्वेन स्थितिरिति व्यंग्यार्थस्याऽऽवृतत्वं गूढता वेति सिद्धान्तस्य हानिः। गूढता पुनर्यदि सूक्ष्मतापरपर्याया तदा सर्वं सुस्थम्। किञ्च पूर्वस्मिन्नुदाहरणे वाच्यार्थस्य यद्व्यंग्यार्थावरकत्वेनोपादानं तत्र लोकसत्यानुरोध एव कारणम्। तच्चेत्थम्-वाच्यार्थप्रयोजकं वाक्यमत्र स्वैरविहारार्थिन्या प्रयुक्तम्। स्वैरविहारार्थिन्या च स्वचेष्टागोपनं लोकसत्यानुगतमित्यत्रावरणस्यापि सत्यगतसूक्ष्मत्तायामन्तर्भावः।

किञ्च कुत्रचिद् वाच्यार्थगतस्यांशविशेषस्य सत्यपि व्यंग्यार्थावरकत्वे अवशिष्टस्यांशस्य न हि केवलं व्यंग्यार्थावरकत्वाभावः प्रत्युत तत्प्रकाशकत्वम्। यथा—

निश्शेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गताऽसि न पुनस्तस्याधमस्यान्तिकम्॥

—काव्यप्रकाशः

अत्राधमपदवाच्यस्य न हि केवलं व्यंग्यार्थाविकरत्वाभावोऽपितु प्राधान्येन तत्प्रकाशकत्वम्।

सम्प्रति आवरणस्य शोभाधायकत्वं लोकानुभवेन सिद्धमिति द्वितीयांशो निरूप्यते। अत्र मम्मटेन कामिनीकुचयोर्यदुदाहरणं प्रस्तुतं

तत्तु स्त्रीत्वस्थूलताया द्योतकम् । स्थूलता हेया सूक्ष्मता चोपादेयेति सिद्धान्तः । अनेन कामिनीकुचयोरावरणाधानस्यौचित्यम् । असत्यामस्यां स्थूलतायामावरणाधानस्यानौचित्यम् । कान्तामुखमत्र निदर्शनं मतम् । भावाभिव्यञ्जकत्वान्मुखे स्त्रीगतायाः सूक्ष्मताया सद्भाव इत्यत्रावरणाधानस्यानौचित्यम् । अपरञ्च व्यंग्यार्थगतस्य सौन्दर्यस्य स्पष्टीकरणाय आनन्दवर्धनेन यल्लौकिकोपमानस्योपादानं तत्र न हि आवृतत्वादिविशेषणयोगः । यथा—

प्रतीयमानं पुनऽन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवांगनासु ।।

—ध्वन्यालोकः

अत्रांगनालावणस्योपमानत्वेनोपादानम् । न चात्र आवृतत्वादिविशेषणयोग इति लोके सौन्दर्याधानाय न हि अवयवेष्वावरणाधानं नियतमिति स्पष्टम् ।

व्यञ्जनागतस्य चमत्कारस्य व्यापारसूक्ष्मताजन्यत्वेऽपि न हि अत्र लोकगतस्य सत्यस्य सूक्ष्मधर्माणामाधानमुपेक्षणीयम् । यत एतदभावे व्यापारमात्रजन्यस्य चमत्कारस्य न हि वैशिष्ट्यं स्यात् । तद्यथा–'निश्शेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरः' इत्यस्मिन्नुदाहरणे चन्दनच्यवनादीनां धर्माणां रमणक्रियारूपेण सत्येन सह सूक्ष्मः सम्बन्ध इत्येते सत्यगताः सूक्ष्मधर्माः । अधम इति प्रयोगस्याप्यनेनैव प्रकारेण सूक्ष्मतेत्यत्र सत्यगतसूक्ष्मधर्माणामाधानेन व्यंग्यगतस्य चमत्कारस्य वैशिष्ट्यम् । गतोऽस्तमर्क इत्यत्रास्याः सत्यगतायाः सूक्ष्मताया अभाव इति सतोऽपि व्यंग्यगतस्य चमत्कारस्य न हि तादृशं वैशिष्ट्यम् ।

भावायोगः—भावयोगः सत्ये जायते । सत्यञ्च प्राकृतिकमार्थिकञ्चेत्याभ्यां रूपाभ्यां सह भावयोगः । भावाश्चेतनापरिणामा इति न हि स्वतः प्राकृतिकसत्येन सह एषां योगसम्भावना, परमस्मिन् सत्ये चेतनारोपे एव योगोऽस्तीति ज्ञेयम् ।

**आर्थिकसत्ये भावयोगः**—अत्र आर्थिकसत्यस्य सूक्ष्मं चित्रणम्। श्रमिकवर्गस्य धनाढ्यवर्गस्य चान्तर्भाव इत्यनयोरत्र सूक्ष्मं चित्रणम्। अनेन सूक्ष्मेण चित्रणेन पात्रादीना साधारणीकरणम्, तद्यथा—श्रमिक-विशेषस्य धनाढ्यविशेषस्य च पात्रत्वेऽनयोर्विशेषांशपरिहारेण सामान्यांशस्य ग्रहणमिति श्रमिकसामान्यस्य चात्र प्रतीतिः।

अत्र पात्राणि प्रति सहृदयस्य द्विधा प्रवृत्तिः अनुकूला प्रतिकूला च। येषु पात्रेष्वाकर्षणं तेष्वनुकूला प्रवृत्तिः, येषु च विकर्षणं तेषु प्रतिकूला प्रवृत्तिः। श्रमिकेष्वस्माकमाकर्षणमित्यत्रानुकूला प्रवृत्तिः, धनिकेषु च विकर्षणमित्यत्र प्रतिकूला प्रवृत्तिः। एतच्चेत्थम्—भौतिकानयमानुसारं यत्र श्रमरूपा क्रिया तत्रैव तस्य परिणामस्य स्थितिः। परं लोकगते आर्थिकसत्ये श्रमस्य स्थितिः श्रमिके तज्जन्यस्यातिरिक्तार्थस्य च स्थितिर्धनाढ्य इति स्वश्रमफलाद्वञ्चिते श्रमिकेऽस्माकमाकर्षणम् श्रमापेक्षया अधिकार्थप्राप्तिकारिणि च धनिके विकर्षणम्। सत्यप्यस्मिन् विकर्षणे धनिकस्याधिकार्थप्राप्तिर्लोकगतस्यार्थिकसत्यस्यागमित्यनया दृष्ट्या तत्र विकर्षणाभावः।

ननु काव्ये पात्रादीना साधारणीकरणम्। साधारणीकरणे च सम्बन्धविशेषस्वीकारपरिहाराभाव इति कथमत्रानुकूलतादिकस्य प्रतीतिरिति चेदुच्यते साधारणीकृतेष्वपि पात्रेषु अनुकूलतादिकस्य यथाकथञ्चित्स्थितिरिति रामायणे राम प्रति अस्माकमनुकूलताप्रतीतिः, रावणं प्रति च तदभावः।

आर्थिकचित्रणे भावयोगस्य शोकादारम्भः। एष शोकः शोषितवर्गगत आर्तनादः। एष एव वर्गसंघर्षस्य बीजमित्यस्मादेकतः शोकस्योत्तरोत्तरं विकासः, अपरतश्च संघर्षस्य विकासेन भावानां क्रमिको विकासः। शोकस्यात्र तिस्रोऽवस्थाः—आधिर्व्याधिश्च मरणञ्च। भावानामपि विकासस्य तिस्रोऽवस्थाः—रोषः, उत्साहः क्रान्तिश्च।

आधिरत्र दारिद्र्यजन्यः। दारिद्र्यमेतच्छोषण-रूपमित्यस्मादेकतः शोकस्य अपरतश्च क्रोधस्योत्पत्तिः। क्रोधादुत्साहस्याविर्भावः। शोकस्य वेगे अस्योत्साहस्य मन्दता, शोकस्य मन्दतायाञ्चोत्साहस्य। वेग इत्यनयोर्मिथः क्रमः। अत्रापरेषामपि श्रमिकाणां समा अवस्थेति तत्र वर्ग-

भावना। अनया चोत्साहस्य वृद्धिः। उत्साहप्रयोजके शोषणे शोषककृता-नामपमानादीनामपि योग इति क्रोधस्य संधुक्षणेनोत्साहस्य दीप्तिः।

व्याधिरपि शोषणजन्य इत्येतज्जन्यया शोकपरम्परया सह क्रोध-स्यापि परम्परा। अनया चोत्साहस्याविरामः।

व्याधेश्च चरमा परिणतिर्मरणे। मरणमेतत् प्राणानामाहुतिः। आहुतिश्चैषा संघर्षाग्नावित्यस्याग्नेरभिवृद्धिः। एवं क्रान्तिः। शोषिता बुद्धिजीविनोऽस्याः संचालकाः। अस्याः क्रान्तेः शोषितवर्गस्य विजये परिणतिः।

ध्वनिवादिभिरेवंविधे भावयोगे अलक्ष्यक्रमव्यंग्यध्वनिः स्वीकृतः। अनेनात्र व्यंग्यक्रमस्य प्रतीतेरभाव इति स्पष्टम्। व्यंग्यक्रमस्य प्रतीत्यभावे ऽप्यत्र यो विशेषस्तत्र विभावादिप्रतिपादनम् आन्तरिकस्य च भावस्य तत्र योग एव हेतुः। विभावादीनामस्मन्मतानुसारं सत्यगतसूक्ष्मतायामन्तर्भाव इति भावयोगपूर्वकमेवास्याः सत्यगतसूक्ष्मताया विवेचनं युक्तियुक्तम्। तेन चात्र सत्यानुभूतिरिति वक्तुं शक्यम्।

किञ्च भट्टलोल्लटादिभिर्भरतमुनिप्रणीतस्य रससूत्रस्य यद्विवेचन कृतं तस्य समीक्षणमस्मत्सम्मतमेव मतं द्रढयति। तद्यथा—

मुख्यया वृत्त्या रामादावनुकार्ये तद्रूपतानुसन्धानान्नर्तकेऽपि प्रतीय-मानो रत्यादिको भावो रत्यादिकस्य भावस्य प्रतीतिर्वा रस इति लोल्लट-सम्मतम्। प्रतीतिरेषा सहृदयगतेती रत्यादिकस्यानुकार्यगतत्वेन नर्तकगत-त्वेन वा सहृदयगता प्रतीती रसः। परं रत्यादिकस्य परगतत्वेन प्रतीतिर्न हि चारुत्वावहेत्यस्य भावस्य न हि व्यक्तिविशेषगतत्वेन प्रतीतिः स्वीकार्या। किञ्च रामादिसम्बन्धिनि वर्ण्यविषयेऽत्र सत्यता सूक्ष्मता च स्वीकर-णीया। सत्यगतां सूक्ष्मतां प्रति अस्माकं रागसामान्यमित्यत्र चमत्कारो-त्पत्तिः। एवैवास्मत्सम्मता सत्यानुभूतिः।

श्रीशंकुकमतानुसारं नटप्रकाशितैः कृत्रिमैरपि विभावादिभिर्नटेऽ-सतोऽपि रत्यादिकस्य भावस्य सामाजिकेन यदनुमानं स रस इति फलितम्। अत्रोच्यते—लोके पर्वतगतस्याग्नेर्येन धूमेनानुमानं तस्य यथार्थतैव न तु कृत्रिमता। अत्र च विभावादीनां कृत्रिमतेत्यस्यानुमानस्या युक्तता।

ननु सकृत्कृतमनुमानं स्वप्रभावं दर्शयत्येवेति तस्य हेतोः कृत्रिमता अकृत्रिमता वेत्यविचारणीयमिति चेदुच्यते–एवंविधस्यानुमानस्य कालान्तरे बाधः सम्प्रति च भ्रान्तिरूपता स्यात् न चैतत् श्रीशंकुकस्यापि सम्मतम्।

किञ्च न हि अनुमीयमानयाऽपि रत्या चमत्कारानुभूतिः। अत्र चायं हेतुर्यदनुमानं बौद्धिकव्यापारविशेष इति तत्र चमत्काराभावः।

ननु वस्तुसौन्दर्यबलाद्रसनीयत्वेनास्मिन्ननुमाने चमत्कार इति चेत् पृच्छ्यते कुत एतदनुमेयगतं सौन्दर्यम्। अनुमेया तावदत्र नटगता रतिः। सा च परगता सामाजिकस्य कृते इति न हि तत्र सौन्दर्यस्य प्रतीतिः। अनेन सौन्दर्यमेतद् वर्ण्यविषयस्य सत्यगतसूक्ष्मतामाश्रयत इति स्वीकार्यम्। एषैवास्मत्सम्मता सत्यानुभूतिः।

भट्टनायकमतानुसारं भावकत्वव्यापारेण विभावादीनां साधारण्येन स्थायिनोऽपि साधारणीकरणम। साधारणीकृतस्य चास्य भोजकत्वव्यापारेण भोगः।

अत्र विभावादीनां यत्साधारणीकरणं स्वीकृतं तत्त्वस्माकमपि सम्मतम्। परमस्य साधारणीकरणस्य को हेतुरित्यपि विचारणीयम्। अस्य चैतदेवोत्तरं यत्सत्यगता सूक्ष्मता अत्र हेतुः। अनया सूक्ष्मतया सत्यानुभूतिरत्र दुर्वारा।

श्रीमदाचार्याभिनवगुप्तसम्मतं रससूत्रविवेचनमेवमस्ति–
"तैरेव कारणत्वादिपरिहारेण विभावनादिव्यापारवत्त्वादलौकिकविभावादिशब्दव्यवहार्य्यैः–साधारण्येन प्रतीतैरभिव्यक्तः सामाजिकानां वासनात्मया स्थितो रत्यादिको रस."।

अत्राभिनवगुप्तसम्मतं साधारणीकरणमस्माकमपि सम्मतम्। अस्य साधारणीकरणस्य को हेतुरिति विचार्यमाणे विभावादिगतं सत्यं सौक्ष्म्यञ्चात्र हेतुरिति तत्प्रयोज्या सत्यानुभूतिरत्र दुर्वारा। अभिनवगुप्तमतानुसारं वासनात्मतया स्थितः सम्प्रति चाभिव्यक्तो रत्यादिक एव रसः। रत्यादिकस्य वासनात्मतया स्थितिः, तस्याभिव्यक्तिश्चास्माकमपि सम्मता। परं महत्त्वमत्र एतद्रत्यादिक–परामृष्टाया विभावादिगतायाः सत्यताया

प्रतीतेरित्यत्र सत्यानुभूतिः। अभिव्यक्तस्य रत्यादिकस्य कथं रसरूपतेत्यत्र विचारणीयम्। रतिभिन्ना रसश्च भिन्न.। अतो न हि प्रथमस्यान्यरूपता। रतेरभिव्यक्तावपि न हि रतित्वस्य हानिः। किञ्चात्र साधारणीकरणेऽपि रतित्वमव्याहतमिति न हि एकस्यान्यरूपता। यदि च रत्यादिकस्याभिव्यक्तौ रतित्वादिकस्य हानि. स्यात्तर्हि शृंगारादिषु रसेषु भेदस्य किं विनिगमक स्यादिति रतित्वादिकस्य स्थितिरत्रापरिहार्या। किञ्च क्रोधादयो रजोगुणप्रधानाः रसश्च सत्त्वगुणप्रधान इति कथमेषां रसरूपता। ननु रत्यादिकस्याभिव्यक्तौ रतित्वादिकस्य सत्त्वेऽपि तत्त्वान्तरस्य योग इति रसानुभूतिसम्भावनेति चेदुच्यते किमिदं तत्त्वान्तरम्? आन्तरिकं बाह्यं वा? यदि बाह्यं तर्हि विभावादिकमेवैतद्भवितुमर्हति। यदि चान्तरिकं तर्हि आन्तरिकस्यापि तत्त्वस्य न हि बाह्यतत्त्वाभावे स्फूर्तिरिति किमपि बाह्यं तत्त्वमस्य प्रयोजकत्वेन स्वीकार्यम्। एतद्विभावादिकमेव भवितुमर्हति। अत्रापि अनुभूतिप्रयोजकत्वाय कश्चन विशेषः स्वीकार्यः। एष एव विशेषो विभावादिगता सत्यता सूक्ष्मता च। अस्य विशेषस्यैतज्जन्ये आन्तरिकतत्त्वेऽपि परिस्फुरणमिति सत्यानुभूतिरत्रानायत्या आयाता।

---

# व्याकरणशास्त्रीयो विवेचनात्मको लेखः

डॉ० गंगाधर भट्टः

कृत्स्नोऽक्षर समाम्नायो दृष्टो ऋषिमहर्षिभिः।
सविशेषन्तमाचख्यौ पाणिनिर्मुनिसत्तमः॥

"सर्वज्ञानमयो हि सः" इति मनोरनुशासनमनुसृत्येदं विनिश्चेतुं शक्य यत् संसारे यावत् ज्ञानं प्रवृत्तं तस्य निखिलस्यादिमूलं वेदा एव। शब्दशास्त्रस्य मूलमपि वेदेष्वेव सर्वथा निहितमित्यत्र नास्ति संशीतिलेश। वैदिक मन्त्रेषु अनेकेषां शब्दानां याः व्युत्पत्तयः समुपलभ्यन्ते ताभिरस्य सिद्धान्तस्य सुतराम् पोषणं जायते। उदाहरणार्थं-"यज्ञेन यज्ञमयजन्त देवा." इति ऋग्वेदस्य प्रथममण्डलीये मन्त्रे अष्टाध्याय्याः "यजयाचयत विच्छ प्रच्छ रक्षो नङ्" इति सूत्रेण 'यज्' धातोः नङि यज्ञ शब्दः सिध्यति। ऋग्वेदस्य प्रथममण्डले पठ्यमाने "चत्वारि वाक् परिमिता पदानि" इति मन्त्र 'महर्षिणा यास्केन व्याकरणशास्त्रात्मिका व्याख्या विहिता। "नामाख्याते चोपसर्ग-निपाताश्चेति वैयाकरणाः" इति निरुक्तदृशा स्पष्टमिदं जाजायते।

संस्कृत-वाङ्मये शब्दशास्त्रमत्यन्त महत्त्वपूर्णं स्थानमादधाति। तस्य यदपि वाङ्मयमयत्वे समुपलभ्यते तदप्यति विस्तृत सुविशालञ्च।

शब्दशास्त्रस्य कृते व्याकरण-शब्दस्य प्रयोगो रामायणे, महाभारते गोपथ ब्राह्मणे मुण्डकोपनिषद् आदिषु नैकेषु ग्रन्थेषु प्राप्यते। महाभारतस्योद्योग-पर्वणि व्यासेन निर्दिष्टम् यत्-"सर्वार्थानां व्याकरणात् वैयाकरण उच्यते। तन्मूलतो व्याकरणं व्याकरोतीति तत्तथा इति। व्याक्रियन्ते व्युत्पाद्यन्ते शब्दा अनेनेति शब्दज्ञानजनकम् व्याकरणम्। येन तन्त्रेण साधुशब्दानां सम्यग् बोधो ज्ञानं वा जायते तद्धि व्याकरणम्। अमुष्य एव अपरं नाम शब्दानुशासनमिति। संस्कृत-वाङ्मये व्याकरणस्य गौरवपूर्णं यत् स्थानं वर्तते तदनेनैव प्रमाणीभवति यदस्य गणना वेदस्य षडङ्गेषु विहिता। प्रधानञ्च तेषु व्याकरणं यन्मुखरूपेण व्यवह्रियते—

मुखं व्याकरणन्तस्य ज्यौतिषं नेत्रमुच्यते।
निरुक्तं श्रोत्रमुद्दिष्टं छन्दसां विचितिः परे।
शिक्षा घ्राणन्तु वेदस्य हस्तौ कल्पान् प्रचक्षते।

महर्षिणा पतञ्जलिना ब्राह्मणस्य कृते निर्हेतुकं व्याकरणस्याध्ययनं प्रतिपादितम्। सः सुस्पष्टया गिरा समुद्गिरति-"ब्राह्मणेन निष्कारणो धर्मः षडंगो वेदो ध्येयो ज्ञेयश्च। षडंगेषु प्रधानं व्याकरण प्रधाने च कृतो यत्नः फलवान् भवति" इति। वस्तुतः इद निश्चप्रचमेव यद् व्याकरणस्य ज्ञानं विना वेद-वेदान्तस्य, स्मृति-पुराणानां काव्यनाटकादीनां ज्ञान सुचारु रूपेण भवितुं न शक्नोति। विषयेष्वेतेषु विषयान्तरेषु वा प्रवेश एव सुदुर्लभः। अन्यस्य कस्यापि शास्त्रस्य शास्त्रान्तरस्य वा अध्ययन क्रियेत वा न वा व्याकरणशास्त्रस्याध्ययनमवश्यकर्तव्यतया प्रतिपाद्यते। यतो हि व्याकरणशास्त्रस्याध्ययनं विना शब्दानां समुचितः प्रयोगो दुष्करः। शब्दानां समुचितप्रयोगाभावेऽर्थस्यानर्थोऽपि आशङ्क्यते। निखिलेस्मिन् वैरिञ्च-प्रपञ्चेऽनादिकालात् जनानां तापत्रयोत्पाटनपटीयः ज्ञानमेवामेवामनन्ति मोक्षोपायतया यतयो महर्षयश्च। तच्च ज्ञानमाम्नाय पर्यालोचनोल्लसद् विवेकोद्रेकादेव समधिगन्तुं शक्यते इति नास्ति परोक्ष प्रेक्षावताम्। पर्यालोचनं च तत्तच्छब्दानुबन्धि तत्तच्छक्ति ग्रहाधीनम्। शक्तिग्रहस्तु-"शक्तिग्रहं व्याकरणोपमान कोशाप्तवाक्याद् व्यवहारतश्चे" ति भणतिमनुसृत्य प्राधान्येन व्याकरणादेव बोभवीतीति तदैव सर्वतः प्राक् समाश्रयणीयम्।

व्याकरणञ्च मुख्यतो नवधानुश्रूयते—

ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतं चापिशलं शाकलं पाणिनीयकम्॥ इति

साम्प्रतं जैनेन्द्राशुबोधकातन्त्राद्यभिधानानि विविधानि व्याकरणान्युपलभ्यन्ते। किन्तु सत्स्वप्येतेषु व्याकरणेषु निखिललौकिकालौकिक-शब्दानां व्युत्पादकतया पाणिनीय-व्याकरणमेव सर्वेषां मूर्धन्यं सत् वेदाङ्गतामाधत्ते। इदमक्षरं छन्दोवर्णशः समनुक्रान्तं ब्रह्मा बृहस्पतये प्रोवाच बृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाजः ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यः। तं खल्विममक्षरसमाम्नायमित्याचक्षते, न भुक्त्वा न नक्तं ब्रूयाद् ब्रह्मराशिः।" इति ऋक्तन्त्रव्याकरणोक्तरीत्या अक्षर स्वरूपस्यास्य चतुर्दशसूत्रसमूहस्य आम्नायत्वं निष्पद्यते, तन्मूलत्वाच्च इदं वेदस्य मुखमिति

प्राधान्यमस्य व्याकरणस्य । एतस्य व्याकरणस्य प्रणेतुः महर्षेः पाणिनेः परिचयजिज्ञासा स्वाभाविकी विद्यते, अतस्तद्विषये किंचिद्विनिवेद्यते-तत्रायं व्याकरणस्यादिराचार्यो महानुभावः पाणिनिः शालंकनामधेयस्य पितुः जायाया दाक्ष्यां जन्म लेभे । यद्यपि अमुष्याभिधानम् "आहिक." इत्यवर्तत किन्तु गोत्राश्रयः "पाणिनि" नाम्नैवाय प्रसिद्धिमापेदे । त्रिकाण्डशेषे पुरुषोत्तमदेवः पाणिनेर्नामान्तराणि व्याचख्यौ—

पाणिनिस्त्वाहिको दाक्षीपुत्रः शालङ्किः पाणिनी ।
शालोत्तरीयः ।

श्लोकात्मिकयाः पाणिनि-शिक्षायाः याजुषपाठे पाणिनेय 'इति नामापि समुपलभ्यते । उक्तञ्च-दाक्षीपुत्रः पाणिनेयो येनेदं व्याहृतं भुवि । *यशस्तिलकचम्पू नाम्नि काव्ये' पणिपुत्र शब्दस्यापि व्यवहृतिर्दरीदृश्यते ।* नकारान्तात्पणिन् शब्दादपत्यार्थेऽण् प्रत्यये पाणिन शब्दः सिध्यति । पाणि-*नीय शब्दस्य मूलप्रकृतिः पाणिनः इत्येवाकारान्तः शब्दः, तस्माच्छब्दाद्* वृद्धाच्छः इत्यनेन छ प्रत्यये आयनेयीत्यादिना छस्य स्थाने ईय् प्रत्यये "पाणिनीयम्" शब्दः सिद्धिमश्नुते । इकारान्तात्पाणिनि-शब्दात् *पाणिनिना* प्रोक्तमित्यर्थे इञश्चेति पाणिनिसूत्रेणाण प्रत्यये पाणिन शब्द एव उपपद्यते । इत्थमेव इकारान्ताभ्यामापिशलिकाशकृत्स्नि शब्दाभ्या 'आपिशलिकाशकृत्स्निशब्दाभ्यामञ्चेति सूत्रेणापि आपशलम् काशकृत्स्नमित्येव सिध्यतः । ग्रन्थकर्तुरस्य पाणिनिरिति नाम लोकविश्रुतम् । नाम्नोऽस्य व्युत्पत्तिविषये वैयाकरणानां नास्ति मतैक्यम् । अत्र केचन कैयटादयो नकारान्तात्पणिन् शब्दात् पणिनोऽपत्यमिति विग्रहेऽणि पाणिन. शब्दस्य सिद्धि मन्वते । तदनन्तर पाणिनस्यापत्यमिति विग्रहे "अत इञ्" त्यनेन इञ् प्रत्यये पाणिनि शब्द-निष्पत्ति. ।

काशकृत्स्न-धातु व्याख्यानानुसार पाणिन् 'शब्दस्यापरपर्यायोऽकारान्तः पाणिन शब्द. स्वतन्त्ररूपेण व्यवह्रियते । तस्मात् अकारान्तात्प-*णिन शब्दादतइञित्यनेनेञि पाणिनि शब्द. निष्पद्यते ।* तथाहि—पाणिनः मुनिः । पाणिनिः पाणिनः पुत्रः । किन्त्वत्रेदं चिन्त्यम् । पाणिनेः कृते *प्रयुक्तेन पाणिनपुत्रशब्देन इदमेव प्रतीयते यत् नकारान्तात्पणिन् शब्दादप*-त्यार्थे बाह्वादिभ्यश्चेत्यनेनेञ् प्रत्यये पाणिनि शब्दः सिद्धिमेति । दाक्षीपुत्र-*शब्दस्योल्लेखो महाभाष्ये श्लोकात्मक-पाणिनीय-शिक्षायां दृष्टिपथमायाति ।*

यथाहि महाभाष्ये पतञ्जलिना निगदितम्-सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः' इति 'शंकरः शांकरीं प्रादाद् दाक्षीपुत्राय धीमते' इति । पाणिनीय-शिक्षायामपि दाक्षीपदं गोत्रप्रत्ययान्ताद् 'दाक्षिः' शब्दात् स्त्रीत्वविवक्षाया निष्पद्यते । अत इदमनुमीयते यत्पाणिनेर्माता दक्षकुललब्धजनुषया भवितव्यम् ।

महाभाष्ये आचार्यः पतञ्जलिः पाणिनिमाचार्यत्वेन निर्दिदेश, तद्धि पाणिनिं प्रति भाष्यकारस्य अपरिमितां निष्ठां श्रद्धाञ्चाभिव्यनक्ति । यथा हि पातञ्जल-महाभाष्ये समुदीरितम् "न ह्याचार्याः सूत्राणि कृत्वा निवर्तयन्ति' इति । आचार्यस्यास्यानेके शिष्याः अवर्तन्त । पातञ्जल-महाभाष्ये एकमुदाहरणं वेविद्यते-"उपसेदिवान् कौत्सः पाणिनिम्" इति । अस्यैव सूत्रस्य व्याख्यायां काशिकावृत्त्यामपि उदाहरणद्वयी समुपलभ्यते-" अनूषिवान् कौत्सः पाणिनिम्, उपशुश्रूषिवान् कौत्सः पाणिनिम् इति च उदाहरणाभ्यां सुस्पष्टमेतत्प्रतिभाति यत् कौत्सनामा कश्चन पाणिने शिक्षामग्रहीत् । वार्तिककारो वररुचिः कात्यायनोऽपि पाणिनेः शिष्य आसीदित्यपि नागेश-विरचिताल्लघुशब्देन्दुशेखरात् ध्वन्यते । अन्यत्रापि पाणिनेः शिष्यसम्प्रदायस्योल्लेखः प्राप्यते । काशिका-वृत्तौ 'पूर्वपाणिनीयाः, अपर पाणिनीयाः इति पाणिनीय-शिष्याः द्विधा विभक्ता आसन् । वैयाकरण-महाभाष्येऽपि पतञ्जलिना प्रोक्तम्-" उभयथा ह्याचार्येण शिष्याः सूत्रं प्रतिपादिताः, केचिदाकडारादेका संज्ञा इति, केचित् प्राक् कडारात् परं कार्यमिति । एतेनेदं प्रतीयते यत् आचार्यस्य पाणिनेर्नैके शिष्या अवर्तिषत तेन च पौनःपुन्येनात्मनः शब्दानुशासनस्य अध्यापनं प्रवचनं वा कृतम् । सः न केवलं तानध्यापयत् प्रत्युत तच्छब्दानुशासनमध्येतॄणां शिष्याणां कृते भोजनस्यावासवस्त्रादेरपि सुरुचिरां व्यवस्थामकार्षीत् । विद्यया सहैव निःशुल्कं भोजनादिकमपि तैरलाभि । महाभाष्ये प्रयुक्तः "ओदन पाणिनीयाः" शब्दोऽमुमेव तथ्यं विशदीकरोति । काशिकायां शब्दस्यास्य निन्दाजनकत्वमनुशिष्यते । ओदनप्रधानाः पाणिनीया इति विमर्शे ये केवलमोदनलाभायैव श्रद्धां विना पाणिनीय-शब्दशास्त्रमधीयते इति निन्दा वचनमप्यत्र ध्वनितम्भवति ।

पाणिनेरस्य गुरोर्नाम वर्षोपाध्यायोऽविद्यत इति कथासरित्सागरे इत्थं प्रतिपादितम्-"अथ कालेन वर्षस्य शिष्यवर्गो महानभूत् । तत्रैकः

पाणिनिर्नाम जडबुद्धितरोऽभवत् । अस्य वर्षाख्यस्यानुज उपवर्ष आसीत् । स्कन्दपुराणेऽस्योल्लेखो वर्तते, यत्पाणिनिः गोपर्वतं समासाद्य तपस्तेपे—

गो पर्वतमिति स्थानं शम्भोः प्रख्यापितं पुरा ।
यत्र पाणिनिना लेभे वैयाकरणिकाग्रता ।।

अतिकठिनस्यास्य तपसः प्रभावेण पाणिनिरयं वैयाकरणेषु प्रामुख्य-मभजत् ।

पञ्चनद-प्रदेशे शलातुराभिधो ग्रामोऽस्य जन्मभूरासीत् य एवेदानीम् "सलातुर-हलातुर-हलाहुर-लाहुर" इति क्रमेणापभ्रंशतां गतः लाहौर इति परिणतः । शब्दस्यास्य व्युत्पत्तिः जैनलेखकेन वर्धमानेन गणरत्नमहोदधौ इत्थं प्रदर्शिता-शलातुरो नाम ग्रामः सोऽभिजनोऽस्यास्तीति शालातुरीयः तत्रभवान् पाणिनिः । स्वयं पाणिनिरपि शलातुर पदोल्लेखं चकार । शलातुरः अभिजनः अस्येति विग्रहे तूदी शलातुर वर्मतीकूचवाराड्ढक्छण्ढञ्यकः इत्यनेन सूत्रेण छ प्रत्यये शालातुरीयः सिद्धि भजते । अत्रेदमवधेयम् यत् महर्षिणा पतञ्जलिना अभिजने निवासे च सुस्पष्टं भेदः प्रतिपादितः । स व्याचष्टे-अभिजनो नाम यत्र पूर्वैरुषितम्, निवासो नाम यत्र सम्प्रत्युष्यते इति । महाभाष्ये व्यादिष्टेनानेनेदमनुमीयते यत् शलातुरो नाम ग्रामः पाणिनेः पूर्वपुरुषाणां निवासस्थानमासीत् स्वयं पाणिनिस्तु कुत्राप्यन्यत्रो-षितवान् ।

एवमनुश्रूयते यदतिक्रान्तबाल्यो पाणिनिर्यदा विद्या-सम्पत्तिलाभाय पण्डितवरिष्ठं वर्षनामानं गुरुमुपसिषेवे तदा तत्रास्य सब्रह्मचारिणौ वररुचि-व्याडिनामानावास्ताम् । स कदाचिच्छास्त्रार्थे पराजितो निर्वेदमवाप्य व्याकरणविद्यापारावारपार जिगमिषुः सर्वविधविद्याप्रभवमीशानं तपसाराद्धुं निश्चित्य प्रयागक्षेत्रं प्राप्याक्षयवटस्याधस्तात् अतितीव्रं तपश्चक्रे । चिरात्कदाचित्तत्कठोरतपश्चर्या परितुष्टस्तदभीष्टवरान् प्रदित्सुर्भगवान् नाट्य-रंगतलमधिष्ठाय नृत्यन्नादयामास चतुर्दशकृत्वो ढक्काम् । स नादो यथान्यैः श्रवणपथेन स्वस्वाभीष्टप्रापकवरदान-वाक्यामृतत्वेन गृहीतस्तथा पाणिनि-नापि अइउण् इत्यादि सूत्रसमूहरूपं वाक्यामृतमग्राहि । यथोक्तन्नन्दिकेश्वर कृतकाशिकायाम्—

"नृत्यावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम् ।
उद्धर्तुकामः सनकादि सिद्धानेतद्विमर्शे शिवसूत्रजालम् ।।"
आचार्येण पाणिनिना स्वेन विरचयिष्यमाणः-
"अल्पाक्षरमसन्दिग्धं सारवद्विश्वतो मुखम् ।
अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः ।।" इत्युपलक्षणोपलक्षित सूत्र समूहरूपो शब्दानुशासनात्मकः वरदान वाक्यामृततयागृह्यत । ततोऽनेन स्वलब्ध-व्याकरणमूलभूत-चतुर्दशसूत्रात्मकाम्नायबलेन" वृद्धिरादैच् इत्यादिकानि "अ अ" इत्यन्तानि सूत्राण्यष्टाध्याय्यात्मना, लिङ्गानुशासनसूत्राणि षडधिकारात्मना, तत्तच्छूत्रेषु गणशब्द पाठान्, कण्ड्वादिना सह एकादश गणं, धातुपाठं, यजुर्वेदस्य प्रातिशाख्यात्मकं सूत्रग्रन्थम्, शब्दोच्चारणक्रमनिर्णायिकां दशखण्डात्मिका शिक्षां पातालविजयापरनामकं जाम्ववतीपरिणयाख्यं काव्यग्रन्थञ्चाकारि । अत्र केचित्प्रवदन्ति यत् पाणिनीयशिक्षा पाणिनिकृता न विद्यते । तेषामयं तर्को यदस्यां शिक्षाया "अथ शिक्षा प्रवक्ष्यामि पाणिनीयं मतं यथा" इत्यादौ

"येनाक्षर—समाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः । " इत्यमुष्मिन् ।
त्रिनयनमुखनिसृतामिमां य इह पठेत्प्रयतश्च सदाद्विजः ।
स भवति धनधान्यपशु पुत्रः-कीर्तिमानतुलं च सुखं समश्नुते ।।

"इत्यत्र च पाणिनेरुल्लेखः समुपलभ्यते । पाणिनिकर्तृकत्वे तस्योल्लेखस्यानुपपत्तेः । एवं च तेषामिदं मत यत् पाणिनिविरचितां शिक्षां प्रणष्टां दुर्लभाञ्च पर्यालोच्य तदुपदेश-परम्परागतेन तदीयशिष्येण तदुक्तार्थप्रतिपादिकेयं त्रिनयनाख्येन केनचिद्विदुषा रचिता । किन्तु पुराणादिषु "व्यास उवाच" इतिवत् आर्षग्रन्थानामेष स्वभाव इत्यामनन्ति वैयाकरणाः । इत्थं तपसोपलब्धव्याकरणशास्त्रः पाणिनिः स्वकृतं शब्दानुशासनं स्वगुरुभ्यो वर्षादिभ्यः श्रावयामास अध्यापनादिना कालक्रमेण तत् प्रथयामास च । तत्र कौशाम्बी नगरवासिनः सोमदेवशर्मणस्तनयोऽभ्यस्तसकलशास्त्रः कात्यायनस्तदुपश्रुत्याश्चर्यचकितोऽसूयाकषायित चेता ईशानानुग्रहेण तादृशविचित्रग्रन्थरचनायां पर्युत्सुकः स्वयमप्याश्रमं कञ्चिद् गत्वा तपसा परमेश्वरमारराध । ततस्तदनुग्रहेण वार्तिकाख्यं पाणिन्यनुक्तार्थपरिपूरकं दुरुक्तपुनरुक्ताद्यर्थ निरासकग्रन्थमरीरचत् ।

पाणिनिः कदाचित्त्रयोदश्या तिथौगच्छन्नरण्ये व्याघ्रेण केनचिद् व्यापादितः, पञ्चत्वं जगाम । यथोक्तं विष्णुगुप्तेन पञ्चतन्त्रे मित्रसम्प्राप्ति-

नामके द्वितीयभागे—

> सिंहो व्याकरणस्य कर्तु रहरत्प्राणान्प्रियान्पाणिनेः
> मीमांसाकृतमुन्ममाथ सहसा हस्ती मुनि जैमिनिम् ।
> छन्दो ज्ञाननिधिं जघान मकरो वेलातटे पिङ्गलम्
> ह्यज्ञानावृतचेतसामतिरुषां कोऽर्थस्तिरश्चां गुणैः ।। इति ।

कात्यायनोऽपि तस्यामेव तिथौ देहमत्याक्षीत् । कस्मिन् मासे पाणिनिः स्वर्गत इत्यनिश्चयेन त्रयोदशी एव तिथिर्यस्यां तेन प्राणास्त्यक्ताः । त कालमारभ्य वैयाकरणाः प्रति त्रयोदश्यां व्याकरणशास्त्राध्ययनाध्यापनव्यवहारमत्याक्षुः ।

पाणिनिः कस्मिन् काले जनिमलभतेति विवादास्पदम् । पाणिनेः स्थितिकालविषये या भ्रान्तिः समुज्जृम्भते तस्याः कारणमिदं वर्तते यत् केचन पाणिनिकात्यायनौ नन्दराज्यकालवर्तिनौ समानकालिकावित्युररी कुर्वन्ति । *आख्यायिकाञ्चादाहरणरूपेण प्रस्तुवन्ति यत्सतीर्थ्येन* कात्यायनेन पराजितः सन्निर्वेदमवाप्य भगवन्तमीशानं तपसा प्रसाद्य विद्वत्तामतुलामासादितवान् पाणिनिरित्यादि परन्तु विचार-निकषोपरि कषणेन तपसा महेश्वरवरदान-प्राप्तिरूपं वृत्तान्तमपहायान्यद्वृत्तं विश्वासपदवी नाधिरोहति । पाणिनेः कात्यायनस्य विभिन्नकालाङ्गीकारे तु विविधाः समस्याः समाधातुं शक्याः । जनमेजयकाले तदुत्तरसन्निहित काले वा पाणिनिः स्वजनुषा भुवमलञ्चकार । विषयेऽस्मिन् प्रचुरसमुपलभ्यमानानां प्रमाणानां पर्यालोचनेन, निर्णेतुमेतच्छक्यम् । प्रथममेतत् प्रमाणम् यत् पाणिनिसूत्रेषु राज्ञो जनमेजयादुत्तरकालिक न किंचन सूत्रितम् । एतावताप्यधिकमिदं प्रमाणं यत् पाराशर्य-व्याससूनोः शुकस्यापि नाम नोपनिबद्धं सूत्रकृता । बहोः कालादनन्तर शुकस्य वैयासकिरूपामपत्यबोधकसंज्ञामनुश्रुत्य तत्साधनाय कात्यायनेन वररुचिना "व्यासवरुडेति" वार्तिकं निर्दिष्टम् । अनेनेदमनुमीयते यद् वैयासकिवारुडकि पदानां लोकव्यवह्रियमाणता नावर्तत तदानीमतस्तदर्थं सूत्रं न प्राणायि पाणिनिना । उभयोरपि पाणिनिकात्यायनयोरेककालावच्छेदेन विद्यमाने सति पाणिनिना यदनुक्तं, दुरुक्तं, पुनरुक्तं वा तत्कात्यायनेन पूरितं प्रत्याख्यातञ्चेति स्वीकरणे पाणिनेरल्पज्ञत्वापत्तिः स्यात् । विभिन्नकालत्वाङ्गीकारे तु पाणिनिना स्व-

समये अव्यवह्रियमाणतया यदनुक्तं तद्वार्तिककृता कात्यायनेन स्वसमये व्यवहारविषयतया पूरितम्। एवञ्च कालपरिवर्तनक्रमेण भाषायामपि किंचित् परिवर्तनस्य सम्भाव्यतया तदानीन्तनप्रयोगानुसारेण यद् दुरुक्तं प्रतीतं तत्कात्यायनेन प्रत्याख्यातमिति कल्पयितुं शक्यते। अतोऽनयोर्विभिन्नकालत्वं फलतः खिस्ताब्दतः सार्धद्विसहस्रतोऽप्यधिकपूर्वं पाणिनिकालस्वीकरणं विचारसहम्। एवञ्च जनमेजय-नृपसन्निहितकाले खिस्ताब्दतः सप्तविंशतिशतवर्षपूर्वं पाणिनेः कालः सम्भाव्यते।

आचार्यस्य पाणिनेः शब्दानुशासनं न केवलं शब्दशास्त्रस्य सुविस्तृतं ज्ञानं विवृणोति, प्रत्युत निखिलस्य भारतीय-ज्ञानराशेरद्वितीय एकः प्रकाशस्तम्भः। सकलेऽपि प्राचीनवाङ्मये सूत्रकारस्याप्रतिहतागतिर्वरीवर्ति। वैदिकवाङ्मयादतिरिक्तं इतिहास-भूगोल-मुद्राशास्त्र-लोकव्यवहारादीनामद्वितीयं वैदुष्यममुष्मिन् निहितम्। सोऽसि प्राचीनस्यार्वाचीनस्य योजकः सेतुरिवाविभाति। महाभाष्यकृतः पतञ्जलेरनेन कथनेन पाणिनेर्महनीयता स्वत एव प्रमाणीभूयते। महाभाष्ये तृतीयाह्निके सूक्तं पतञ्जलिनाप्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म। तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुम्, किं पुनरियता सूत्रेण।" अन्यत्रापि तेनोपवर्णितम्-सामर्थ्ययोगान्नहि किंचिदस्मिन् पश्यामि शास्त्रे यदनर्थकं स्यात्।"

अशेष-शेमुषीसम्वलितस्य तर्कप्रवणस्य पतञ्जलेः पाणिनीय शब्दशास्त्रविषये यदुल्लिखितं तत्तस्यात्यन्तिक-महामहिमशालितायाः द्योतने सर्वथा अलम्। कतिपयेऽर्वाचीनवैयाकरणा मन्वते यत् कात्यायन-पतञ्जलिभ्यां पाणिनेः शतशः सूत्राणां खण्डनं कृतम्। अमुमेवाधारीकृत्यैभिः यथोत्तरं मुनीनां प्रामाण्यमित्यात्मकानि वचनानि समुद्गीर्यन्ते। वस्तुतः आधुनिकानां मतमेतच्चिन्त्यम्। उभौ कात्यायनपतञ्जली चेत् पाणिनीयतन्त्रे दोषाणामशुद्धीनां वा बाहुल्यमवालोकयिष्यताम् तर्हि कात्यायनोऽष्टाध्याय्याः वार्तिकानि नारचयिष्यत् न च पतञ्जलिः महाभाष्यमलेखिष्यत्। अन्यच्च पतञ्जलिः पाणिनिना विरचितं शब्दशास्त्रे एकमपि अनर्थकं वर्णं नोररीकरोति। अत्रेदमवधार्यं यत् उभाभ्यामाचार्याभ्यां पाणिनिसूत्राणां सूत्रांशानां खण्डनं प्रत्याख्यानं वा न विहितमपितु स्वबुद्धिचातुर्येण प्रकारान्तरेण प्रयोगसिद्धेर्निदर्शनमात्रमकारि।

सकलेऽपि संस्कृतवाङ्मये आचार्यपाणिनेरेव शब्दानुशासनमेकमात्रमार्षतन्त्रं यत्र पञ्चावयवसहितं समग्रमपि तन्त्रमुपलभ्यते। अतएव पाणिनेरत्यधिकं महत्त्वम्। उत्तरवर्तिनां वैयाकरणानामेतत् प्रधानमुपजीव्य तन्त्रम्। पाणिनिना शब्दानुशासनस्य पूर्णतायै सूत्रपाठेन सह येषामङ्गानां प्रवचनं कृतं तेषु धातुपाठस्य प्रधानत्वम्। पाणिनीय-वैयाकरणेषु यस्य धातुपाठस्य प्रचलनमस्ति स पाणिनिप्रोक्त इति विदुषां मतम्। पाणिनिविरचिताया अष्टाध्याय्याः प्राच्योदीच्यदाक्षिणात्यादि भेदेन पाठत्रयम् समुपलभ्यते। काश्यां लिखितया काशिकयी अष्टाध्याय्याः यस्य पाठस्याश्रयण कृत स प्राच्यः पाठः। क्षीरतरङ्गिण्यां क्षीरस्वामी अष्टाध्याय्याः यं सूत्रपाठमुद्धृतवान् स उदीच्यः। दाक्षिणात्येन कात्यायनेन यस्मिन् सूत्रपाठे वार्तिकानि लिखितानि स दाक्षिणात्यः पाठः। एषु त्रिविधेषु पाठेषु प्राच्यपाठः वृद्धपाठत्वेन व्यपदिश्यते। उदीच्य-दाक्षिणात्यपाठौ तु लघुपाठौ। भारतीय वाङ्मयेऽनेके ग्रन्थाः विद्यन्ते येषां देशभेदादनेके पाठाः लभ्यन्ते। धातुपाठस्यापि प्राच्योदीच्य-दाक्षिणात्यादि भेदेन त्रिधात्वं वर्तते।

पाणिनीय धातुपाठस्य प्रोक्तत्वन्नतु कृतत्वम्। प्रोक्तग्रन्थेषु प्रवक्ता पूर्वग्रन्थेभ्य उपयोगिनोऽशान् शब्दत अर्थतो वा संगृह्णाति। ग्रन्थस्य निखिलापि वर्णानुपूर्वी प्रवक्तुः स्वीया न भवति। अतः यथा पाणिनिना प्रायशः प्राचीनाचार्येभ्यः सूत्राणि गृहीतानि स्व शब्दानुशासनस्य च प्रवर्तनं विहितम् तथैव धातुपाठेऽपि प्राचीनाचार्याणां धातुपाठस्यैवाश्रयणं कृतम्। फलतः पाणिनेः सूत्राणि पाणिनेः पूर्ववर्तिनः "आपिशलि, काशकृत्स्न, भागुरि" आदि वैयाकरणानाश्रयन्ते तथैव पाणिनेर्धातुसूत्राण्यपि काशकृत्स्नीय धातुसूत्राण्यनुसरन्ति।

आचार्य-पाणिनेर्गणपाठः साम्प्रतमुपलभ्यते। यदि स लुप्तोऽभविष्यत्तर्हि पाणिनीयशब्दानुशासनस्य गणसूत्राणां पूर्णं तात्पर्यं नाज्ञास्यत्। पाणिनिः पञ्चावयवव्याकरणस्य पूर्णतासिद्ध्यर्थं उणादयो बहुलमिति सूत्रसंकेतितौणादि प्रत्ययानां निर्देशनाय कस्यचिदुणादिपाठस्य प्रवचनं कृतवान्। स्त्रीत्वपुंस्त्वादि लिङ्गानि प्रत्येकं नाम शब्दस्याविभाज्यमङ्गम्। अतः लिङ्गानुशासनं शब्दानुशासनस्य एकमङ्गम्। लिङ्गानुशासनं बिना शब्दानुशासनमपूर्णम् वर्तते। तत्तु शब्दानुशासनस्य साक्षात् अवयवरू-

पम् । अतः प्रायशः प्रत्येकं शब्दानुशासनस्य प्रवक्त्रा स्वतन्त्र सम्बद्धं लिङ्गानुशासनमपि प्रणीतम् । पाणिनिना शब्दानुशासनस्यापि प्रवचनं कृतम् । लिङ्गानुशासनमिदं सम्प्रति उपलब्धं वर्तते तत् सूत्रात्मकम् ।

परिभाषा-पाठस्यानेके वृत्तिग्रन्थाः हस्तलेखाश्चोपलभ्यन्ते येषामन्ते पाणिनीयाः, पाणिनिप्रोक्ताः पाणिनि-विरचिता वेति समुल्लिखित प्राप्यते । यथा अडियार (मद्रास) देशस्य हस्तलेखसंग्रहे परिभाषा-सूत्राणामेको हस्तलेखो निर्दिष्टस्तत्र अन्ते परिभाषासूत्राणि पाणिनिकृतानि इति लिखितम् । अन्यान्यपि प्रमाणानि विषयेऽत्र प्राप्यन्ते । अत इदमनुमीयते यत् पाणिनिः स्वतन्त्रसम्बद्धस्य कस्यचन परिभाषा-पाठस्यापि प्रणयनमकार्षीत् ।

आचार्यस्य पाणिनेरतिशयितं महत्त्वमिदमेव प्रमाणीकरोति यदद्यत्वे पाणिनीय-व्याकरणस्यैव सर्वाधिकः प्रचारो वरीवर्ति । अष्टाध्यायी रीत्या वैयाकरणसिद्धान्तकौमुदी-रीत्या च प्रायशः सर्वे व्याकरणाध्येतारः केवलं पाणिनीयतन्त्रमेवाधीयते । यत्र-तत्र प्रकरणसौष्ठवमापादयितुं पठने पाठने चायासं दूरीकर्तुं व्याकरणतत्त्वबुभुत्सूनां कृते धीमता श्रीमता भट्टोजिदीक्षितेन वैयाकरणसिद्धान्त कौमुदी तद्व्याख्यानभूता प्रौढ़ मनोरमा ग्रन्थे च बहवः ग्रन्थाः प्राणायिषत । एतत्प्रणीतव्याकरणग्रन्थानामन्यतमा वैयाकरणसिद्धान्तकौमुदी सर्वसिद्धान्तसग्रहात्मकतया सौविध्याधिक्यादविरलप्रचारा अजायत । न केवलं भारतवर्षे प्रत्युत देशेषु विदेशेष्वपि पाणिनितन्त्रस्य अध्ययनाध्यापने समधिकः प्रचारो लक्ष्यते इति तस्य गौरवशालि भविष्यमेव द्योतयति ।

प्रवाचकः, संस्कृत-विभागे
राजस्थान-विश्वविद्यालयः, जयपुरम्

श्री सर्वेश्वरो जयतितराम् ।

# श्रीनिम्बार्काचार्य-समयसमीक्षा, तद्दर्शनञ्च

[लेखक : रामगोपाल: शास्त्री, जयपुरम्]

श्रीनिम्बार्क-समारम्भां श्री स्वभूराम-मध्यगाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरु-परम्पराम् ॥

## समय-समीक्षा—

अनन्तश्रीविभूषिता जगद्गुरवः श्रीनिम्बार्काचार्याः श्रीमदाद्य-शङ्कराचार्य-श्रीरामानुजाचार्य-प्रभृति-धर्माचार्येभ्यः पूर्ववर्तिनः समभवन्निति । परं सत्यपि प्रमाण-बाहुल्ये यथापेक्षितानुसन्धानाभावेन विद्वत्समुदायो भ्रान्त एव नूनम् ।

वैक्रमवत्सराणां सप्तदश शतकात् (१७००) सप्तत्युत्तराष्टादश शतकं (१८७०) यावत् समय-मध्य-वर्तिनः श्रीवृन्दावनदेवाचार्याः, श्रीगोविन्द शरणदेवाचार्याः, कृष्णगढ नरेशस्य 'नागरीदास' इति प्रथिताभिधानस्य श्रीसावन्तसिंहस्य भगिनी श्रीसुन्दरकुवँरि-प्रभृतयश्च "द्वापरान्ते कलिप्रारम्भे युगसन्धिकालः श्रीनिम्बार्काचार्याणां प्रादुर्भाव-समय" इत्यलीलिखन् । भारतेन्दु-हरिश्चन्द्र प्रमुखा भारतविभूतिभूताः प्रेक्षावन्तोऽप्यमुमेव समयमपूपुषन् । पाश्चात्य-लेखकेषु डा० मोनियर् बुइलियम्स्-हेस्टिंग्स्-ग्रियर्सन्-ग्रौस-डा० हण्टर-प्रभृतयः स्वस्वग्रन्थेषु साम्प्रदायिकमैतिह्यमनतिवर्तमानाः श्रीनिम्बार्काचार्य-समयं श्रीरामानुजाचार्यादि समस्त-धर्माचार्येभ्यः प्राचीनतममेव स्वीचक्रुः ।

## भ्रान्ति-मूलम्

सर्वप्रथमं डा० आर० जी० भाण्डारकर एवात्र भ्रान्तिबीजमुवाप ।[1] अयं लिखति—"श्रीनिम्बार्कसमयो निश्चिततया न ज्ञायते । संस्कृत-

---

१ डा. आर. जी. भाण्डारकर का "वैष्णविज्म-शैविज्म" पृ. सं. ८० से ९३ तक ।

ग्रन्थानुसन्धानसमये सूचीद्वयमुपलब्धम् । तत्र निम्बार्क-सम्प्रदायाचार्याणां श्रीहरिव्यासदेवाचार्य-पर्यन्तं द्वात्रिंशन्नामान्यासन् ।"

"श्रीहरिव्यासदेवाचार्याणामन्यतमः शिष्य. श्रीदामोदरगोस्वामी त्रयस्त्रिशत्तमः पञ्चाशदधिक-सप्तदश शतमिते (१७५०) ख्रिस्ताब्दे विद्यमान आसीत् । अयं पञ्चषष्ट्युत्तर-सप्तदश शतमिते (१७६५) ख्रिस्ताब्दे पञ्चदशवर्षवयस्कः कल्प्येत चेत्तावत्पर्यन्तं त्रयस्त्रिशत्पीडिकानां माध्वपरम्परा साम्येन श्रीनिम्बार्कसमयो निश्चेतुं शक्यते ।"

"अस्मत्सशोधित-निर्णयानुसारमाद्यमध्वाचार्याणा तिरोभावः षट्सप्तत्यधिक-द्वादश शतमिते (१२७६) ख्रिस्ताब्देऽभवत् । ततो वर्षाणां शतक षट्के तेषां त्रयस्त्रिशत्पीठिका व्यतीयुः । एवमेव श्रीदामोदरगोस्वामिपर्यन्त त्रयस्त्रिशत्पीडिकानामायुर्मान त्र्यधिकषट् शतवर्षमित (६०३) पञ्च-षष्ट्युत्तर सप्तदशशतमितात् (१७६५) ख्रिस्ताब्दान्न्यूनीकृत्याऽशिष्टो द्विषष्ट्यधिकैकादशशतमितः (११६२) ख्रिस्ताब्दः श्रीनिम्बार्काचार्याणां समय इति निश्चीयते ।"

यद्यपि मोनियर् विलियम्स महोदयेन लिखितो 'हिन्दूइज्म'ग्रन्थः सप्त-सप्तत्यधिकाष्टादशशत (१८७७) ख्रिस्ताब्दासन्न-समये प्रकाशित आसीत्, परं भाण्डारकरमहाभागस्य दृष्टिपथं नायात. । एवं च हेस्टिग्ज महोदयानां ग्रीयर्सन महोदयानामप्येतद्विषयमका लेखास्तेन न विलोकिताः। साम्प्रदायिकमैतिह्यमपि विशेषतया गवेषितुमसौ न प्रायतत । अत एवेयं भ्रान्तिरस्य दृढमूला बभूव ।

एतदनन्तरं स्वामी प्रज्ञानन्द सरस्वती 'वैष्णवदर्शनेर इतिहास' ग्रन्थे, श्री राजेन्द्रनाथ घोषः 'वैष्णवदर्शनेरइतिहासे' तथाऽन्येष्वपि कतिपय-निबन्धेषु, अक्षयकुमारदत्तश्च 'भारतवर्षीय उपासक सम्प्रदाय'—नामके ग्रन्थे भाण्डारकरमेवान्ववदन् । श्रीजाह्नवीचरणभौमिकः एल्. बी. 'संस्कृता साहित्येर् इतिहासे', श्रीपुलिनविहारी भट्टाचार्यः एम्. ए 'श्रीनिम्बार्काचार्य ओर तांहार धर्ममत' संज्ञके ग्रन्थे, श्रीसुशीलकुमारदेवः एम्. ए.,डी. लिट् 'जयदेव ओर गीत गोविन्देर आलोचना' शीर्षके निबन्धे, पं. विन्ध्येश्वरीप्रसाद द्विवेदश्च 'निम्बार्कभाष्यभूमिकाया' मिमामेव भाण्डारकरस्य भ्रान्ति-

परम्परामपूपुपन् । युक्तप्रान्तीयाः पञ्चनदीया अपि केचिद् विद्वांसोऽस्यामेव धारायां प्रावहन् ।

इयं भ्रान्तिपरम्परा पुराण-धर्मशास्त्रादीनां साम्प्रदायिक-संस्कृत-ग्रन्थानाञ्चाऽनध्ययनेन एतत्सम्बन्धि-शिलालेख-ताम्रपत्रादीनाञ्चाऽनवलोकनेन जनिमवाप । प्रमाणोपन्यासेन चासौ विलयमेष्यतीति सुदृढं विश्वसिमि ।

**भ्रम-निरासः—**

१—'*श्रीनिम्बार्काचार्यसमयः श्रीवल्लभचार्यादर्वाचीनः*' इति डा. रमाचौधरी महाभागया लिखितम् । अस्य प्रामाण्यं परीक्षणीयम् । श्रीवल्लाभाचार्याणां जन्म सप्तत्रिंशदधिक-पञ्चदशशतमिते (१५३७) वैक्रमाब्देऽभवदिति सर्वैर्निर्विवादं स्वीक्रियते ।

"अतः पूर्व पञ्चदशाधिक पञ्चदशशतमिते (१५१५) वैक्रमाब्दे श्रीनिम्बार्काचार्यतस्त्रयस्त्रिशत्तमे (३३) पीठेऽधिष्ठिताः श्रीपरशुराम-देवाचार्या वर्तमाना आसन् इत्येकेन ताम्रपत्रशासनेन निश्चीयते ।[1]

*अस्या स्थितौ त्रयस्त्रिशत्तम-पीठिकायामधिष्ठितानां श्रीपरशुराम*-देवाचार्याणां समय एव श्रीनिम्बार्काचार्य-समयः कथं भवितुमर्हतीति स्वयं विचारयन्तु मनीषिणः ।

२—श्रीभाण्डारकरानुयायिनो गवेषकाः प्रतिपीठं प्रायो विंशतिवर्षात्मकं समयं परिकल्पयन्ति, परं यतीनां नैष्ठिकब्रह्मचारिणां दीर्घजीविनां कृते नायं मानदण्डः समुचितः । पुष्ट-प्रमाणत्वेन येषामभिलेखः समुपलभ्यते, तेनैवान्येषामपि कालः कल्पनीयः ।

---

१. खेजडलारा भाटी सरदारान् की तवारीख—'संवत् १५१५ पन्द्रह सौ पन्द्रह की साल अर्जुनजी रा वेटा सॉवन्तसिंह जी कुँवर पदे था, सु जमुनाजी रे तटै माथै सा. (स्वामी) परशुरामजी कण्ठी बांधी तहां गॉव सलेमाबाद तावां पत्तर मांसण करा दिणे ने बादशाही नो मुहरो कराय दियो ।'

यथा श्रीपरशुरामदेवाचार्याः पञ्चदशाधिक-पञ्चदशशतमिते (१५१५) वैक्रमाब्दे वर्तमाना आसन्नित्येकेन ताम्रशासनेन निश्चीयते। एत एव एकोनसप्तत्यधिक षोडशशतमिते (१६६६) वैक्रमाब्देऽपि विद्यमाना अभूवन्नित्यन्येनैकेन शासनेन प्रतीयते।[२] अतःपरमेकोननवत्यधिक-षोडशशतमिते (१६८९) वैक्रमाब्दे पुष्कर द्वारेऽङ्किते शिलालेखे "श्रीपरशुरामदेवाचार्याणां शिष्याः श्रीहरिवंशदेवाचार्या इदं मन्दिर निर्मापितवन्तः" इति तच्छिष्याणामेव नाम व्यवहृतम्।[३] एतेनानुमीयते 'यदुक्तकालात्पूर्वमेव श्री परशुरामदेवाचार्याः कथावशेषतां याता इति। एवं प्रथमशासनसमये इमं पञ्चदशवर्षवयस्का इति कल्प्येत चेत्तदऽपि तन्नामकान्तिमशासनाभिलेखकाले एकोनसप्तत्यधिकशत (१६९) वर्षवयस्का आसन्निति नात्र संशीतिलेशः।

३—श्रीभाण्डारकर महाभागा श्रीहरिव्यासदेवाचार्याणां शिष्य श्रीदामोदर गोस्वामिनं निरदिशन्। नेदमुचितम्। अस्यानौचित्ये कारणद्वयम्। प्रथमं तु श्रीहरिव्यास-देवाचार्याणां प्रधानेषु द्वादशशिष्येषु दामोदर-गोस्वामिनो नामैव न गण्यते। अपरञ्च यद्येतदभिधः काश्चित्सामान्यः शिष्यः स्यात्तदाऽपि श्रीभाण्डारकरनिर्दिष्टेन पथा गुरुशिष्ययोः समसामयिकत्वं न सङ्गच्छते। श्रीहरिव्यासदेवाचार्याः पञ्चाशदधिक चतुर्दश-

---

२. तच्छासनस्य 'पट्टा' इति ख्यातस्य प्रतिलिपिः—
"श्रीच श्री महाराजा राजा श्री किशन सिंह जी वचनायत स्वामी श्री परशुराम जी पुण्य अर्थ धरती बीघा १०१) अंके ही एक सौ एक बीघा को सेटो १ कस्बे सलेमाबाद मो० पीगलोद मो उदीक कर दीधी धरती बंजर खील दु श्रीमुख परवानगी भाटी भीमजी लिखतं बा हेमराज ता. १ माह जिलकाद सं १०१९ स. १६६६ मु. कोसायल।

३. शिलालेखस्य प्रतिलिपिः —
"श्री गोपालजी महाराज सत्य, संवत् १६८९ वर्षे माघ सुदी पूरणमासी सोमवार सालां स्वामी श्री श्री परशुरामजी मन्दिर विराजमान, श्रीकृष्ण जयति सत्य सखा मद स्वामी दामोदर दास-मथुरावाला.........................
पातसाह श्री शाहजहां राजे स्वामी श्रीहरिवंशदेव श्रीपरशुरामजी का शिष्य.......................स्वामी पूरणदास सालां में दुरसद सेवक–रामदास"।

शतमिते (१४५०) वैक्रमाब्दे आचार्यपीठासीनाः सन्तः पञ्च-पञ्चाशदधिक पञ्चदशशतमित (१५५५) वैक्रमाब्दपर्यन्तं भुवस्तलमिदमलञ्चक्रुरिति सुनिश्चितस्तेषां समयः। श्रीदामोदर-गोस्वामिनं तु पञ्चाशदधिक-सप्तदश शतमित (१७५०) खिस्ताब्देयवर्तमान मभिदधाति श्रीभाण्डारकरः। अत्र सप्तपञ्चाशद् (५७) वर्षाणां योगेन सप्ताधिकाष्टादशशततमः (१८०७) वैक्रमाब्दो भवति। अतो दामोदर गोस्वामी श्रीहरिव्यास-देवाचार्याणां साक्षाद् शिष्यो भवितुं नार्हतीति स्पष्टमवगम्यते।

४—"श्री हरिव्यासदेवाचार्याणां गुरवः श्री श्रीभट्टदेवाचार्याः द्विपञ्चाशदधिक त्रयोदशशतमिते (१३५२) वैक्रमाब्दे स्वरचितस्य श्रीयुगलशतकाख्यस्य ग्रन्थस्य पूर्तिमकार्षुः।" इत्यतिप्राचीनेषु हस्तलिखितेषु तद् ग्रन्थेषु लिखितेन—

'नयन[२] बान[५] पुनि राम[३] शशी[१] गनो अंक गति वाम।
युगल-शतक पूरन भयो सवत् अति अभिराम॥'

इत्यनेन दोहा छन्दसा प्रतीयते। अस्य ग्रन्थस्य निर्माणकाले इमे आचार्यचरणा द्विपञ्चाशद्वर्षवयस्का आसन्। अत एषां जन्म त्रयोदशशततमे (१३००) वैक्रमाब्दे जातमिति निश्चीयते। पञ्चाशदधिक चतुर्दशशतमिते (१४५०) वैक्रमवत्सरे श्रीहरिव्यासदेवाचार्या आचार्यपीठमध्यतिष्ठन्निति श्रीभट्टदेवाचार्याणां समयस्त्रयोदश शतमिताद् (१३००) वैक्रमसंवत्सरादारभ्य पञ्चाशदधिक चतुर्दश शतमित (१४५०) वैक्रमाब्द पर्यन्तमासीदिति निर्भ्रान्तं निर्णीयते। एत आचार्यपादाः श्रीनिम्बार्काचार्यादेकत्रिंशपीठिकायां वर्तमाना आसन्।

५—श्री श्रीभट्टदेवाचार्याणां गुरवः श्रीकेशवकाश्मीरि-भट्टाचार्यास्तीर्थयात्रा-प्रसङ्गेन कतिचिद्दिनान्युज्जयिन्यांन्युस्य रेवतपर्वत-कर्दमाश्रम-द्वारकादिषु चानादिवैदिक सत्सम्प्रदायानुगतं वैष्णवं धर्ममुपदिशन्तः काश्मीरेषु जग्मुः। तत्र तदा दुर्धर्षा मायाविनस्तान्त्रिका आसन्। तान् पराभूय शाक्त-सम्प्रदायस्य नेतारं श्रीविद्याधराचार्यं विजित्य वैष्णव्या दीक्षया तमदीक्षन्त। अथ श्रीकेशवकाश्मीरि-विरचितायाः क्रमदीपिकायाष्टीकामलिखत्। अस्मिन् समये आचार्यपादाः पञ्चाशद्वर्ष वयस्का आसन्नितत्यनुमीयते। ततो दशोत्तर-शतवर्षाणि गिरिकन्दरायां ध्यानमग्नाः समाधिस्था अभूवन्।

'दशोत्तर-शतं वर्षं गिरिदर्य्यां महामनाः ।
ध्यानयोगरतोऽवात्सीद् यत्र सन्निहितो हरिः ।।'

(आचार्य-चरित्रे नवमो विश्रामः श्लो. ४६)

तदनन्तरं परिसमाप्य समाधि पुनर्निमिषारण्यमाजग्मुः । तदा यवनैस्तान्त्रिकबलेन विहितस्यात्याचारस्य शमनं स्वयोगबलेन विधाय हिन्दुधर्मं ररक्षुः । अस्मिन् प्रसङ्गे सर्वैरपि व्रजवासिभिः सम्भूय सप्तदशोत्तर द्वादशशतमिते (१२१७) वैक्रमाब्दे षष्ट्यधिकैकादशशत (११६०) खिस्ताब्दे समर्पितं शासन (पट्टा) समुपलभ्यते । तदा ५०+११०=१६० वर्षवयस्का इम आसन् । एवं सप्त पञ्चाशदधिकदशशतमिते (१०५७) वैक्रमाब्दे दशशततमे (१०००) च खिस्ताब्दे श्रीकेशवकाश्मीरिभट्टाचार्याः प्रादुरभूवन्नित्यनुमातु शक्यते । इय श्रीनिम्बार्काचार्याणां त्रिशत्तमे पीठेऽधिष्ठिता इति सुनिश्चितं वर्तते ।

६—डाक्टर सर्वपल्लो राधाकृष्णन् महाभागो ब्रह्मसूत्र-ग्रन्थेऽलिखत् "श्रीनिम्बार्काचार्यः संभवतः श्रीरामानुजाचार्यं प्रत्यधमर्ण आसीत् । श्रीकण्ठमतस्याप्ययमालोचनां व्यधात् । अस्य जन्म त्रयोदशशतकस्योत्तराद्धे भवितुमर्हति ।" पुनश्च इण्डियन फिलासफी नामके ग्रन्थे व्यलेखीत्— "श्रीनिम्बार्काचार्यः श्रीरामानुजाचार्यानन्तरं श्रीमध्वाचार्याच्च पूर्वं ख्रिस्तीय एकादशशतके वर्तमान आसीत् ।" एवमेकत्र त्रयोदशशतकस्योत्तराद्धे श्री निम्बार्काचार्य-प्रादुर्भावं निर्दिशति । अपरत्र चैनमेकादशशतके वर्तमानं स्वीकुरुते । इत्युभयमपि मिथो विरोधित्वादप्रमाणम् ।

७—"श्रीनिम्बार्काचार्यः श्री रामानुजाचार्यं प्रत्यधमर्णः" इति कथनमपि न युक्तियुक्तम् । यतो हि पश्चाद्भव एव स्वपूर्वभवस्य मतं खण्डयति । परं पूर्वभवः स्व पश्चाद्भवस्याभिमतं न समालोचयति । श्रीरामानुजाचार्यैरेव श्रीनिम्बार्काचार्याणां स्वाभाविको भेदाभेदवादः स्वकृतभाष्ये समालोचितः । अतः श्रीनिम्बार्काचार्याणां स्थितिः श्रीरामानुजाचार्येभ्यः पश्चात् कथं भवितु शक्यते ?

यथा हि श्रीनिम्बार्काचार्याः स्वविरचिते वेदान्तपारिजात सौरभाख्ये ब्रह्मसूत्रवाक्यार्थे भेदाभेदवादं प्रतिपादयन्ति—

"तस्मात्सर्वज्ञः सर्वाऽचिन्त्यशक्ति-विश्वजन्मादिहेतुर्वेदैकप्रमाण-गम्यः सर्वाभिन्नाभिन्नो भगवान् वासुदेवो विश्वात्मैव जिज्ञासा विषयस्त-श्चैव सर्व शास्त्र समन्वेतात्योपनिषदाना सिद्धान्तः ।"

[ब्र. सू. १।१।४]

"परमात्मनो जीवोंऽशः, 'ज्ञाऽज्ञो द्वावजावीशानीशौ' इत्यादि भेद-व्यपदेशात्, 'तत्त्वमसि' इत्याद्यभेदव्यपदेशाच्च ।"

[ब्र. सूत्र. २।३।४२]

"मूर्त्तामूर्त्तादिकं विश्व ब्रह्मणि स्वकारणे भिन्नाभिन्नसम्बन्धेन स्था-तुमर्हति, भेदाभेदव्यपदेशादहिकुण्डलवत् ।"

[ब्र. सू. ३।२।२७]

एवमादिषु यो भेदाभेद सम्बन्धः प्रत्यपादि सः स्वाभाविक इति श्रीनिम्बार्काचार्याणां साक्षाच्छिष्याः श्रीनिवासाचार्याः स्वरचिते वेदान्त-कौस्तुभे' व्याचख्युः । यथा—

"..................चिदचित्स्वाभाविकभेदाभेदाश्रयो भगवान् वासु-देव श्री पुरुषोत्तम. ।"

[ब्र. सू. १।१।१]

"तस्मात् कृत्स्नस्य वेदस्य सर्वज्ञे स्वाभाविकानन्ताचिन्त्यशक्तौ जगत्कारणे ब्रह्मणि पुरुषोत्तमे चिदचिद्भिन्नाभिन्ने श्रीकृष्णे समन्वय इति सिद्धम् ।"

[ब्र सू १।१।४]

"तथा ब्रह्म-जीवयोरपि स्वाभाविको भेदाभेद-सम्बन्धः ।"

[ब्र. सू. २।१।१३]

"उभयविधवाक्यानां तुल्यबलत्वात् 'जीव-परमात्मनोः स्वाभाविकौ भेदाभेदौ भवत इत्यर्थः ।"

[ब्र. सू. २।३।४२]

"एवं प्रपञ्चस्यापि चिदचिच्छक्तिमद्ब्रह्म कार्यस्य कारणेन ब्रह्मणा सह स्वाभाविकौ भेदाभेदौ भवतः ।"

[ब्र. सू. ३।२।२७]

"तत्र हि प्रकाशस्य आश्रयेण सह स्वाभाविकौ भेदाभेदौ भवतः, तस्य तं विना पृथगवस्थानाभावात् ।"

[ब्र. सू. ३।२।२८]

एवमादि व्याख्यानेनेदं सिद्ध्यति, यदत्र स्वाभाविको भेदाभेद सम्बन्ध एव श्रीनिम्बार्काचार्याणामभिमत इति। अत्र हि स्वपक्षस्यैव साधनं विहितम् । अन्येषां विशिष्टाद्वैतादीनां केषामपि मतानां समालोचना खण्डनादिकं वा नानुष्ठितम्-इत्यपि स्पष्टं प्रतीयते । अतः डा. सर्वपल्ली श्रीराधाकृष्णन् महोदयेन "श्रीरामानुजाचार्याणामधमर्णः श्रीनिम्बार्काचार्यः" इति कल्पना मूलग्रन्थानां सम्यगध्ययनमन्तरैव कृता स्यादिति प्रतिभाति ।

८—श्रीरामानुजाचार्य-चरणैस्तु श्रीनिम्बार्काचार्याभिमतो भेदाभेद-सम्बन्धः स्पष्टतया समालोचित इति विलोक्यतां तद्रचितं श्रीभाष्यम् । यथा—

"अत एव सर्वत्र भिन्नाभिन्नत्वमपि निरस्तम् ।"

[ब्र. सू १।१।१]

"यदपि कैश्चदुक्तम्—भेदाभेदयोर्विरोधो न विद्यत इति, तदयुक्तम्" ..........."अत इदं भेदाभेदोपपादनं निज-सदननिहित–हुतवहज्वालायत इति, तदिदमनाकलित-भेदाभेदसाधन–सामान्याधिकरण्य–तदर्थ याथात्म्यावबोध-विलसितम् ।" ................."तत्र यदुक्तम्—भेदाभेदयोरुभयोरपि प्रतीति-सिद्धत्वान्न विरोध इति, तदयुक्तम्"..................इत्यादि ।"

[ब्र. सू. १।१।४]

"स्वाभाविक-भेदाभेदवादेऽपि ब्रह्मणः स्वत एव जीवभावाप्युमगमाद् गुणवद्दोषाश्च स्वाभाविका भवेयुरिति निर्दोष–ब्रह्मतादात्म्योपदेशो विरुद्ध एव ।"

[ब्र. सू १।१।१]

इति श्रीभाष्यावलोकनेन निःसंशयं वक्तुं शक्यते, यदिमे श्रीनिम्बार्काचार्याः श्रीरामानुजाचार्येभ्यः प्राक्तना एव, नार्वाचीना इति ।

९—श्रीमदाद्य शङ्कराचार्या अपि स्वकृते भाष्ये श्रीनिम्बार्काचार्याभिमतमालोचयन्ति। तद्यथा—

(क) अथातो ब्रह्म जिज्ञासा (१।१।१) इति सूत्र-भाष्ये श्रीनिम्बार्काचार्याः "अथाधीतषडङ्गवेदेन कर्मफलक्षयाक्षयत्व-विषयक-विवेकप्रकारक वाक्यार्थजन्यसशयाविष्टेन तत एव जिज्ञासित-धर्म-मीमांसाशास्त्रेण...... ..........जिज्ञासा सतत सम्पादनीया" इत्याहुः।

तत्साक्षाच्छिष्या: श्रीनिवासाचार्या अपि वेदान्तकौस्तुभे "अत्राथ शब्द आनन्तर्ये, न चार्थान्तरे, पूर्वनिर्वचनाभावात्" इति व्याचिख्युः।

अमुमाशयं खण्डयन्तः श्रीशङ्कराचार्याः प्रतिपादयन्ति—'नन्विह कर्मावबोधानन्तर्य विशेष। न। धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः' इति।

[शाङ्कर भाष्ये ब्र. सू. १।१।१]

(ख) 'जीवो ब्रह्मणोंऽशः। अमुमंशांशिभावमाश्रित्यैव जीव-ब्रह्मणोः सम्बन्धः स्वाभाविक भेदाभेदरूपः' इति श्रीनिम्बार्काभिमतं प्रतिवदन्तो लिखन्ति—'ननु भेदाभेदावगमाभ्यामंशत्वं सिद्ध्यतीत्युक्तम्। स्यादेतदेव, यद्युभावपि भेदाभेदौ प्रतिपिपादयिषितौ स्याताम्। अभेद एव त्वत्र प्रतिपिपादयिषितः......................।"

[शाङ्करभाष्ये २।३।४८ ब्र सूत्रावतरणिकायाम्]

(ग) जीवस्य स्वाभाविकं कर्तृत्वं श्रीनिम्बार्काभिमतमालोचितं श्रीशङ्कराचार्यैः—"यत्तूक्तं शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभाविकमात्मनः कर्तृत्वमिति। तन्न।"

[शाङ्कर. ब्र. सू. २।३।४०]

एवमादीनि शाङ्करभाष्यस्य बहून्युद्धरणानि श्रीनिम्बार्काचार्यस्य तत्प्राग्भवत्वं साधयन्ति। तानि सर्वाण्यस्मिन् लघुलेखे समुद्धर्तुमशक्यानीति मनोपिभिस्तत्रैव सूक्ष्मेक्षिकयाऽखिलक्ष्यीकर्तव्यानि।

१०—अथ श्रीनिम्बार्काचार्यंनशचतुर्थ-पीठिकायां वर्तमानः श्रीपुरुषोत्तमाचार्यः श्रीनिम्बार्कविरचितदशश्लोक्या विवरणरूपेण वेदान्तरत्न-

मञ्जूषां प्रणिनाय। अत्र प्रमाणरूपेण बहूना ग्रन्थानां वचनान्युदहरत्, परं भागवतग्रन्थस्य क्वचन नामापि नालिखत्। भागवते तु वेदान्तरत्न-मञ्जूषाया वाक्यमुद्धृतम्। तद्यथा दशश्लोक्यास्तृतीय-श्लोक-व्याख्यावसरे वेदान्तरत्नमञ्जूषायां भूगोलवर्णनप्रसङ्गे नैकविंशति नरका अपि संकेतिता:—"तस्या अधस्ताद् पूर्वोक्ता अतलादय: सप्त लोकास्तेषां मध्ये रौरवादय एकविंशति नरका: पापात्मक-कर्मभोगभूमय:।" इति। एतदनन्तरं सम्पादिते भागवते तु पञ्चमस्कन्धे षट्त्रिंशाध्याये उक्तैकविंशति नरकाणां नामानि 'एके' इति रूपेण परिगणय्य शेषान् सप्त नरकान् परिपूर्य चाष्टाविंशति नामानि लिखितानि। यथा—"तत्र हैके नरकानेकविंशति गणयन्ति, अथ तांस्ते राजन् नाम रूपलक्षतोऽनुक्रमिष्याम:, तामिस्रोऽन्धतामिस्रो रौरवो महारौरव: कुम्भीपाक: कालसूत्र-मसिपत्रवनं सूकरमुखमन्धकूप:, कृमिभोजन: सन्दंशस्तप्तसूर्मिर्वज्रकण्टक—शाल्मली-वैतरणी पूमोद: प्राणरोधो विशसनं बलिभक्ष: सारमेयादनमवीचिरय:पातमिति। किञ्च क्षारकर्दमो रक्षोगणभोजन: शूलप्रोतो दन्दशूकोऽवटनिरोधन: पर्यावर्तन: सूचीमुखमित्यष्टाविंशतिर्नरका विविध-यातना-भूमय:।' इति।

श्रीचिन्तामणिराव वैद्यो महाभारतस्य रचनाकालम् ईसापूर्व ३००० त्रिसहस्रवर्षाणि लिखति। श्रीशङ्करबालकृष्णदीक्षित: ईसापूर्व पञ्चदश शतं वर्षाणि मनुते। लोकमान्य: श्रीबालगङ्गाधर तिलकस्तु ईसात: ५०० पञ्चशतवर्षपूर्वं तद्रचनाकालं निर्दिशति। एवमाधुनिक-गवेषकाणां मत्यापि भागवतस्य रचनाकाल ईसात: ५०० पञ्चशतवर्षपूर्वं स्वीक्रियेत चेत्तदाऽपि (साम्प्रतं १९८१ ख्रिस्ताब्दे) २४८१ वर्षेभ्य: पूर्वं भागवतस्य रचनाऽभूदिति न काचित् संशीति:। वेदान्तरत्नमञ्जूषाया रचनाकालस्तु भागवतादपि प्राचीन इति। अतो हेतोर्यदा श्रीनिम्बार्काचार्यतश्चतुर्थ-पीठिकायां वर्तमाना: श्रीपुरुषोत्तमाचार्या अपि सार्द्ध द्विसहस्रवर्षपूर्वमासन्, तदा ततोऽपि प्राक्तना श्रीनिम्बार्काचार्या: श्रीशङ्कराचार्य—श्रीरामानुजाचार्य प्रभृतिभ्योऽर्वाचीना: कथं भवितुमर्हन्तीति स्वयं विचारयन्तु विवेकशीला विचक्षणा इति।

११—भगवत: श्रीनिम्बार्कस्य चरितं भविष्योत्तरवामन—भविष्य—वायु-पुराणेषु मिलति। धर्मशास्त्रग्रन्थेषु ज्यौतिषग्रन्थेष्वप्येतन्नाम ससम्मानं

स्मर्यते । रावण-संहिताया योगाध्याये चतुर्विंश (२४) पृष्ठे श्रीनिम्वार्काचार्याणां जन्मकुण्डली समुपलभ्यते ।[१] यथा—युधिष्ठिर शकाब्द: ६ कार्तिकशुक्ल १५ गुरुवासरे इष्टम् २६।५० सूर्य: ६।२१ मेषलग्ने कृत्तिकाकायाश्चतुर्थ चरणे-जन्म ।

अथ जन्म-लग्नम्

इयं जन्मकुण्डली भविष्य-पुराणीय-प्रतिसर्गपर्वण: चतुर्थखण्डीय-सप्तमाध्यायस्थान् ७७-७९ श्लोकान् संवदति । यद्यप्यत्र मीने शुक्रलेखनं लेखानवधानेन त्रुटितं स्यात्तदाऽपि ग्रहपञ्चकमुच्चस्थमित्यादि पौराणिकवर्णने न कोऽपि विसंवाद: ।

भृगुसंहितायास्तृतीये योगाध्यायेऽपि १७५ पृष्ठे सफलादेशा जन्मकुण्डली समुपलभ्यते । अत्र पञ्चादशे कल्यब्दे जन्म लिखितम् । फलमपि यथावन्मिलति । परं भविष्यपुराणीय-वचनानुसारं पञ्चानां ग्रहाणामुच्चस्थितिरत्र नास्ति । केवलं ग्रहचतुष्टयमेवोच्चस्थं वर्तते ।

ऐतिह्ये सम्प्रदायपरम्परायां सुनिश्चिततया यो निम्वार्काब्द: प्रचलति, तस्य मूलं रावणसंहितायास्तृतीयाध्याये समुल्लिखितं तज्जन्म विवरणमेवास्ति । तद्यथा २०३७ मिते विक्रमाब्दे कार्तिकी पूर्णिमा-पर्यन्तं निम्वार्काब्द: ५०७५ मितस्ततश्च ५०७६ मित इति निर्विवादं सिद्ध्यति ।

सुदर्शनावतार: श्रीनिम्बार्काचार्य:

महाभारत—समर: समाप्तिमगात् । विजयश्री: पाण्डवानवृत । पौषशुक्लदशम्यां धर्मराजस्य युधिष्ठिरस्य राज्याभिषेकमहोत्सव: सम-

१. श्रीसर्वेश्वर मासिक पत्रस्य निम्बार्काङ्के पृ. सं ६ त: पृ. सं. १६ पर्यन्तं द्रष्टव्यम् ।

द्यत। अयं द्वापरावसान-कलिप्रारम्भयोः सन्धि-समय आसीत्। तथाऽपि यावद् भगवान् श्रीश्यामसुन्दरो भूमण्डले व्यराजत, तावत् कलिः पृथिवीं पराक्रान्तुं नाशकत्।

यावत्स पादपद्माभ्यां स्पृशन्नास्ते रमापतिः।
तावत्कलिर्वै पृथिवीं पराक्रान्तुं न चाशकत्॥

[भाग. १२।२।३०]

महीमण्डलमनुशासतो युधिष्ठिरस्य पञ्चवत्सरा व्यतीयुः। इतः श्रीकृष्ण-निर्गमसमयेऽपि त्रिंशत्समा अवाशिष्यन्त। तत. कलेरपि प्रभावो भविष्यन्नासीदेव। तस्माद्वैष्णवं धर्ममभिरक्षितुं भगवान् निजकरलालितं परमप्रियमायुधं श्रीसुदर्शनमादिदेश।

"सुदर्शन! महाबाहो! कोटि-सूर्य-सम-प्रभ!।
अज्ञान-तिमिरान्धानां विष्णोर्मार्गं प्रदर्शय॥" इति।

अमुमेवादेशं शिरसि धृत्वा श्रीसुदर्शनः श्रीनिम्बार्करूपेणावततार।

भविष्यपुराणेऽप्यस्य समुल्लेखः समुपलभ्यते। यथा—

'सुदर्शनो द्वापरान्ते कृष्णाज्ञप्तो भविष्यति।
निम्बादित्य इति ख्यातो धर्मग्लानिं हरिष्यति॥"

[भविष्यः।प्रतिसर्गपर्व।चतुर्थखण्ड।अ० ७।श्लो. ७२]

तैलङ्गदेशस्थे वैदूर्यपत्तने[१] सुदर्शनाश्रमे भृगुवंशी वेदवेदाङ्गपारगामी तपोनिष्ठः अरुण ऋषिः पत्न्या 'जयन्त्या' सह न्युवास।[२] एकदा सर्वगुणोपेते शुभेऽनेहसि जयन्ती विष्णुचक्र (सुदर्शन) समुद्भवं दिव्यं तेजो मनसि दधार। इदमेव तेजो "नियमानन्द" इत्याख्ययाऽऽविर्बभूव। अरुण-

---

१. वैदूर्यपत्तनमिति नाम रामायणकाले ख्यातमासीत्। इदं पुटभेदनं तैलङ्गदेशवर्तिनि गोदावरीतटे वर्तते। मध्ययुगे 'मूंगीपत्तनम्' इति, साम्प्रतं च 'पैठन' इति नाम्ना प्रथितमस्ति।

२. भविष्य। प्रतिसर्ग। सं. ४ अ० ७ श्लो० ७८-८१।

स्यापत्यं पुमानिति व्युत्पत्या 'आरुणिः', 'अरुणि' वेत्यपि नाम प्रचचार।[1] सुदर्शनावतारत्वात् 'सुदर्शनः' इत्यभिधानं तु प्रसिद्ध यदेव। गृहागताय यतिरूपधारिणे ब्रह्मणे निम्बेऽर्कमदर्शयदिति घटनया 'निम्बार्कः' इति ख्यातिरभवत्।[2]

श्रीकृष्णस्य मिथिलायात्रायां स्वगुरुणा देवर्षिनारदेन सहायमपि समुपस्थित इति भागवते 'अरुणि' शब्देन निर्दिष्टम्—

नारदो वामदेवोऽत्रिः कृष्णो रामोऽसितोऽरुणिः।
अहं बृहस्पतिः कण्वो मैत्रेयश्च्यवनादयः॥
[भाग० १०। ८६। १८]

भीष्म-महाप्रयाणसमये समायोजिते सत्संगेऽपि निम्बार्कः संमिलित आसीदिति तत्रैव 'सुदर्शन' नाम्ना व्याहृतम्—

कक्षीयान् गौतमोऽत्रिश्च कौशिकोऽथ सुदर्शनः।
[भाग० १०।६।७]

एवं पुराणेष्वप्युपवर्णितो रावणसंहिता भृगुसंहिताप्रभृतिभिः प्रमाणितः श्रीशङ्कराचार्यादि धर्माचार्येभ्योऽतिप्राचीनो द्वापरान्ते कलिप्रारम्भे षष्ठे युधिष्ठिरशके महीमण्डलेऽवतीर्णः श्रीसुदर्शनावतारः श्रीनिम्बार्काचार्य आसीदितीह न कोऽपि विसंवादः।

श्रीयुगलशतकस्य भूमिका, वेदान्तरत्नमञ्जूषायाः प्राक्कथनम्, यथासमयं श्रीसर्वेश्वराख्य मासिकपत्रे प्रकाशिताः श्रीब्रजवल्लभशरणवेदान्ताचार्य-प्रभृति-विदुषां शोधलेखाः, ब्रजविदेहिमहत्तम—चतुःसम्प्रदाय-श्रीमहत्तम—काठिया बाबा—श्रीधनञ्जयदास-महाभागैर्लिखितः 'निम्बार्क वेदान्त का संक्षिप्त सार' इति ग्रन्थः, श्रीसर्वेश्वर मासिकपत्रस्य (वर्ष २० अंक २-७) 'श्रीनिम्बार्काचार्य और उनका सम्प्रदाय' इति शीर्षकः श्रीनिम्बार्क-विशेषाङ्कः, एवमादि प्रकाशितमपि बहु साहित्यमास्ते यत्र भूयांसि शोधपूर्णानि प्रमाणानि सन्ति संकलितानि। एतेभ्य एव सारं

---

१. वायुपुराणे।
२. भविष्य. नि. प्रा.—श्लो. ३२-३६।

संगृह्य समासत इयं समय-समीक्षा प्रस्तुता। अधिक-जिज्ञासुभिरत्रैवाक्षिनिक्षेपो विधेयः। अलमिह लेखकलेवरोपवृहणेनेति विरम्यते।

## श्रीनिम्बार्क-दर्शनम्

प्रेक्षणार्थकाद् 'दृशिर्' धातोः 'ल्युट्' प्रत्ययेन 'दर्शनम्' इति निष्पद्यते। दर्शन क्रिया। तदिन्द्रियं चक्षुः। विषयश्च रूपम्। चक्षुरिन्द्रियेण घटरूपं दृश्यते प्रत्यक्षीक्रियते। चक्षुरिदं प्राकृतम्। अतः प्राकृतमेव रूपं द्रष्टुं प्रभवति। अप्राकृतस्य दर्शनेऽस्य सामर्थ्यं नास्ति।

स्वकीयं दिव्यमैश्वरं रूपं दर्शयितुकामेन भगवता दिव्यमप्राकृतरूपदर्शनक्षमं चक्षुरर्जुनाय दत्तम्[१]। इदमेव योगजं प्रत्यक्षम्। अनुभूयते च भगवत्कृपयैव। अयमनुभव एव दर्शनम्। एवञ्च यद् दृश्यते (योगजेनात्मतत्त्वरूपेणानुभूयते) तदेव दर्शनम्। इति भावव्युत्पत्त्याऽऽत्मतत्त्वानुभवो दर्शनम्। भगवता श्रीश्यामसुन्दरेणापीदमेवोपगीतम्। यथा—

> अध्यात्मज्ञान-नित्यत्वं तत्त्वज्ञानार्थदर्शनम्।
> एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ।। (गी० १३।११)

अत्र श्रीकेशवकाश्मीरि-भट्टाचार्याः—"आत्मानमधिकृत्य प्रवृत्तं ज्ञानमध्यात्मज्ञानम्। अनात्मविविक्तात्म-याथात्म्यज्ञानमित्यर्थः। तस्मिन्नित्यत्वं तत्रैव सदा निष्ठत्वम्। तत्त्वज्ञानस्यार्थः प्रयोजनं निःशेषाविद्यानिवृत्तिपूर्वकं निरतिशयानन्द-भगवद्भावापत्तिलक्षणो मोक्षः। तस्य दर्शनमालोचनम्। एतदमानित्वादिविंशकं ज्ञानम्। ज्ञायते तत्त्वमनेनेति ज्ञानमिति प्रोक्तम्। अतोऽन्यथा, उक्तादस्माद्विपरीतं यन्मानदम्भादिमत्त्वं तदज्ञानमिति प्रोक्तम्। ज्ञानविरोधिभूतं मुमुक्षुणा यत्नेन त्याज्यमित्यर्थः।"—इति व्याचिख्युः।

ज्ञायते तत्त्वमनेनेति ज्ञानम्। अस्य प्रयोजनं निःशेषाऽविद्या निवृत्तिः, निरतिशयानन्द-भगवद्भावापत्तिलक्षणो मोक्षश्च। अनात्मविविक्तस्यात्मनो याथात्म्यज्ञाने निष्ठा प्रकारता जीव-ब्रह्मणोस्तादात्म्यसम्बन्धेनाऽवच्छिन्ना भवति। दर्शनमालोचनमनुभवो वा। इदं विशेष्यं (दर्शनं) निरव-

१. दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्। (गी० ११।८)

च्छिन्नम् । एव प्रकारको बोध एव दर्शनम् । अर्थात् तादात्म्य-सम्बन्धावच्छिन्ना याऽऽध्यात्मकत्वनिष्ठा प्रकारता तादृश-प्रकारतात्वावच्छिन्ना या दर्शनत्वनिष्ठा निरवच्छिन्ना विशेष्यता तादृशविशेष्यताको बोधो दर्शनमिति प्रतिफलितम् ।

एवमाध्यात्मिकं ज्ञानं दर्शनम् । तत्प्रतिपादकञ्च शास्त्रमपि दर्शनमेवोच्यते । श्रीनिम्बार्काचार्याभिमत दर्शनं श्रीनिम्बार्कदर्शनमित्यभिधीयते । श्रुतिः, स्मृतिः, सात्विक-पुराणानि, ब्रह्मसूत्रम्, इत्यादयो ग्रन्था अत्र प्रमाणत्वेन स्वीक्रियन्ते ।

"अस्य महतो भूतस्य निःश्वसितमेतद् यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः सूत्राणि०" (बृहदारण्यक-अ० ४ ब्रा० ५ मं० ११) इति श्रुतिःप्रतिपादितान्यन्तरङ्गप्रमाणानि । यथोक्तं श्री श्रीनिवासाचार्यवर्य्यैर्वेदान्तकौस्तुभे 'सर्वज्ञ-ब्रह्म-निःश्वसितैरन्तरङ्गैर्वेदैरेव ब्रह्म वेद्यं न बहिर्भूतैरन्यकल्पितानुमानादिभिरिति फलितोऽर्थः ।' (वे. कौ० १।१।३)

स्वयं श्रीनिम्बार्काचार्या अपि वेदान्तपारिजात-सौरभे "जिज्ञास्यं ब्रह्म शास्त्रप्रमाणकमेव, नान्यप्रमाणकम्, समस्तश्रुतीनां साक्षात् परम्परया वा तत्रैव समन्वयात् । ……………तस्मात् सर्वज्ञः सर्वाऽचिन्त्यशक्तिविश्वजन्मादिहेतुर्वेदैकप्रमाणगम्यः सर्वभिन्नाभिन्नो भगवान् वासुदेवो विश्वात्मैव जिज्ञासाविषयस्तत्रैव सर्व शास्त्रं समन्वेतीत्यौपनिषदानां सिद्धान्तः" (वे. पा. सो १।१।४) इति प्रत्यपीपदन् ।

श्रुतिषु काश्चन सन्ति भेदबोधिकाः, काश्चन चाऽभेदनिर्देशिकाः । यथा—'पराऽस्य शक्तिर्विविधैव श्रूयते, स्वाभाविकी ज्ञान-बल-क्रिया च' (श्वे. ६।८), 'सर्वाल्लोकानीशते ईशनीभिः' (श्वे. ३।१), 'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति' (तै० ३।१।१), नित्यो नित्याना चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' (कठ ५।१३), 'अहं सर्वस्य प्रभावो मत्तः सर्वं प्रवर्तते (गी० १०।८) 'वेदैश्च सर्वैरहमेव वेद्यः' (गी० १५।१५)—इत्यादयो भेदं बोधयन्ति ।

'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा.६।२।१), 'आत्मा वा इदमेकमासीत्' (तै० २।१), 'तत्त्वमसि' (छा.६।१४।३) 'अयमात्मा ब्रह्म'

(बृ० २।५।१६), 'सर्वं खल्विदं ब्रह्म' (छा० ३।१४।१), 'मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव' (गी० ७।७)—इत्यादयोऽभेदं प्रतिपादयन्ति ।

'वेदोऽखिलो धर्ममूलम्' (मनु० २।६) इति स्मृत्या च वेदस्य सर्वांशतया प्रामाण्यस्वीकारादुभयविधानामपि श्रुतीनां तुल्यबलत्वम् । अतोऽत्र गुण-प्रधान-भावो न ज्यायान् । अस्यां स्थितौ समन्वयात्मकोऽविरोधी स्वाभाविको भेदाभेदसम्बन्ध एव श्रुतिभिरभिप्रेयत इति श्रीनिम्बार्काचार्याणामभिमतम् ।

ब्रह्मैव जगदभिन्ननिमित्तोपादान-कारणम् । [1] परापरादिशब्दाभिधेयानां स्वस्वाभाविकीनां सूक्ष्मावस्थापन्नानां शक्तीनां तत्तद्गत-सद्रूपकार्याणां च स्थलतया प्रकाशकत्वमुपादानत्वम् ।[2] स्वस्वानादिकर्मसंस्कार-वशीभूतात्यन्त-सङ्कुचित-भोगस्मरणानर्ह-ज्ञानधर्माणां चेतनानां कर्मफल-भोगार्ह-ज्ञानप्रकाशनेन तत्तत्कर्मफलतत्तद्भोग-साधनैः सह योजयितृत्वं निमित्तत्वम् ।

'जगदभिन्नस्यापि ब्रह्मणो निमित्त-कारणत्वेन भेदः, उपादानकारणत्वेन चाऽभेदः सिद्ध्यति । अयमेव जीवब्रह्मणोः स्वाभाविको भेदाभेद-सम्बन्धः । सतामेव कार्याणां स्थूलतया प्रकाशनात्सत्ख्यातिः । ऊर्णनाभिरिव शक्तिविक्षेपलक्षणश्च परिणामः । भगवद्भावापत्ति-लक्षणो मोक्षः ।' इति समासतोऽवगन्तव्यम् ।

## तत्त्वत्रयम्

'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' (श्वे०१।१२) इति श्रुत्या तत्त्वत्रयमुदिश्यते । तत्र भोक्ता जीवश्चित्पदार्थः । भोग्यं जगद् अचित्पदार्थः । प्रेरिता ब्रह्म नियन्तृ पदार्थः ।

## चित्पदार्थः

भगवता श्रीनिम्बार्काचार्येण स्वरचितायां वेदान्तकामधेनौ प्रथम-द्वितीयश्लोकाभ्यां चित्पदार्थस्य जीवस्य स्वरूपं निरूपितम् । एतदेव

---

१. वे. कौ. १।१।२ ।
२. वे. कौ. १।१।२ ।

श्रीनिवासाचार्यचरणैर्ब्रह्मसूत्र-भाष्ये वेदान्तकौस्तुभे परिभाषितम्—"अचिद्वर्गभिन्नो ज्ञानस्वरूपो ज्ञातृत्व-कर्तृत्वादिधर्मकोऽहमर्थरूपो भगवदायत्त-स्थितिप्रवृत्तिकोऽणुपरिमाणकः प्रतिशरीरं भिन्नो बन्धमोक्षार्हश्चित्पदार्थः।" इति। (ब्र० १।१।१)

अयं चित्पदार्थो जीवो भगवतोऽघटनापटीयस्याऽनादिमाययाऽविद्यया परिवेष्टितत्वात् ज्ञातुमशक्यः। भगवत्प्रसादादेवैनं विदन्ति लोकाः। बद्ध-मुक्तादिभेदेनैष प्रभेदबाहुल्यवान्।

'प्रकृत्यादीनि च जीवानां भोग्यं भोगोपकरणं भोगस्थानानि। तत्र भोग्य शब्दादिक तद्विशिष्टद्रव्यमन्नपानादिकं च। भोगोपकरणं शरीरेन्द्रियमनोबुद्ध्यादि। भोगस्थानानि ब्रह्माण्डान्तर्गतचतुर्दश भुवनानि।' (वे० र० मं०)

### अचित्पदार्थः

अयं चेतनाद्भिन्नो ज्ञातृत्व-कर्तृत्वादि धर्माणां चानधिकरण.[1]। प्राकृताप्राकृतकालस्वरूपैस्त्रिविधः। तत्र शुक्लादिपदाभिधेय-सत्त्वादि गुणत्रया श्रयत्वं प्राकृतत्वम्। अप्राकृतं नाम त्रिगुण-प्रकृतिकालात्यन्तभिन्नमचेतनं प्रकृतिमण्डल-भिन्न-देशवृत्ति नित्यविभूति-विष्णुपद-परमव्योम-परमपद-ब्रह्मलोकादि पदाभिधेयम्। प्राकृताप्राकृतोभयभिन्नाचेतनद्रव्य-विशेष. कालो नित्यो विभुश्च। स च भूत-भविष्यद्वर्तमानः युगपच्चिरक्षिप्रादि व्यवहाराऽसाधारणहेतुः, सृष्ट्यादिसहकारी, परमाण्वादि परार्द्धावसान-व्यवहारासाधारणकारणं च। सर्वमपि प्राकृतं वस्तु कालतन्त्रम्। कालस्य सर्वनियामकत्वेऽपि परमेश्वर-नियम्यत्वमेव। लीलाविभूतौ तु परमेश्वरस्य कालपारतन्त्र्यानुकरणमात्रम्। नित्यविभूतौ च न तत्प्रभावशङ्कति।

### नियन्तृ-पदार्थः

ब्रह्म-प्रभृति-शब्दाभिधेयः सर्वज्ञः स्वाभाविकाचिन्त्यानन्तयावदात्मवृत्ति-गुणशक्त्याद्याश्रयो ब्रह्मरुद्रेन्द्र-प्रकृति-परमाणुकालकर्म स्वभावादि नियन्ता, दोषास्पृष्ट-सीमा, चिदचित्स्वाभाविकभेदाभेदाश्रयो जगदभिन्न-

---

१ अचेतनत्वं च चेतन-विजातीयत्वं ज्ञानत्वाद्यनधिकरणत्वं च (वे. र. मं.)।

निमित्तोपादानकारणः समानातिशयशून्यः सर्वव्यापकः सर्ववेदैकवेद्यः, परं ब्रह्म, सर्वेश्वरः श्रीराधाकृष्ण एव नियन्तृ-पदार्थः। अयमेव नित्यनिकुञ्ज-बिहारी वन्दारुजनमनोहारी रसिकाह्लादकारी परमहंस-मानस-मरालो दिव्यरसामृताकूपारो युगलस्वरूपः श्रीराधाकृष्णः सर्वैरुपास्य इति।

## अर्थ-पञ्चकम्

अथ भगवदुपासना—निरतैरुपासकैः १—उपास्यरूपम् २—उपासक-रूपम् ३—कृपाफलम् ४—भक्तिरसः ५—विरोधिनो रूपम्—इत्यर्थपञ्चक-मप्यवश्यं ज्ञेयमिति श्रीनिम्बार्काचार्यचरणैर्वेदान्तिकामधेनौ निरूपितम्। यथा—

उपास्यरूपं तदुपासकस्य च कृपाफलं भक्तिरसस्ततः परम्।
विरोधिनो रूपमथै दाप्तेर्ज्ञेया इमेऽर्था अपि पञ्च साधुभिः॥

उपास्यस्य ब्रह्मणः, उपासकस्य च जीवस्य स्वरूपं पूर्वं निरूपितम्। तृतीयोऽर्थः कृपाफलमिति। भगवत्कृपायाः फल मोक्षलक्षण सर्वकर्मध्वंसा-भावपूर्वक—निःशेषाऽविद्यानिवृत्यात्मक—परिपूर्णः यावदात्मभावि-ब्रह्मस्व-रूपादिविषयकाऽनुभूति-सन्ततिर्मुक्तिरिति। तदेव भगवद्भावापत्ति-सायु-ज्य-साम्यादिशब्दैरभिधीयते।

तुरीयोऽर्थो भक्तिरस इति। भक्तेः रसः प्रेमानन्दः। फलरूपा भक्तिरिति यावत्। भक्त्या रस्यतेऽनुभूयत इति श्रीभगवत्साक्षात्कारानु-भवः। उपलक्षणञ्चैतत्सर्वोपायानां कर्म-ज्ञान-प्रपत्यादिरूपाणामिति। अनेन भगवद्भावापत्तिलक्षण-मोक्षप्राप्ति-क्रमो विवक्षितः।

पञ्चमोऽर्थो भगवत्प्राप्तेर्विरोधिनो रूपमिति। तदिदं सामान्यवि-शेष-भेदाद् द्विविधम्। तत्र विशेषाः—अनात्मसु देहेन्द्रियमनोबुद्धिष्वात्मा-ध्यवसायः, श्रुतिस्मृत्यात्मक-भगवदीयाज्ञोपेक्षा, श्रीभगवदवतारेषु मानुष्य-तिर्यक्त्वादिभावः, अर्चाविग्रहेषु पाषाणत्वादिभावः, यथेष्टाचरणे शास्त्र-विरुद्धतयोद्धततया प्रवृत्तिः, अन्न-पान-धनादि-प्राप्तिकामनाप्रभृतयः। सामान्याश्च—मर्यादोल्लङ्घनम्, स्वोचितवर्णाश्रम—धर्मत्यागः, वर्णान्तर

चितधर्माचारः, कृतघ्नत्वम्, विद्याबलेन जिगीषया ब्राह्मणाद्यपमानम्-इत्यादयः। इमे विरोधिनो भगवत्प्राप्तेः प्रतिबन्धका वेदान्तरत्नमञ्जूषायां सविस्तरं प्रतिपादिताः।

एवं श्रीनिम्बार्काचार्याः पञ्च सहस्रवर्षेभ्यः प्राक्तनाः श्रीहंससनकादिनारद-समुपदिष्टस्य स्वाभाविक-द्वैताद्वैतदर्शनस्याऽनादि वैदिक-सत्सम्प्रदायस्याद्याचार्या आसन्निति विस्तरभिया समासत एवेह निरूपितमिति दिक्।

# रीतिसिद्धान्ते रसस्य स्थानं महत्त्वञ्च

डॉ० चन्द्रकिशोरः गोस्वामी

भारतीयकाव्यशास्त्रस्य विरञ्चिना भरतमुनिना या खल्वाद्या सृष्टिर्विरचिता सैवायं रस–सिद्धान्तः। परसिद्धान्तेन, वामनाचार्येरुद्भावितेन रीतिसिद्धान्तेन च विश्वामित्रस्य सृष्ट्या विश्वसृजः सृष्टिरिवासौ रससिद्धान्तः प्रतिस्पर्धितः। प्रतिस्पर्धयानया परं नैव तिरोहितो विजितो वा रसः। सामान्यदृष्ट्येदं प्रतिभाति यदलङ्काररीतिसिद्धान्तयोर्नास्ति रसस्य किमपि स्थानं महत्त्वञ्च। याथार्थ्ये तु मणिमालायामनुस्यूतस्य सूत्रस्य गतिरिव पृथिव्याञ्च प्रवहन्त्याः अन्तः सलिलाया धारेवास्ति रसस्य तत्र सुस्थिरं पदं परमं महत्त्वञ्च। अयमेवात्र विशेषो यत्ते सिद्धान्तिनः स्वकीयं सिद्धान्तं मुख्यं मन्यन्तेऽन्यदीयं चामुख्यम्। परिणामतः रीत्यलङ्कारसिद्धान्तिनां मते रीतितत्त्वमलङ्कारतत्त्वं वा काव्ये प्रधानं रसश्चाप्रधानः। अङ्गाङ्गिभावस्य व्याख्यायामेव तत्र विकल्पः। इदानीं रीतिसिद्धान्ते रसस्य स्थानं विचार्यते।

रीतिर्वचनविन्यासक्रमो[1] विशिष्टपदरचना[2] वेत्युभयोर्लक्षणयोर्नास्ति कोऽपि भेदः। रीतिस्वरूपं स्पष्टीकुर्वन्नाचार्यो वामनस्तां रीतिं गुणवतीमाह।[3] तस्माद् गुणा रीतयश्चायुतसिद्धसम्बन्धेन विद्यन्ते। वामनाचार्यस्य मतानुसारं गुणाः रीत्याश्रिता भवन्ति, परवर्तिन आचार्यास्तु रीतिं रसाभिव्यक्तिहेतुं गुणाश्रिताञ्च स्वीकुर्वन्ति।[4] एवं मतद्वयेऽपि रीतिगुणयोरन्योन्याश्रयसम्बन्धः परस्परं सिद्धसाधकभावो वा सिद्ध्यति।

---

१. काव्यमीमांसा, पृ. ४६

२. काव्यालङ्कारसूत्राणि, १।२।७

३. तत्रैव, १।२।८

४. गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन् व्यनक्ति सा।
रसांस्तन्नियमे हेतुरौचित्यं वक्तृवाच्ययोः ।। ध्वन्यालोकः, ३।६

आचार्यो वामनः पदरचनां रीतिं त्रिरूपां मन्यते यथा वैदर्भी, गौडी, पाञ्चाली चेति।[५] काव्यं ग्राह्यमलङ्कारात्[६], सौन्दर्यमलङ्कारः[७]। तच्च सौन्दर्यमात्मतत्त्वेन—रीत्या सम्भवति, अत एव रीतिरस्ति काव्यस्य परं सौन्दर्यम्। रीतेर्घटकतत्त्वानि सन्ति विंशतिः शब्दार्थगुणाः। ओजः प्रसादश्लेषसमतासमाधिमाधुर्य-सौकुमार्योदारतार्थव्यक्तिकान्तयः शब्दगुणा[८]-स्तन्नामका एव दशार्थगुणाः भवन्ति।[९] एतेषु गुणेषु केवलमर्थगुणाभ्यां कान्तिसमाधिभ्यां[१०] सह रससम्बन्धो विद्यते। अनेनेदं प्रतीयते यद् रीति-सिद्धान्तिनां मते रस आंशिककाव्यसौन्दर्याधायकः। वस्तुतस्तु, नेयं यथार्थता। रसस्तु काव्ये सततं ततं तत्त्वं सौन्दर्यस्य च हेतुरस्ति—आत्मभूतत्वात्। रसमात्मानममन्यमानैरपि रीतिसिद्धान्तिभिः परोक्षरूपेण तथ्यमिदं स्वीक्रियते। यतोहि रीतिसिद्धान्ते वैदर्भी एव श्रेष्ठा रीतिर्निगद्यते। अपरे च द्वे रीती काव्ये काव्यत्वस्याव्याप्तिदोषनिवारणायैव स्तः।[११] अतो वैदर्भी रीतिर्यदा समग्रगुणोपेता स्वीक्रियते[१२] तदार्थगुणयोः कान्तेः समाधेश्चापि तत्र विद्यमानत्वाद् वैदर्भ्यां रीत्यां रसस्य सत्ता सन्ततं सिद्ध्यति। गौडीरीत्या लक्षणं वामनाभिमते "ओजः कान्तिमत्त्वं" भवति[१३]। अत्रापि कान्तिगुणाद् रसावस्थितिः सिद्धैव। तृतीया पाञ्चाली रीतिस्तु माधुर्यसौकुमार्योपपन्नास्ति[१४]। ओजः कान्तिगुणयोर्विरुद्धौ माधुर्यसौकुमार्यगुणौ, तयोर्ग्रहणेनात्र वामनाचार्यः

---

५. सा त्रेधा-वैदर्भी, गौडी, पाञ्चाली चेति।—काव्यलंकारसूत्राणि, १।२।९

६. तत्रैव, १।१।१

७. तत्रैव, १।१।२

८. तत्रैव, ३।१।४

९ तत्रैव, ३।२।१

१०. दीप्तरसत्वं कान्तिः।—तत्रैव, ३।२।१४
अर्थो व्यक्तः सूक्ष्मश्च। सूक्ष्मो भाव्यो वासनीयश्च। तत्रैव, ३।२।६–९

११. तासां पूर्वा ग्राह्या गुणसाकल्यात्। न पुनरितरे स्तोकगुणत्वात्। तत्रैव, १।२।१४–१५

१२. समग्रगुणा वैदर्भी।—तत्रैव, १।२।११

१३. ओजः कान्तिमती गौडीया।—तत्रैव, १।२।१२

१४. माधुर्य-सौकुमार्योपपन्ना पाञ्चाली।—तत्रैव, १।२।१३

खलु गौडीरीतेः विपर्यासिनैतां रीतिं पाञ्चालीं स्वीकरोति । माधुर्यं पृथक्-पदतोक्तिवैचित्र्यं चास्ति[१५], अजरठत्वमपारुष्यञ्च सौकुमार्यं भवति[१६] । तदिदमत्र तात्पर्यं यत् पदस्य रचनायाश्च श्रव्यतया सह वक्रोक्तेर्ध्वनेश्च सौन्दर्यमपि रीत्यामस्यां विहितमाचार्येण । श्रेष्ठध्वनिः रसध्वनिरुच्यते, अतोऽनेन रूपेण रसस्थितिः पाञ्चाल्यां रीत्यामपि राराजत एव । वामनाचार्यात् प्राक् काव्यविद्भिः कृतानां गुणलक्षणानां विचारणया तथ्यमिदं स्पष्टतरं जायते । नाट्यशास्त्रकारेण भरतमुनिना माधुर्यगुणस्य लक्षणं निषेधपरं प्रतिपादयतानुद्वेगकराणि वचांसि माधुर्यमिति प्रोक्तम्[१७] । अनुद्वेजकानि वचनानि श्रुतिसुखदानि श्रव्याणि च भवन्ति[१८] । भामहाचार्येण माधुर्ये श्रव्यता समस्तपदता च स्वीकृता[१९] । दण्डी तु विधिरूपेण तत्परिभाषमाणः रसवद्वचांसि मधुरं गुणमुक्तवान्[२०] । श्रीमदभिनवगुप्तपादाचार्यैरपि श्रोत्रविषयीभूतमिवाह्लादि काव्यं मधुरं निर्दिष्टम्[२१] । मम्मटाचार्येण वामनोक्तं माधुर्यं स्वस्मिन् माधुर्यगुण एवान्तर्निवेश्य[२२], माधुर्यस्य स्वरूपं 'आह्लादकत्वं' गदितम्[२३] । रसस्तु भवत्येवानन्दः[२४] ।

---

१५. पृथक्पदत्वं माधुर्यम् ।—तत्रैव, ३।१।२१
उक्तिवैचित्र्यं माधुर्यम् ।—तत्रैव, ३।२।११

१६. अजरठत्वं सौकुमार्यम् ।—तत्रैव, ३।१।२२
अपारुष्यं सौकुमार्यम् ।—तत्रैव, ३।२।१२

१७. बहुशो यच्छ्रुतं वाक्यमुक्तं वापि पुनः पुनः ।
नोद्वेजयति यस्माद्धि तन्माधुर्यमिति स्मृतम् ॥—नाट्यशास्त्रम्, १६।१०४

१८. ..................मनोहराणि हृदयाह्लादकानि श्रुतिरम्यत्वेनार्थरम्यत्वेन च यानि पदानि तेषां विन्यासः......................माधुर्यं नाम ।—वक्रोक्तिजीवितम्, पृ. ११३

१९. श्रव्यं नातिसमस्तार्थं काव्यं मधुरमिष्यते ।—काव्यालंकारः, २।३

२०. मधुरं रसवद्वाचि वस्तुन्यपि रसस्थितिः ।
येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः ॥—काव्यादर्शः, १।५१

२१. श्रोत्रविषयीभूतमिव यदाह्लादि काव्यं तत् कान्तिर्नाम शब्दगुणः । तदेतल्लोके मधुरकाव्यमिति प्रसिद्धम् ।—अभिनवभारती, पृ. ३४४

२२. पृथक्पदत्वरूपं माधुर्यं भङ्ग्या साक्षादुपात्तम् ।—काव्यप्रकाशः, अष्टमोल्लासः, पृ. ३६१

२३. आह्लादकत्वं माधुर्यं शृंगारे द्रुतिकारणम् ।—तत्रैव, ८।६८

२४. रसो वै सः । रसं ह्येवायं लब्ध्वानन्दीभवति ।—तैत्तिरीयोपनिषद्, २।७

सौकुमार्यमपि माधुर्यस्य भेद एवास्ति। हेमचन्द्राचार्यः 'सौकुमार्यं श्रुतिकटुत्वदोषाभाव' इति मत्वा तन्माधुर्यप्रकारमेव वावद्यत[२५]। तेन कान्ति माधुर्य चापि तुल्यमुक्त्वा मधुररस्य रसवत्ता समर्थिता [२६]। अतोऽनेन विवेचनेन सिद्ध्यति यन्माधुर्यसौकुमार्ययोर्भावे रसस्थितिः काव्ये वोभूयत एव। इदमपि सुपुष्टं जायते यत् पाञ्चाल्या रीत्याः रसेन सहाविच्छिन्नसम्बन्धो वर्तते। 'एवं रीतित्रयं रससम्बन्धि–इति सिद्धं भवति।

काव्यगुणानां भेदविषये तु काव्यशास्त्रिणामस्ति वैमत्यं, परं गुणानां महिमा काव्यशास्त्रे आद्यन्तमङ्गीकृतः। काव्यशास्त्रिभिर्विविधैर्गुणैः सह विभिन्नानां रसानां सम्बन्धो व्यवह्रियते। आचार्येण भरतेन शृंगाराद्भुतयोरुदारत्वं प्रकीर्तितम्[२७]। तन्मते कान्तिगुणोऽपि शृगाररसेन सम्बद्धोऽस्ति[२८]। दण्डी माधुर्यं रसवद् वदति। स माधुर्यस्य भेदद्वयं निरूपयति—अग्राम्यमधुरता[२९]श्रुत्यनुप्रासश्च[३०]। एतयोराद्यो भेदो वस्तु-

---

२५ सोऽयं श्रुतिकटुत्वदोषाभावो न गुणः माधुर्यप्रकार एवायम्।—काव्यानुशासनम्, पृ. २३८

२६ श्रोत्रमनः प्रह्लादजननं कान्त भरतः। ......................तदिदं माधुर्यसाधारणमिति वामनीयाः।—तत्रैव, पृ. २३६

२७ दिव्यभावपरीतं यत् शृंगाराद्भुतयो जितम्।
अनेकभावसंयुक्तमुदारत्वं प्रकीर्तितम्॥—नाट्यशास्त्रम्, १६।७७

२८. मन्मनः श्रोत्रविजयमाह्लादयति हीन्दुवत्।
लीलाद्यर्थोपपन्नां वा ता कान्ति कवयो विदुः॥—तत्रैव, १६।१००
—यन्मनो विजयमाह्लादयति यथा शृंगारविभावरूपं लीलादिचेष्टालंकार-सुन्दरं काव्यार्थरूपं तत्कान्तिगुणयुक्तं तदेव दीप्तरसत्वमित्युक्तमन्यैः।—अभिनवभारती, पृ. ३४३

२६. अग्राम्योऽर्थः रसावहः।—काव्यादर्शः, १।६४
—अग्राम्यता सहृदयहृदयगमतया रसं व्यञ्जयन्ती माधुर्यगुणमावहतीति।
—काव्यादर्शस्य जीवानन्दविद्यासागरकृतटीका, १।६४, वृत्तिभागतः।

३०. यया कदाचिच्छ्रुत्या यत् समानमनुभूयते।
तद्रूपा हि पदा सन्ति सानुप्रासा रसावहा॥—काव्यादर्शः, १।५२

रसोऽपरश्च वागुरसः। वामनाचार्यस्याभिमते दीप्तरसत्वं कान्तिगुणः, स च सकलैः रसैः सम्बद्धोऽस्ति[३१]। समाधेश्च द्वयोर्भेदयोः—भाव्यवासनीययोर्भाव्यो विभावादिकैर्भावनीयः साधारणीकृतो वार्थः। एवं समाधेरपि रसैर्भावैश्च सम्बन्धः[३२]। रुद्रटालंकारस्य टीकाकृत् नमिसाधुः गुणं रीतिरसालंकारादीनां वाचकं व्यापकं शब्दं मन्यते[३३]। अच्युतरायमहाभागोऽपि धर्मं, रसं, लक्षणं, रीतिं, वृत्तिमलङ्कारञ्च गुणमाह[३४]। आनन्दवर्धनेन गुणः रस इति मन्यमानानां केषाञ्चन मतमुल्लिखितम्[३५]। प्रतीहारेन्दुराजः गुणत्रयस्य रसाभिव्यक्तिकारितां निर्दिशन् प्रसादगुणस्य श्रेष्ठतां प्रतिपादयति[३६]। क्षेमेन्द्रस्य मौलिकगुणचिन्तायां त्रिषु गुणेषु रसवैमल्यमिति एको गुणः प्रतिपाद्यते[३७]। भोजराजेन कान्तिगुणस्य दीप्तरसता तु समर्थितैव[३८]। वाक्यगुणस्य भाविकत्वसम्बन्धोऽपि रसभावैः समं स्वीक्रियते[३९]। रत्नदर्पणकारः गुणस्य शब्दार्थधर्मतां स्वीकुर्वाणोऽपि[४०]

---

३१. दीप्ता रसा शृंगारादयो यस्य स दीप्तरसः, तस्य भावो दीप्तरसत्वं कान्तिः। काव्यालंकारसूत्राणि, ३।१।१५ सूत्रस्य वृत्तिः।

३२. तत्रैव, ३।२।६–१०

३३. एताश्च रीतयो नालंकाराः किं तर्हि शब्दाश्रया गुणा इति। रसास्तु सौन्दर्यादय इव सहजा गुणाः।—रुद्रटालंकारस्य टिप्पणम्, पृ. १०,१५०

३४. धर्माः रसा लक्षणानि रीत्यलंकृतिवृत्तयः।
रसिकाह्लादका ह्येते काव्ये सन्ति च षड्गुणाः॥—साहित्यसारः, १।२०

३५. अत्र केचिदाहुः—गुणिव्यवहारः रसादीनां इतिवृत्तादिभिस्सह, न तु जीव-शरीर व्यवहारः। रसादिमयं हि वाच्यं प्रतिभासते न रसादिभिः पृथग्भूतम्।
—ध्वन्यालोकः, ३/पृ. ४१६

३६. प्रसादस्त्वव्यवधानेन रसाभिव्यक्त्यनुगुणता। त्रयाणां गुणानां मध्यात् प्रसादस्य प्राधान्यम्। माधुर्यौजसोस्तु तत्तद्रसाभिव्यक्त्यानुगुण्येन तारतम्येनावस्थितयोः प्रसाद एव सोपयोगता।—लघुवृत्तिः, पृ. ८१

३७. तत्र शब्दवैमल्यमर्थवैमल्यं रसवैमल्यमिति त्रयः काव्यगुणाः।—कविकण्ठाभरणम्, ४/पृ. १३१

३८. कान्तिर्दीप्तरसत्वं स्यात्।—सरस्वतीकण्ठाभरणम्, १/पृ. ७७

३९. भावतो वाक्यवृत्तिर्या भाविकं तदुदाहृतम्।—तत्रैव, १/पृ. ६७

४०. शृंगारकरुणौ हि मधुरौ ततस्तद् व्यञ्जकोऽर्थोऽपि मधुरस्तस्य शर्करादिरससोदरं माधुर्यम्।—सरस्वतीकण्ठाभरणस्य रत्नदर्पणटीका, पृ. ६३

गुणं रसव्यञ्जकं मन्यते माधुर्यगुणञ्च शृगांरकरुणरसाभिव्यञ्जकमथ च मधुररस विवृणोति[४१]।

ध्वनिकार आनन्दवर्धनश्चेतसो द्रुतिदीप्तिविकासदशानुसारं माधुर्यौजः प्रसादांस्त्रीन् गुणान् विविनक्ति। एतेषु माधुर्यं शृगांरकरुणयोर्वर्तते[४२]। माधुर्यस्य प्रतीपो गुण ओजः। गुणोऽयं रौद्रवीराद्भुतरसेषु विद्यते[४३]। प्रसादस्तु सर्वेषां रसानां सामान्यो गुणः[४४]। ध्वनिकारमनुसरद्भ्यां मम्मटविश्वनाथाभ्यां सम्भोगशृंगारे करुणे, विप्रलम्भशृंगारे शान्ते च माधुर्यगुणस्यावस्थितिः क्रमेणातिशयान्विता समर्थ्यते[४५]। ओजोगुणस्याधिक्य क्रमशो वीरे बीभत्से रौद्रे च रसे प्रतिपाद्यते[४६]। प्रसादगुणश्च सर्वेषु रसेषु रचनासु वा मन्यते[४७]। कुमारस्वामी गुणत्रयस्य रसधर्मतां ब्रूते[४८]। अच्युतरायेण सांख्यदर्शनानुसारं सात्त्विकराजसतामसगुणान् निरूप्य माधुर्यौजः प्रसादानां नामान्तरं कल्प्यते[४९]। गुणस्थितिस्तु अस्यापि मते तैस्तैः रसैः सह तथैवोदाह्रियते यथा पूर्वं मम्मटविश्व-

---

४१. सामान्यगुणास्थितौ गुणान् विभजते-त्रिविधाश्चेति। शब्दः शरीरस्थानीयोऽधिष्ठेयतया प्रथमप्रतिसन्धेयतया च बाह्यः। ततस्तदाश्रिता गुणा अपि बाह्याः। अर्थस्त्वात्मतुल्योऽधिष्ठापकतया पश्चाद् ग्राह्यतया चान्तरस्तेन तदाश्रिता गुणा अप्यान्तरा।—तत्रैव, पृ. ४४

४२ शृंगारे विप्रलम्भाख्ये करुणे च प्रकर्षवत्।
माधुर्यमार्द्रतां याति यतस्तत्राधिकं मनः॥—ध्वन्यालोकः, २।९

४३ रौद्रादयो रसा दीप्त्या लक्ष्यन्ते भाववर्तिनः।
तद्व्यक्तिहेतू शब्दार्थावाश्रित्यौजो व्यवस्थितम्॥—तत्रैव, २।१०

४४ समर्पकत्वं काव्यस्य यत्तु सर्वरसान् प्रति।
स प्रसादो गुणो ज्ञेयः सर्वसाधारणक्रियः॥—तत्रैव, २।११

४५. काव्यप्रकाश, ८।६८, साहित्यदर्पणः ८/पृ० ५३५

४६. काव्यप्रकाश ८/६९, साहित्यदर्पणः ८/पृ. ५३७

४७ काव्यप्रकाश, ८/७०, साहित्यदर्पणः ८/पृ. ५३८

४८. वस्तुतस्तु भामहादिमतेर्भावे श्लेषादिगुणानां रसधर्मत्वम्।—रत्नापणटीका, पृ. ३३५

४९. सात्त्विकैकरसस्थो यो धर्मो धीद्रुतिकार्यभौ।
माधुर्यं भोगकरुणाऽयोगशान्तेऽधिकं क्रमात्॥

नाथादिभिराचार्यैर्वर्णिता। श्रीकृष्णकविना मान्येषु चतुर्विंशतिर्गुणेषु नवार्थगुणाः प्रोक्ताः, सप्त च गुणाः रचनया रसेन वा सम्बद्धा इतरे च दोषाभावरूपेण मता। रससम्बद्धे पु गुणेषु माधुर्यगुणस्य स्थितिविशेषतः शृंगारकरुणरसयोः, उदारत्वौजसो वीरवीभत्सरौद्रेषु, ओजोगुणस्य च क्वचित् कदाचित् शृगांराद्भुतयोर्भवति। चतुर्णामन्येषां गुणानां स्थिति-र्यथायथं सर्वेषु रसेषु विद्यते[५०]।

ततोऽयं निष्कृष्टार्थो यद् विद्वांसः प्रायो माधुर्यकान्तिप्रसादाग्राम्यता-समाधिभाविकत्वगुणानां सम्बन्धं सर्वैः रसैः सह स्वीकुर्वन्ति, एतेष्वपि विशेषतः कान्त्युदारतागुणयोः शृंगारेण सह, माधुर्यस्य शृंगारकरुण-शान्तैः सह, ओजसो वीररौद्रवीभत्सभयानकाद्भुतैः सह सम्बन्धं मन्यन्ते। केचन तूदारताया रौद्रवीराद्भुतभयानकरसैः सह सम्बन्धं निरूपयन्ति, तथैव चौजसः शृंगारेणापि। गुणानां रसानां च परस्परसम्बन्धविवेचने-नानेन सुस्पष्टमिदं भवति यन्माधुर्यगुणोपपन्नायाः रीतेः शृंगारशान्तरसा-भ्यां सह विशेषेण सम्बन्धो वर्तते। काव्यगुणानामितिहासे वामनाचार्येण माधुर्यं पाञ्चाल्या सह, किन्तु परवर्तिभिराचार्यैर्वैदर्भ्या सह सम्बद्धमुरी-क्रियते। माधुर्योजः प्रसादाख्यास्त्रयो गुणाः रसनिष्ठाः स्वीक्रियन्ते।

आचार्यवामनो दीप्तरसत्वस्य तात्पर्यं शृंगारादिरसानां सर्वेषां भूयिष्ठामभिव्यक्तिं मन्यते[५१]। ततः परं रसानां विभागद्वयकल्पना दृश्यते कोमला रसाः कठोराश्च[५२]। दीप्तरसत्वेन कठोररसतावगम्यते[५३]। एव-

---

तामसंकरसम्भो यो धर्मो धीदीप्तिकार्यसौ।
ओजो वीरे च वीभत्से रौद्रे च क्रमशोऽधिकम्॥
राजसेषु तु तेषु स्यात् प्राधान्यमुभयोरपि॥—साहित्यसारः, ७/१२२-१२४

५०. शृंगारे करुणे चापि माधुर्यं स्याद् विशेषतः।
उदारत्वौजसी वीरे प्रोक्ते वीभत्सरौद्रयोः॥
ओजो गुणस्तु कथितः शृंगारेऽप्यद्भुते क्वचित्।
अन्ये चतुर्गुणाः सर्वरसेष्वपि यथोचितम्॥—मन्दारमरन्दचम्पू, ११ शेषबिन्दुः

५१. काव्यालंकारसूत्राणि, ३।२।१५ सूत्रस्य वृत्तिः

५२. शृंगारकरुणौ लोकेऽत्यन्तकोमलतां गतौ।
अत्यन्तकठिनौ रौद्रवीभत्सौ रसनामकौ॥

# वैदिकमैतिह्यं विद्या च

प्रभापको डा० सुधीर कुमार गुप्तः, जयपुरम्

त्रयीति नाम्ना सुविख्याताः, सुपरिचिताः, सुविज्ञाताः, सुप्रचलिता भारतीयानां मतेन सृष्ट्यादौ किल चतुर्भिर् ऋषिभिरग्निवाय्वादित्याङ्गिरोभिर्निःश्वासवत्साक्षात्कृता ब्रह्मणो निःश्वसिताः, सर्वकल्याणनिदर्शका, मानवोपकाराय सम्भूता, ऋषिभिस्तितउना सक्तुपवनमिव धीरेण मनसा सुनियोजिताः, सर्वभगद्व्यवहारद्योतका, जगतो दुःखनिवारणोपायनिर्देशकाः, समस्तसत्यविद्यानां प्रवर्तकाः, कल्याणवाचः, सर्वहुतो यज्ञात्पुरुपाज्जाता ऋग्यजुःसामाथर्वाख्याश्चत्वारो वेदा हिन्दूधर्मावलम्बिनां प्राणभूताः सन्ति। ऋचां वेद ऋग्वेदे खलु अग्निवायुमरुदिन्द्रवरुणमित्रादिपदानां माध्यमेन पदार्थविद्याया, यजुर्वेदे यजुषां माध्यमेन शिल्पविद्यायाः, सामवेद ऐन्द्रपवमानरथन्तरादिसाम्नां माध्यमेन संगीतोपासनाकाण्डयोर्, अथर्ववेदे चायुर्वेदशस्त्रविद्यादर्शनलोकव्यवहारादीनां प्रतिपादनमस्ति। एवं विज्ञानकर्मोपासनाज्ञानकाण्डा इति चत्वारो वेदविषयाः सन्ति। एतेषु खल्वादिमो विज्ञानविषयो हि सर्वेभ्यो मुख्योऽस्ति। विज्ञानेन हि परमेश्वरादारभ्य तृणपर्यन्तपदार्थानां बोधो भवति। अत्रापीश्वरानुभवः प्राधान्यं भजत इति सर्वेषां वेदानां तात्पर्यम्—

सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद् वदन्ति।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्॥ इति।

अतो वेदानां वेदत्वं सार्थकं यत. पदमिदं विद ज्ञाने, विद सत्तायां, विद्लृ लाभे, विद विचारणे इत्येतेभ्यो धातुभ्यो निष्पन्नमस्ति। "विदन्ति जानन्ति, विद्यन्ते भवन्ति, विन्दन्ति विदन्ते लभन्ते, विन्दते विचारयन्ति सर्वे मनुष्याः सर्वाः सत्यविद्या यैर्येषु वा, तथा विद्वांसश्च भवन्ति ते वेदाः, इति दयानन्द-स्वामिनः। वेदाः श्रुतिनाम्नापि व्यवह्रियन्ते, यत एतैर् 'आदिसृष्टिमारभ्याद्यपर्यन्तं ब्रह्मादिभिः सर्वाः सत्यविद्याः श्रूयन्ते'।

२. वेदानां भाषा देवभाषेति खल्वृषीणां मतम्-देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवः वदन्ति इति । भाषेयं धीरैर्मनसा व्यवहृतास्ति । अत्र वाचि भद्रा लक्ष्मीर्निहिता विद्यते । एतां भद्रां लक्ष्मीं त एव जानन्ति, अनुभवन्ति च, ये तेषामादिघीराणा व्यवहारपद्धति जानन्ति । इयं वाग् ऋषिषु प्रविष्टाम्नाता । इय वागेकाक्षरा । तथैवात्र वेदे प्रयोगाः प्रतीयन्ते । वेदवाच एकाक्षरस्वरूपस्वीकार एव 'एकः शब्दः सम्यग्ज्ञात सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति' इति, 'अनन्ता वै वेदाः' इति चोक्ती सार्थके भवतः । वेदाना सर्वज्ञानमयत्वमपि तदैव सिद्ध्यति । एव मत्वा यास्कादिभिर् बहूनां पदानां व्याख्यानेऽक्षरेषु विभागो विहितः एकाक्षरकोषाणां च रचनाभून् । ऐतरेयब्राह्मणे प्रतिपादितमक्षरसम्मानमपि वैदिकभाषाया एकाक्षरस्वरूपमाश्रयते । एकाक्षरैरेव मिथुनप्रक्रियया समासाख्यया बह्वक्षररूपाया भाषाया विकासो जातः । अथर्ववेदे ब्राह्मणेषु च सामपदस्य 'सा' च 'अम' चेति विभागद्वय विधाय विविधानि व्याख्यानानि प्रत्तानि सन्ति । एत विधिमनुसृत्य ब्राह्मणग्रन्थपूद्गीथादिपदानां व्याख्यानमक्षरविभागेन कृतम् । छान्दोग्योपनिषद्यप्येतादृशानि व्याख्यानानि सन्ति । एकाक्षरास्वरूपतो बह्वक्षरास्वरूपविकासे भाषा खलु एकपदी, द्विपदी, चतुष्पदी जायत इति दीर्घतमस औतथ्यस्य वैश्वदेवं जागतं दर्शनम् । एषा वाक् सहस्राक्षरा—असंख्यार्थबोधिका सत्यष्टापदी 'बभूवुषी' विद्यते । अत्राक्षराणां संख्या खलूपलक्षणं प्रतिभाति । अक्षरार्थानां योजनायां मिथुनप्रक्रियायाः प्रयोगादेव गायत्रीमन्त्रस्य प्रत्येकस्मिन् अक्षरेऽष्टाधिकैकसहस्रं यत्नानां विद्यमानताभिमता । अस्य मन्त्रस्य प्रथमः पाद ऋग्वेदं, द्वितीयः पादः सामवेदं, तृतीयः पादश्च यजुर्वेदमभिव्यञ्जन्ति । गायत्रीमन्त्रस्यैकश्चतुर्थः सूक्ष्माव्यक्तार्थप्रतिपादकः पादोऽप्यस्ति, योऽथर्ववेदं द्योतयति । वैयाकरणैः समासप्रक्रियाया ये नियमा निर्धारिताः सन्ति, ते सर्वे नियमा अत्रापि मिथुनप्रक्रियया भाषाविकासे संगच्छन्ते ।

३. पूर्वस्मिन् काले वेदमन्त्राणामर्थानां साक्षात्कर्तार ऋषयोऽभूवन् यान् यास्कः 'साक्षात्कृतधर्माण' इत्याह । परं गच्छति काले स्थितिः परिवर्तनमभजत । तदा जना वेदं सम्यगवगन्तुं नाशक्नुवन् । तेषां वेदाध्ययनं सुकरं स्यादिति प्रयोजनमुद्दिश्य ऋषिभिराचार्यैश्च मन्त्राणां व्याख्यानं प्रारम्भि । सर्वप्रथमं प्रकरणविशेषं लक्ष्यीकृत्य मन्त्राणां पौर्वापर्यक्रमं परिवर्त्य, मन्त्राणां केषांचन विभागं कृत्वैकस्य स्थान एकाधिकान् मन्त्रान्

विरचय्य, कठिनानां केषांचन पदानां स्थाने तस्मिन् काले सुज्ञातान् सरलान् पर्यायवाचिशब्दान् प्रयुज्य, मन्त्रगतानां केषांचित् पदानां बीजगणितीयसमीकरणशैल्यार्थान् प्रदाय, यज्ञविधीन् सविस्तरमुपवर्ण्य, यत्र तत्र विधीनां भावान् प्रकाश्य च शाखासंहिता निरमायिषत। यथाद्यत्वे टिप्पणव्याख्यानादिभिः सयुक्ता वेदमन्त्राणां सङ्ग्रहाः प्रकाश्यन्ते, यत्र तत्र महाविद्यालयेषु विश्वविद्यालयेषु च पाठ्यक्रमे निर्धार्य पाठ्यन्ते, एवमेवैतत्प्रतिभाति यद् वैदिके काले शाखासहिता एव वेदमन्त्राणां सङ्कलनान्यासन्, तथैव चापाठ्यन्त। शाखासंहितानामेतादृशं स्वरूपं सम्यगालोच्यैव दयानन्दस्वामिना तासां वेदव्याख्यानत्व प्रख्यापितमस्ति।

४. गच्छति काले शाखासंहिता अपि दुर्बोधा अजायन्त। सम्प्रति ब्राह्मणानि व्यरच्यन्त। एतेषु ग्रन्थेषु बहूनां मन्त्राणां प्राधान्येन याज्ञिकं संक्षिप्तं भाष्यं विद्यते। वैदिकी यज्ञविद्याप्यत्र सविस्तर वर्णिता, यत्रावश्यकं तत्र व्याख्यातापि चास्ति। यज्ञोऽत्र देवपूजासंगतिकरणदानविशिष्टान् सर्वान् अर्थान् द्योतयति। तस्माद् ब्राह्मणेषु वर्तमाना विद्या विश्वसमस्याः समादधति। प्रत्येकस्य वेदस्य पृथक् पृथग् ब्राह्मणान्यासन्। अद्यत्वे तत्र कानिचनैव मिलन्ति। तानि यथा ऋग्वेदस्यैतरेयशाङ्खायनब्राह्मणे, यजुर्वेदस्य शतपथब्राह्मणं काण्वाना माध्यन्दिनानां च, सामवेदस्य ताण्ड्यमहाब्राह्मण, कदाचित् तदङ्गभूतानि, परमद्य तस्मात् पृथक्-पृथगुपलब्धानि दैवतार्षेयवंशादीनि, अथर्ववेदस्य गोपथब्राह्मण, कृष्णयजुर्वेदस्य तैत्तिरीयं ब्राह्मणं, जैमिनीयसामवेदस्य च जैमिनीयं ब्राह्मणम्–इत्येतावन्ति ब्राह्मणानि सम्प्रत्युपलभ्यन्ते। एतेषा ब्राह्मणानां प्रायेणान्तिमा भागा आरण्यकनाम्ना सुप्रसिद्धाः आरण्यकेषु मन्त्राणां यद्यपि विविधपक्षेषु अर्थाः प्रत्ताः सन्ति, तथापि प्रामुख्यं त्वत्राध्यात्मविद्याया एवास्ति। उपनिषदा सख्या पुष्कला वर्तते, परं प्रामाणिकास्तूपनिषद एकादशैव स्वीक्रियन्ते। एतासु ब्रह्मविद्याया विस्तर उपलभ्यते। सर्वं खल्विदं जगद् ब्राह्मणस्तथैव प्रभवति यथा सतः पुरुषात् केशलोमानि जायन्ते, यथा चोर्णनाभिः सृजति गृह्णाति च। जगति द्वौ चेतन-पुरुषौ स्तः—ब्रह्म, जीवश्च। एतौ द्वौ जगति विद्यमानौ स्तः। जीवः कर्मफलं भुङ्क्ते, ब्रह्म च तं जीवं पश्यति। यदात्मज्ञानेन जीवस्य हृदयग्रन्थिर्भिद्यते., स आत्मसाक्षात्कारं करोति, ब्रह्मानन्द-

विशिष्टं मोक्षपदं च लभते। एवमुपनिषत्सु मन्त्राणामध्यात्मविषयस्य विस्तरो व्याख्यानं च लभ्यते।

५. वैदिकवाङ्मयस्यान्तिम सोपानं सूत्रसाहित्यमुच्यते। अस्य साहित्यस्य षड् वर्गाः सन्ति, ये वेदस्य षडङ्गानीत्यभिधीयन्ते। तानीमानि-शिक्षा, कल्पो व्याकरणं निरुक्त, छन्दो, ज्योतिषं चेति। अत्र कल्पे श्रौत-गृह्य-धर्म-शुल्वसूत्राणामन्तर्भावोऽस्ति। यादृशो विस्तारः कल्पसूत्राणां, तादृशो नान्यस्याङ्गस्य, व्याकरणं विहाय। यतो व्याकरणं लोकभाषामाप्यधेति, अतोऽस्यापि सुमहान् विस्तरो लक्ष्यते। यद्यपि निरुक्तस्य वेदार्थे महान् योगः, तथाप्यस्याधिकं साहित्यं न लक्ष्यते। शिक्षा मन्त्राणामुच्चारणविधिं दर्शयति। कल्पे वैदिककालीनानां यज्ञानां, व्यवहाराणां, विधानानां च संक्षेपेण संसक्तं क्रमिकं च वर्णनमस्ति। व्याकरणं वैदिकलौकिकभाषयोः रचनां शब्दव्युत्पत्तिं चोपदिशति। निरुक्तमपि शब्दानां मन्त्राणां च व्याख्यापद्धतिं, मन्त्राणां विषयान्, देवताश्च विचारयति। छन्दो न केवलं मन्त्राणामक्षरगणनां निर्दिशति, अपि तु छन्दसो रहस्यमयं सूक्ष्ममर्थमपि प्रतिपादयति, यस्मात्कारणात्र केवलमितरत्र, परमृग्वेदेऽपि देवतानां छन्दसां च परस्परमुत्पाद्योत्पादकत्वं निर्दिष्टमस्ति। यथा देवता मन्त्रस्य विषयं प्रकाशयति, तथैवर्षिनाम, छन्दोनाम चापि मन्त्रस्थं विषयं प्रकाशयतः। मन्त्राणां भाषाया एकाक्षरस्वरूपं वीक्ष्य ऋषिभिर्मन्त्राणामर्थज्ञानायैवैते विधयः प्रचालिताः।

६. यथोपनिषदो वेदस्याध्यात्मविद्यां विशदयन्ति तथैव स्मृतयो वेदकालीनमाचारपद्धतिं निरूप्य वेदस्य गृह्यं स्मार्तं वा विषयं व्याख्यान्ति। यतः स्मृतयः श्रुतिमूला अभीष्टाः सन्ति, तस्माच्छ्रुतिस्मृति-विरोधे तु श्रुतिरेव मान्या भवति। तत्र स्मृतिः प्रमाणपदवीं नारोहति। सांख्य-योग-न्याय-वैशेषिक-मीमांसावेदान्ताख्यानि षद् दर्शनान्यपि दर्शनसम्बन्धीनि-वैदिकमतानि गृहीत्वा सृष्टिं व्याख्याय स्व-स्वदृष्ट्या वैदिकं दर्शनं विस्तारयन्ति। अत्र नैकमपि दर्शनमेकाकि सामस्त्येन वैदिकं दर्शनं सम्पूर्णं प्रतिपादयति, तानि सर्वाणि मिलित्वैव वेददर्शनस्य स्वरूपं प्रस्तुवन्ति। यद्यपि बौद्धजैनचार्वाकदर्शनान्यपि वेदात् प्रसृतानि, तथापि वेदवैमुख्यमेव तैः प्राधान्येन स्वीकृतं, तस्माद् तान्यवैदिकानि नास्तिकानि-दर्शनानि,-वैदिक-सम्प्रदाये च त्याज्यानि मतानि सन्ति।

७. परमेतावता महता प्रयासेनापि वेदविषयावगाहनं सरलं न जातम्। कालपरिवर्तनेन पुराणानामुत्पत्ति-विकारप्रचाराश्चाभूवन्। वीर-काव्यान्यपि प्रतिष्ठामलभन्त। वैदेशिकैश्चापि भारतीयानां सम्पर्कः प्रति-दिनमवर्धत। वैदेशिकाचारविचारपद्धतेः प्रभावोऽप्यनिवार्योऽभूत्। अस्यां स्थितौ विक्रमयुगाद् वेदभाष्याणां परम्परा प्राचलत्। प्रथम माधवभट्टेन स्वकीय भाष्य प्रस्तुतम्। इद पूर्ण नोपलभ्यते। अत्र कण्वादिपदानाम् ऋषिविशेषैः सहाभिज्ञान सन्दिग्धावस्थामेवावगाहते, कालेन तत्पूर्णं निः-सन्दिग्ध च जातम्। स्कन्दस्वामी भौतिकानर्थान्, उद्गीथो याज्ञिकान्, वेङ्कटमाधव ऐतिहासिक-पौराणिकान्, आत्मानन्द-रावण-सूर्यपण्डित-मध्व-प्रभृतयोऽध्यात्मसम्बन्धिनोऽर्थान्, दयानन्दस्वामी लोकोपकारकान्, जीव-नोपयोगिनस्त्रिविधान् आधिभौतिकाधिदैविकाध्यात्मिकान् अर्थान्, मधु-सूदनः सृष्टिविज्ञानसम्बन्धिभावान्, अरविन्दघोषश्च प्रतीकात्मकव्याख्या-नानि प्रादुः। अन्येऽपि बहवो वेदव्याख्यातारोऽभवन्, सन्ति, भविष्यन्ति च। एते भाष्यकारा. स्वकीयभावनामनुसृत्यैव वेदव्याख्यानं कुर्वन्ति। सायणेन तत्पूर्वकालिकानां सर्वेषां भाष्यदृष्टीनां समन्वयोऽकारि, परं तत्र स प्राचीनतमवेदव्याख्यानपद्धत्या दूराद्, दूरतरमयात्। उपलब्धेषु विक्रम-युगीनभाष्येषु केवलं दयानन्दसरस्वत्येव प्राचीनतमां पद्धतिमवलम्बमानः प्रतिभाति।

८. वेदाध्ययने वेदभाषाव्याख्यानपद्धतिर्देवतापरिकल्पो विनियोग-श्चेति समस्याभूतान्यङ्गानि। भाष्यकारस्यैतेषां विषये यादृशा विचारा भवन्ति, तादृशमेव व्याख्यानं तत्कृतं भवति। सामान्येन मन्त्राणां पदान्य-र्थविशेषेषु रूढानि स्वीक्रियन्ते। पदस्यैकस्य सर्वत्र मन्त्रेष्वेक एवार्थो ग्रहीतु शक्यते। तद् यथा। इन्द्रवरुणमित्रप्रभृतिपदानि तत्तन्नामर्षीणां, गायत्री-त्रिष्टुबादीन्यक्षरपरिमाण सूचकानां छन्दोनाम्ना वाचकानि गृह्यन्ते। तथै-वामृत देवपेयं सुधां, गौर्धेनुनामानं पशु, पर्वतः शिलोच्चयं, घृत-दुग्धालल-ब्धं पदार्थम्, अहिः सर्पं, वह्निरग्नि द्योतयन्ति नान्यान् कांश्चिदर्थान्। परं निबन्धेऽस्मिन्नुपरि वैदिकभाषाया यादृशं स्वरूपं वर्णितमस्ति, निघण्ट्वा-दिग्रन्थेषु च यादृशा वैदिकपदानामर्था निर्दिष्टाः सन्ति, तत्सर्व वीक्ष्य वैदिकपदानां रूढार्थत्व स्वीकर्तु न पार्यते। मैक्समूलरमहोदयेनाप्येतदनु-भूतम्, उक्तं च तेन यद्वैदिकभाषायां पदेषु धात्वर्थाः सुरक्षितास्तिष्ठन्ति,

तन्नार्था रूढा न सन्तीति । एवं सति वेदमन्त्रस्थपदानां रूढार्थानां ग्रहणं न न्याय्यम् । अतो यास्कमनुसृत्य तेषां पदानां निर्वचनपद्धत्यैव व्याख्यानमुचितम् । यतः पदानामेकाक्षररूपेण सर्वत्र व्याख्यानं सरलं सुबोधं च न भवति, तस्माद् यास्कप्रभृतिभिरतरपूर्वतरैश्चाचार्यैर् वेदव्याख्यानस्य नैरुक्तपद्धतिर्विकसिता, धातूनां च कल्पना विहिता । निरुक्ते येषामैतिहासिकाख्यानसमयपरिव्राजकनैदान-याज्ञिकवैयाकरणप्रभृतीनां वेदार्थ-सम्प्रदायानां मतानि व्याख्यानानि चोद्धृतानि सन्ति, तैरेतत् प्रतिभाति यत्ते सर्वे सम्प्रदायाः पदानां नैरुक्तमर्थं गृह्णन्ति स्म, भेदस्तेषां भावस्य व्याख्याने जायते स्म । अत एव यास्क ऐतिहासिकानामितिहासान्, आख्यानवादिनामाख्यानानि च प्रदर्शयापि मन्त्रपदानां धातुजमाख्यातज वा व्याख्यानमेव प्रस्तौति । यद्येवमैकमत्यं नाभूत्, यास्क ऐतिहासिकादीनामितिहासाख्यानानि निराकरिष्यत्, स्वमतं च तथैवास्थापयिष्यद् यथा कौत्समतं निराकृत्य स्वमतं युक्तिभिः प्रतिपादितवान् । अतो वेदव्याख्याने नैरुक्तपद्धतिरेवावलम्बनीया ।

६. गुरुदत्तविद्यार्थिना साधूक्तमस्ति यद् वेदव्याख्याने देवताशब्दो महान्तं भ्रमं जनयति । सामान्येन पदमिदं विग्रहवतीं काञ्चिद् एतादृशीं शक्तिविशेषां द्योतयत्स्वीक्रियते, या मानवाय सुखदुःखादिदाने समर्था, प्रार्थनया द्रविता सती वाञ्छितान् कामान् वितरति, स्तुतियज्ञादिभिश्च प्रीता भवति । यास्कमतेन 'देवो दानाद्वा, दीपनाद्वा, द्योतनाद्वा, द्युस्थानो भवतीति वा' । पाणिनिमतेन देवो दिवु क्रीडा-विजिगीषा-व्यवहार-स्तुति-मोद-मद-स्वप्न-कान्तिगतिषु इति धातोर्घञि निष्पद्यते । यत्रैतेस्वर्थेस्वेकोऽप्यर्थो विद्यते, तत्र देवत्वमायाति । अतस्ते सर्वे पदार्था भावाः स्थितयो वा देवपदवाच्या भवन्ति यत्रैतेऽर्थाः समस्ता व्यस्ता वा स्युः । 'देवात् तल्' इति पाणिनीयसूत्रेण देवपदात् स्वार्थे तल् प्रत्ययो भवति, देवतापदं च निष्पद्यते । एवं देवतापदस्यापि ते सर्वेऽर्था भवन्ति, ये देवपदस्य सन्ति । ब्राह्मणग्रन्थैरपि देव-देवता-विष्णु-सोमाग्निप्रभृतिपदानां बहुविधान् अनेकानर्थान् प्रदाय मतमिदं पुष्टम् । संहितासु मन्त्राणां देवतासु वनस्पतिबर्हिरश्वोलूखलमुसलाग्नश्येनवर्मकृपि—प्रशंसाज्ञानोपधिभावावृत्तादय ऋचां, मेघवाजिच्छन्दऋतुकूपीवलप्रजाप्रभृतयो यजुषां, हरिमधमनिहिरण्यशालापशुरात्रिब्रह्मचारिप्राणापानादय आथर्वणमन्त्राणां देवताः परिगणिताः सन्ति । अतो यत्किमपि मन्त्रेषु वर्णितमस्ति, तत्सर्वं देवता-

पदेनाभिधीयते। अत एवाह कात्यायनः—'या तेनोच्यते सा देवता' इति। यास्केनापीदं सूत्रं गृहीत्वा 'यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति' इति देवतालक्षणं प्रादायि। शतपथकारः 'आपो हिष्ठा' इति मन्त्रत्रये प्रतिपादितं भावमेव ऋक्त्वेन यजुष्ट्वेन च व्याहरति। नैतावदेव। स 'मधु वाता ऋतायते' इति मधुशब्दयुक्तान् मन्त्रान् 'मधु'—इति ब्रवीति, यतोऽत्र मधोर्वर्णनमस्ति। एवं ब्राह्मणकारोऽपि मन्त्रे वर्णित विषयं, मन्त्र च 'देवतां' मन्यते। यास्कमतेन येषु मन्त्रेषु देवतालिङ्गं न दृश्यते, तत्र प्रकरणानुसारं व्याख्यानुसारं वा देवता भवति। एतादृशानां मन्त्राणां विषयो व्याख्यातुर्व्याख्यामनुसरति। एव मन्त्रेषु विग्रहवत्यो मातापिताचार्यप्रभृतयोऽपि देवताः सन्ति, भाववृत्तमन्युश्रद्धाप्रभृतयोऽविग्रहवत्योऽपि देवता विद्यन्ते। जड़पदार्थानां वृक्षादीनां मत्स्यादिजन्तूनाम्, अश्वादिपशूनां चापि देवत्वं संगच्छते।

१०. वैदिकदेवतावादे परमेश्वर एवैक उपास्यः प्रार्थनीयश्च देवः शक्तिर्वास्ति, किमप्यन्यद् उपास्यदेवत्वं न धारयति। अयं परमेश्वर एव नासदीयसूक्ते तदेकमितिपदेनोक्तः। सूक्तमिदमेव वैदिकदर्शनस्य मूलं वर्तते। सृष्टेः प्राक् त्रीणि तत्त्वान्यविद्य-ततदेकम्, आभु यत्, अप्रकेत सलिलं चेति। अद्यैतेषामभिधानानि क्रमेण ब्रह्म वा ईश्वरो वा, जीवः, प्रकृतिश्चेति सन्ति। तदेक सिसृक्षाऽऽयाति—'कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्' इति। अनेन कामेन प्रेरितस्तुच्छ्येन दुःखदाय्यन्धकारेणाच्छन्नो जीवस्तदानीमविद्यमानया भविष्यति काले च विद्यमानया सृष्ट्या बद्धोऽभूत्-'सतो बन्धुमसति निरविन्दन्' इति। प्रकृतौ रजोगुणजनिता गतिराविरभूत्, सा च सर्वत्र प्रसृता संजाता, क्रमेण चेयं दृश्यमाना सृष्टिर्जगद् वाजनि। अग्निः परमेश्वरो जीवानां सुखाय सृष्टिं निवासं विधाय जीवयज्ञं करोति—'त्वमग्ने प्रयतदक्षिणं नरं वर्मेव स्यूत परिपासि विश्वतः। स्वादुक्षद्मा यो वसतौ स्योनकृज् जीवयाज यजते सोपमा दिवः। इति। स एव जीवेभ्यः कर्मशक्तिज्ञानानां प्रकाशं प्रयच्छति। जीवः कर्मानुरूपं, सर्वान् भोगानाप्नोति—'सोमः परिक्रतुना पश्यते जाः इति। उत्तमकर्मभिर्जीवो मोक्षमाप्नोति।

११. मन्त्राणां वर्णनेन प्रतीयते यद् ईश्वरममन्यमाना, आर्येभ्यः श्रेष्ठजनेभ्यो वा इतरे अध्यात्मिकज्ञानशून्या, धर्मरहिता, भौतिकवादिनो,

यज्ञाद्विमुखाः, स्वेष्टसाधकाः, परमस्वार्थिनः, प्रजासुपजापपरायणाः, कपटिनः, परेषां हिंसाना घ्वसिनश्चासुरा दस्यवो वा भवन्ति । एतादृशा जनाः सर्वकालेषु भवन्ति । सामान्यजना एतेभ्यस्त्रस्ता भवन्ति । दर्शनदृष्ट्यैते खल्वन्धकारावृतलोकान् गच्छन्ति, राजनीतिकदृष्ट्या, ते उत्खातव्या उच्छेद्या वा भवन्ति ।

१२. जीवो नित्यः, शरीरञ्च नश्वरम् । जीवस्य लक्ष्य मोक्षप्राप्तिः । अतो यावन्मोक्षप्राप्तिर्न भवेत्, तावच्छरीरधारणमनिवार्यम् । अनेन एकस्य शरीरस्य नाशे समुत्पन्ने द्वितीयस्य शरीरस्यावाप्तिरनिवार्यत्वात् पुनर्जन्मापि वैदिकमतेन सिद्ध्यति । ऋग्वेदे जीव व्रात जाप्तु स्तोता पुनः पुनर्मनसः प्राप्ति प्रार्थयते—'आ त एतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक् च सूर्यं दृशे' ।। इति, 'पुनर्नः पितरो मनो ददातु दैव्यो जनः । जीवं व्रात सचेमहि ।। इति । मुक्तिरपि सावधिका, न निरवधिका तस्मान्मोक्षकालसमाप्तावपि पुनर्जन्म भवति । मृत्योरनन्तरं जीवो मर्त्यमार्गेण वा पितृमार्गेण वा देवमार्गेण वा यथाकर्म स्वकीयमितर जन्म लभते— 'द्वे सृती अशृणव पितॄणामहं देवानामुत मर्त्यानाम् । ताभ्यामिदं विश्वमेजत् समेति यदन्तरा पितर मातर च ।।' इति । ते वै लोका अनेके विविधाश्च सन्ति, यथानन्दलोकः, वैवस्वतो. ज्योतिर्लोकः, स्वधालोको, ब्रध्नस्यविष्टपम् मोदमुद्प्रमोदलोकाश्च, यान् जीवो मृत्योरनन्तरं प्राप्नोति ।' कर्मणां फलं शुभमशुभ वा जन्म पापपुण्ये आश्रयते । पापं, पाप्मा, एनः, अंहश्च पर्यायाः सन्ति । एतैर्ज्ञायते यत्सर्व तत्कर्म पापं भवति, यस्माज्जन आत्मानं रक्षेत्, दूरंवा व्रजेत्, तिष्ठेद् वा, यत्कर्म च कर्तारं पिबति नाशयति च, येन च दुःखं प्राप्यते वा दीयते वान्येभ्यः, यत्र च कुगतिः, कुप्रेरणा, श्लेषणं, क्रोधादिकं च प्राधान्यं भजन्ते । पूर्णरूपेण वर्णितमेनः कनीयो जायते-सत्ये परिणमति । सत्यं न पापम् । यावज्जीवं मानवः पापकर्मभ्यो जुगुप्सेत, पापनाशकानि पौर्णमासादिकर्माणि च विदध्यात् ।

१३. प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते । तर्हि परमेश्वर ऋषयश्च किमर्थं मन्त्रेषु प्रयोजनं न पश्येयुः । प्रयोजनं पश्यद्भिर्ऋषिभिराचार्यैर्विद्वद्भिरन्यैर्वा मन्त्राणां विविधेषु कर्मसु विनियोगः प्रत्यपादि । पूर्व तु मन्त्रार्थमनुसृत्यैव यज्ञीयक्रियासु तत्पोषका मन्त्रा विनियुक्ता अभूवन् । एतादृशा विनियोगा ऐतरेयब्राह्मणकारेण रूपसमृद्धाः शतपथकारेण च बन्धव

आम्नाताः। अस्मिन् काले सर्वेषां मन्त्राणां विनियोगो न निर्धारितस्तदनुरूपक्रियायास्तत्राविद्यमानत्वात्। परं गच्छति काले 'यज्ञाय वेदाः प्रवृत्ता' इति मतमुद्घाव्य, यज्ञस्य च हविषामग्नौ प्रक्षेपमेवार्थं स्वीकृत्य क्रियाणां विस्तारं च विधायान्येषामपि मन्त्राणां क्रियारूपमर्थं कृत्वा विनियोगोऽकारि। तद् यथा—आथर्वणी श्रुतिः 'सहृदयं साम्मनस्यमविद्वेषं कृणोमि वः' आपतत एव भाविक वैमल्यं प्रतिपादयति, परन्तु कौशिकसूत्रेऽस्या विनियोगस्त्रिवर्षीयाया वत्सतर्याः पिशितस्याशने विहितः। अस्य विनियोगस्य विधाने मन्त्रस्थम् 'अविद्वेषं' पदम् 'अविद्वेषम्' इति स्थाने 'अवि-द्वेषम् इति पठित्वा गत्यर्थकाद् 'अव'–धातो- 'अवि' व्याख्याय 'गम्लृ'-धातोर्निष्पन्नस्य गोशब्दस्य पर्यायवाचि मत्वा अविद्वेषस्य 'गोभक्षणम्' अर्थो गृहीतः। सायणेन पुनः 'साम्मनस्यं'–स्थाने 'साम्मनुष्यमि' त्यपाठि। तथैव 'शन्नो देवी' रित्यस्य शनैश्चरपूजायाम्, 'उद्बुध्यस्वाग्ने' इत्यस्य बुधपूजायां, 'दधिक्राव्णो' मन्त्रस्य दधिभक्षणे विनियोगाः प्राचलन्। एवंविधा असंख्या विनियोगाः कर्मकाण्डे उपलभ्यन्ते। विनियोगस्य चरमावस्थायामर्थस्याप्युपेक्षा विहिता। प्रत्येकं कर्म मन्त्रपूर्वकं स्यात्। तत्र क्रियार्थयोः सामञ्जस्यं भवेद्वा न वेति प्रतिपाद्य दीपदर्शननैवेद्यदानादि कर्मसु यथा पुरुषसूक्तस्थमन्त्राणां विनियोगो दर्शितस्तथैवान्येषां बहूनां मन्त्राणामपि विहितः। स्यादत्रापि काचित् प्रक्रियामनुसृत्य पुरुषसूक्तस्थ-मन्त्राणां दीपनैवेद्यदानादिकर्मप्रतिपादका अर्था लभ्येरन्, परमद्य तेऽर्थाः केनापि न प्रस्तुता न च प्रकल्पिताः सन्ति।

१४. वेदेषु यज्ञोऽपि प्रमुखो विषयः। यज्ञो यज देवपूजासंगतिकरणदानेष्विति धातोरायाति। अत्रापि दान-देवपूज्योः संगतिकरण-मूलकत्वाद् यस्मिन् यस्मिन् कर्मणि लोकोपकाराय जीवहिताय वा संगतिकरणं विद्येत, तत्सर्वं कर्मजातं यज्ञपदवाच्यं भवति, यतः सृष्टेरुद्देश्यं जीवेभ्यो मोक्षप्राप्त्यवसरप्रदानमस्ति, नो चेत्, सृष्टौ परमेश्वरस्यायासो वैयर्थ्यं भजेत। तथा सति यान्यसंगतिकरण-विशिष्टानि लोकहितघातकानि वा कर्माणि स्युस्तानि यज्ञपदवाच्यानि न सन्ति।

१५. लोकोपकारकस्य यज्ञस्य, तद्भेदानाम् अग्निहोत्रादारभ्याश्वमेधपर्यन्तानां च मन्त्रेषु, सविशेष यजुष्षु सामसु च विधान दरीदृश्यते। अयं कर्मकाण्डाख्यो विषयः सर्व एव क्रियामयोऽस्ति। दयानन्दसरस्वती-

मतेन 'नैतेन विना विद्याभ्यासज्ञाने अपि पूर्णे भवतः।' अयं यज्ञोऽनेकविधोऽस्ति, परं तत्र द्वौ भेदौ मुख्यौ स्तः। एको मोक्षसाधक ईश्वरस्तुति-प्रार्थनोपासनाज्ञापालनधर्मानुष्ठानज्ञानरूपः, अपरश्च धर्मेणार्थकामसाधको लोकव्यवहारसिद्धये भवति। परमेश्वरप्राप्तिमुद्दिश्य कृतो यज्ञः निष्कामो भवति, लौकिकसुखप्राप्तिं लक्ष्यीकृत्य कृतो यज्ञः सकामो भवति। यज्ञविद्याशिल्पादिविविधां विद्यां जनयति। संक्षेपेण यत्किमपि जीवस्य सुखस्य श्रेयसश्च साधकं स्यात्, तत्सर्वं यज्ञ एव। सामवेदे सोमयागस्य विशेषेण विस्तारो विहितः, यजुर्वेदे सर्वेषामितरेषां यज्ञानां विस्तरो लभ्यते। ऋग्वेदेऽपि खल्वश्वमेधादिकर्मणां वर्णनं दृश्यते। अथर्ववेदे शालानिर्माणरोगनिवारणसृष्टिरचनादिकर्मणां वर्णनमुपलभ्यते। सामान्येन संहितासु विनियुक्तानां मन्त्राणां सङ्ग्रह एव लक्ष्यते, तत्सम्बद्धकर्मणा विस्तरस्तु शाखासु, ब्राह्मणेषु, सूत्रेषु च क्रमेण वर्धमानं प्राप्यते। एतेषां मन्त्राणामर्थैरेव तत्सम्बन्धियज्ञानामभिप्रायो ज्ञायते। तद्यथाश्वमेधे नियुक्तैः विनियुक्तैः 'तत्सवितुर् वरेण्यम्' इति, 'हिरण्यपाणिमूतये' इति प्रभृतिमन्त्रैरीश्वरस्तुतिः, 'आ ब्रह्मन् ब्राह्मणो' इति मन्त्रेण राष्ट्रोन्नतिः, हिरण्यगर्भः समवर्ततताग्रे' इति, 'यः प्राणतो निमिषतो' इति प्रभृतिमन्त्रैरादिचेतनमहाशक्तेर्वर्णनम्, 'सूर्य एकाकी चरति' प्रभृतिमन्त्रैर्जगत्स्थस्थितिवर्णनं, भद्रं कर्णेभिः शृणुयाम' प्रभृतिभिर्लोककल्याण-भावनाः सुखकामनाश्च प्रकाश्यन्ते। एवमन्येषां सौत्रामणी-सर्वमेधदर्शपौर्णमासाग्निचयनादियागानामभिप्राया बोद्धुं सुकराः। वस्तुतो यज्ञः समस्तजगति देवकर्मभिरायतः। सर्व एवैनं विदधति—'यो यज्ञो विश्वतस्तन्तुभिस्तत एकशतं देवकर्मभिरायतः। इमे वयन्ति पितरो य आययुः प्र वयाप वयेत्यासते तते॥ पुमाँ एनं तनुत उत् कृणत्ति पुमान् वि तत्ने अधि नाके अस्मिन्।' इति। स पुमान् यज्ञे यादृशीमाहुतिं प्रक्षिपति तादृशमेव फलं लभते। तथाच—'यत्कामास्ते जुहुमस्तन्नो अस्तु' इति, 'कृतं मे दक्षिणे हस्ते जयो मे सव्य आहित' इति च वेदवचसी अपि भवतः। एतस्मादेव स प्रार्थयति यन्मे सर्वमेव—'यज्ञो यज्ञेन कल्पताम्' इति। यज्ञ एव ऋतमित्यभिधीयते। ऋतस्योल्लङ्घयितारं वरुणः स्वकीयैस्त्रिभिरुत्तममध्यमाधमपाशैर्बध्नाति, दण्डयति च। तस्य क्रोधोऽसह्यः। अज्ञानजनितं पापमपि दुःखमावहति। ऋतद्योतका वेदेषुपलभ्यमाना दानस्तुतयोऽपि दानरूपं यज्ञं प्रशंसन्ति। दानेन जनो वृद्धिमाप्नोति। प्रकृतिः सर्वत्र दानशीला। सा जडा सत्यप्येवंविधा, तर्हि चैतन्यविशिष्टो मानवः किमर्थं दानशीलो न वर्तेत।

१६. एवं स्वरूपो वेदो न प्राकृता सभ्यजनानां वाक्, न प्रमत्तानां प्रलापो, न भारोपीयनामकल्पितजातेरादिमम् अविकसितं बाल्यवचो वत् साहित्यं, नाग्निवरुणेन्द्रमरुत्सवितृप्रभृतीनां शक्तिविशेषरूपेण कल्पितानां देवतानां स्तुतिवचांसि, नार्यानार्य–युद्धनिदर्शकावाचो, नाप्रयोज्यकर्मकाण्ड-विधायका, न हिंसाप्रतिपादका, नाश्लीलाश्च सन्ति, परं ते भारतीयानामार्याणां जीवनाङ्गभूता, ब्रह्मणोऽङ्गानि, सर्वेषां कल्याणकारिणः, पुरातना विद्वांस आदित्याः, सर्वकर्मणां स्रोतांसि, द्विजानां पावमाना, आयुः प्राण-प्रजापशुकीर्तिधर्मब्रह्मवर्चसां दातारो, विश्वरूपा, अमृतैः प्रोक्ता, वहिष्मते च शर्मप्रदा, देवानां स्थाने परमे व्योम्नि अक्षरे स्कम्भे वर्तमाना, बृहस्पतिप्रेरिताः, सर्वेषां वस्तूनां नामानि दधाना, निहितभद्रलक्ष्मीकाश्च सन्ति। एतेषां महिमा सुविशालो वाचामगोचरश्च। वेदादेव परमेश्वरस्य बोधो भवति। परमेश्वरं साक्षात्कृत्वैव वेदस्य सामस्त्येन ज्ञानं जायते। केचन सुभगा विद्वांस एव वेदतत्त्वं ज्ञातुं समर्था भवन्ति, न सर्व एव जनाः। ऋक्सामयजूंषि जनं शुभसङ्कल्पं विदधति। ऋग्भिः पृथिवीलोको, यजुर्भिरन्तरिक्षलोकः, सामभिश्च ब्रह्मलोकः प्राप्यन्ते। वेदाध्ययनेन जनः पूतो भवति। वेदनिन्दको नास्तिको भवति। धर्म जिज्ञासमानानां श्रुतिरेव परमं प्रमाणम्। एतादृशानां वेदानामध्ययनं सर्वेषां जनानां पवित्रमनिवार्यं च कर्तव्यं परमं तपश्चास्ति। वेदज्ञः स्वकीयान् कर्मजान् दोषान् भस्मसात्करोति। अतः सर्वकर्माणि विहायादौ प्रातरेव सर्वे वेदं पठेयुस्तत्स्वाध्यायं कृत्वैव लोकव्यवहारेषु व्यापृताः स्युरित्यों शम्॥

---

# मनोविश्लेषणात्मकं समालोचनम्

—डॉ० पुष्करदत्त शर्मा

काव्यस्य सम्यग् निरूपणमेव समालोचनम् । एतदन्तर्गतं रसालङ्कारगुणादीनां स्वरूपमेव प्रामुख्येन निरूप्यते । भरतमुने "विभावानुभावसंचारिसंयोगाद्रसनिष्पत्ति" रित्याख्येन प्रसिद्धेन रससिद्धान्तेन काव्यालोचनस्य या परिपाटी प्रचलिता, सा खल्वद्यापि साहित्यशास्त्राध्येतृभिर्मर्मज्ञैश्चानुसर्यते । अद्य यावत् साहित्यशास्त्रे रसचर्वणाऽलंकारसौन्दर्यादिप्रतिपादकाः साहित्यशास्त्रपारावारीणास्तु बहव आचार्या उदपद्यन्त, परं सुदीर्घेऽस्मिन् काले न केनाप्याचार्येण रचयितृमनस्यभिव्यक्ता साऽनुभूतिः संवीक्षिता, या खल्वान्तरिकाभिव्यक्त्यनन्तरं बाह्याऽभिव्यक्तयेऽपि भृशं प्रयतते । कीदृशी साऽनुभूतिर्या खलु रचयितृकृते काममपि बाध्यतामिव जनयति ।

एवमेव काव्यप्रकाशादिषु समालोचनग्रन्थेषु काव्यान्तर्गतपद्यान्येव सर्वत्र निरूपितानि । परं नाटकानां दशकुमारप्रभृतिगद्यकाव्यानां च गद्यभागं प्रति न कोऽप्याचार्यः स्वल्पामपि रुचिं दर्शयामास । किं तावदेषः गद्यभागः सर्वथैव सौन्दर्यहीनः ? किं गद्यवाक्यानि नायकनायिकादीनां मनःसौन्दर्यं समुद्घाटयितुं न क्षमन्ते ? किमर्थं तावदेतद् गद्यं भृशं समुपेक्ष्यते ।

एतदेवालक्ष्य साम्प्रतिकं समालोचनाशास्त्रं रचनाप्रक्रियातः प्रारभ्य पाठकमनः प्रतिक्रियां यावत् सर्वानेव विषयान् सम्यगधिजिगमिषति । आधुनिकाः समालोचका न विस्मरन्त्येतत् तथ्यं यद् रचनाप्रक्रियायां काव्यरसास्वादने च रचयितुः पाठकस्य वा मनो महत्तां धत्ते । मनसो विश्लेषणं विना कृतिसौन्दर्यं पाठकीया प्रतिक्रिया च सम्यक्तया नैवाऽऽभाल्यते । अतः खलु काव्यशास्त्रे मनोविश्लेषणस्योपादेयता निश्चप्रचं सिद्ध्यति ।

किं खलु तावन्मनः ? भारतीयैर्दार्शनिकैस्त्वेतदिन्द्रियरूपेणैव स्वीकृतम् । परं पाश्चात्यविचारकैर्मनसो या व्याख्या कृता, तदनुसारमेतन्मनः

कमप्युच्चमभिप्रायं व्यनक्ति। प्राचीनकाले मनोवैज्ञानिकैर्यदा चेतनाया विश्लेषण कृत, तदा तु चेतनायां मृतदेहतुल्यशीतलानि संस्कारप्रतिमा-प्रत्ययादीन्येव समुपलब्धानि। सर्वाण्येवैतानि प्रकृतिसजनितानि सन्ति। सत्यमेव सवेदनाबाहुल्येन सार्थकस्य कस्यापि दृश्यस्य निर्मितिः सजायते, किन्तु पृथक्तः तासा सवेदनानां विश्लेषणेन न कापि सार्थकता तत्र सम्प्राप्यते। वस्तुतः चेतनाया सवेदनामात्रं न विद्यते। तत्र तु मनोऽपि सस्थितम्।

एव खलु चेतनातत्त्वमुभयोः संश्लेषणमिव स्वीकरणीयम्। परं विश्वचेतनायां तु ससीम्नोऽसीम्नश्चैकीकरणमेव संजायते। विश्वकल्पना च तदीयं कारणम्। यथैव ब्रह्म प्रकृतौ विपयीकृतं भवति, तथैव सृष्टिरुत्पद्यते। ब्रह्मणः प्रकृतेश्च संयोगः कल्पनामेवाश्रयते। इत्थं 'जगदेतद् ब्रह्मणः कला' इति कथयितुं शक्यते। एवमेव मानवीया कल्पनाऽपि प्रकृतेस्तत् क्षेत्रं यत्र खलु मनसो व्यापारः प्रवर्तते, मानवमनसोऽग्रे समानयति। तदा च ब्रह्मणः प्रकृतौ विपयीकरणमिव मनुजोऽपि विपयीक्रियते। कारणं त्वेतदेव यत् प्रकृतिर्मनश्च पूर्वतः समस्वरतां भजेते। यथा च जगदेतद् ब्राह्मण आत्मज्ञानं, तथैव मानवीय जगदपि मनुजस्यात्मज्ञानमिति मन्तव्यम्। आत्मज्ञानस्यैतस्य कारणं तु कल्पनातत्त्वेऽन्वेपणीयम्।

केचन तत्त्ववेत्तारः कल्पनामेनां नियन्त्रितं मन इति स्वीकुर्वन्ति। तदनु मनः खलु वस्तुतः संकल्पात्मकं भवति। कलामयी प्रवृत्तिस्तु संकल्पविपय प्रति गमनाय मन रुणद्धि। परं मनोवेगं त्वेषां समग्रे चेतनाक्षेत्रे परिवेशस्थले च प्रसारयति। मनोवेगस्त्वनया क्रियया शैथिल्यमवाप्नोति, परं तस्य विस्तारोऽवश्यमेव संजायते। अतः खलु सा प्रवृत्तिर्मनोनियन्त्रणेऽक्षमा सती स्वयमेव मनसा नियन्त्र्यते।

यदैतन्मनः प्रज्ञाऽन्तर्वेगयोर्विभज्यते, तदा जीवनस्य सर्वाङ्गबोधो न समुद्भवति। कविकृते विभाजनमेतत् सर्वथैव त्याज्यम्। एतस्य द्वन्द्वस्य विलोपेनैव कृतिकारोऽनात्मज्ञता संप्राप्नोति। तदैव समुत्कृष्टायाः कलायाः सर्जनं संभावनीयम्। टी. एस. एलियटनाम्ना समालोचकेनापि प्रतिपादितं यत् सततं स्वोत्सर्गेणैव रचयिता प्रगतिमातनोति।

परं भारतीयमतानुसारं तु कवित्वं जन्मसिद्धं भवति । तदनु प्रकृतिस्त्वेतादृग्जनं जनयति; यः खलु निसर्गत आह्लादमयो भवति । आह्लादस्योद्रेके च सः स्वहृदि काव्यालोकमिवाऽनुभवति । परं यदा कदा दिव्यशक्त्याऽपि कवित्वसम्पादनं विधीयते । पाश्चात्यमालोचनाजगदपि दिव्यशक्तिं स्वीकरोति । परं साम्प्रतमेकमत्यमेतच्छिन्नमिवाऽऽभाति ।

लेखकीयाऽभिव्यक्तिविषये समालोचका नैकमताः । केचन त्वेनां जीवनतत्त्वानां सर्वोच्चतारूपेण प्रतिष्ठापयन्ति । परमपरे विद्वांसस्त्वेनां जीवनस्यालोचमामात्रमिति प्रतिपादयितुं यतन्ते । सुप्रसिद्धो मनोवैज्ञानिकः फ्रायडमहोदयः कथयति यदेषा खलु दमितवासनानामभिव्यक्तये समाज-सम्मतं साधनमस्ति । मनोविश्लेषणदृष्ट्या मानवप्रकृतिः प्रवृत्तिद्वयेन नियन्त्र्यते । स्वलिङ्गरक्षेति प्रथमा प्रवृत्तिः, विनाशात्मको वेगश्च द्वितीया । उभयो संघर्षणेन चिन्ता समुत्पद्यते । शैशवे वृत्तीनां यो निरोधोऽभ्यस्यते सः खलु पश्चात् व्यक्तुं पार्यते । अतः खलु मानवस्तदीयं समाजसम्मतं समाधानमन्वेषयति । संतप्तो जनश्च कलामाश्रित्य भयवेगात् त्राणमुपलभते । सत्यमेवानया पद्धत्या विषयान्तरणं किंवाऽन्तर्वेगस्योदात्ती-करणं संजायते । अतः खलु स्पष्टमेतद् यदन्तर्दृष्टयः स्वकीयेन वैशिष्ट्येना-स्मान् सर्वथैवाभिभवन्ति । परमेतास्तु नाऽचेतनेन मनसा समुत्पाद्यन्ते । प्रत्युत सर्वाङ्गीणेन चेतनेन किं वा चेतनाऽचेतनयोर्मिश्रणेनैव तासां जनिः समुद्भावनीया ।

साम्प्रतं संस्कृतसाहित्यमधिकृत्य लेखकीयं मनोऽन्वेषणीयम् । सर्व-प्रथमं तु श्लोकत्वमुपागतो वाल्मीकेर्विषाद एव द्रष्टव्य :—

"मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ।।"

अत्र विषादातिरिक्तमपि किञ्चिद् दृष्टिमावर्जयति । आदिकविना केवलं निरपराधस्य वधोऽत्र गर्हित इति न चिन्तनीयम् । वस्तुत एतादृशो-ऽपराधस्यावृत्तिर्न भूयादिति कृते समुचितं दण्डविधानमपि तेन समादि-ष्टम् । अनेन तस्य नैतिकाऽहं (Super-ego) समभिव्यज्यते । निरपराधस्य कस्यापि प्राणिनो वधो न कदापि करणीयः, इत्येषा तदीया नैतिकता सक्रियेवात्र प्रतीयते ।

एवमेव महाकविः कालिदासोऽपि रघुवंशमहाकाव्यस्य प्रारम्भे स्वकीयामाशङ्कामातनोति, यथा—

"क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥
मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम् ।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः ॥
अथवा कृतवाग्द्वारे वंशेऽस्मिन् पूर्वसूरिभिः ।
मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः ॥"

श्लोकत्रयेऽस्मिन् महाकवेर्विनम्रता सुप्रथिता, परमेषा कृतिः साफल्यमवाप्स्यति न वेत्याशङ्काऽपि न प्रच्छन्ना । अन्यच्च छिद्रान्वेषणतत्पराणामालोचकप्रवराणां संप्रीणनाय प्रयत्नोऽपि संदृश्यते । एतत्तु स्पष्टं यत् कार्यमात्रस्य प्रारम्भ एतादृश्याशङ्का निखिलैः प्राणिभिर्विशेषतश्च लेखकैर्वक्तृभिश्चानुभूयते । आलोचकानां संप्रीणनमपि सर्वथैवावश्यकम् । कृतौ दोषाः स्युर्न वा, किन्तु तत्संभावनयैव कापि क्षमायाचना तु पूर्वत एव करणीया । अत एव महाकविना कालिदासेन कुमारसम्भवस्य प्रारम्भेऽपि तत्कृते क्षमायाचनमेव संविधीयते, यथा—

"एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोः किरणेष्विवाङ्कः ॥"

करुणरसावतारो भवभूतिस्तु कटुसमालोचनां समवाप्य किंवालक्ष्य भृशं दूयते । सः स्पष्टतया कथयति यत् तदीया कृतिः छिद्रान्वेषणप्रवृत्तानां कृते नास्ति । अत एव सः सहानुभूतिप्रवणान् समालोचकानेव प्रतीक्षते, यथा—

"ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्तु ते किमपि तान् प्रति नैष यत्नः ॥
उत्पत्स्यते तु मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥"

छिद्रान्वेषकाणां संप्रीणनं कियद् दुष्करमिति कृते नीतिशतके समुदीरितं भर्तृहरेः कथनं द्रष्टव्यं, यथा—

"ज्ञानलवदुर्विदग्धं ब्रह्मापि तं नरं न रञ्जयति ।"

महान् गद्यलेखको बाणभट्टस्तु स्पष्टमेवाऽकारणादाविष्कृत-वैरदारुणादसज्जनाद् बिभेति, यथा—

"अकारणादाविष्कृतवैरदारुणा—
दसज्जनात् कस्य भयं न जायते ।
विषं महाहेरिव यस्य दुर्वचः
सुदुःसहं सन्निहितं सदा मुखे ॥
कटु क्वणन्तो मलदायकाः खला—
स्तुदन्त्यलं बन्धनशृङ्खला इव ॥"

एभिरन्यैश्चोदाहरणैः स्पष्टमेतद् यन्महान्तो लेखकाः कवयश्च स्वकीयाऽनुभूत्यभिव्यक्तये न समग्रतः स्वतन्त्राः । भाव्यालोचनामाशङ्क्य न कोऽपि लेखकः स्वानुभूतिमुन्मुक्तरूपेण व्यनक्ति । अतस्ते निश्चप्रचं दमितमानसा इव प्रतीयन्ते । दुष्प्रभावश्च दमनस्य नोपेक्षणीयः । तदीयेषु कृतिषु यत्र तत्र दमितानुभूतीनामभिव्यक्तिस्तु जायत एव । लेखकश्च तत्कृतेऽनभिज्ञतामाधत्ते । वस्तुतो वर्णनविशेषेण लेखकीया मनःस्थितिरेवोद्घाट्यते तत्र च दमनस्य स्वरूपमन्वेषणीयम् ।

साम्प्रतमत्र कतिपयान्युदाहरणानि प्रस्तुतीक्रियन्ते, यैः खलु लेखकस्य मनः स्थितिर्ज्ञातुं शक्यते । सर्वप्रथमं तु नीतिशतके रतिविषयकस्य (Instinct of Sex) दमनस्य स्वरूपं दृश्यताम्, यथा—

"यां चिन्तयामि सततं मयि सा विरक्ता
साप्यन्यमिच्छति जनं स जनोऽन्यसक्तः ।
अस्मत्कृते च परितुष्यति काचिदन्या
धिक् तां च तं च मदनं च इमां च मां च ॥"

अमरत्वप्रदायकस्य फलस्य समर्पण-प्रतिसमर्पणक्रममालक्ष्य भर्तृहरिणा राजपदं विहाय संन्यासाश्रमोऽङ्गीकृत इति कथा तु सुप्रथिता । तस्यैव राज्ञो भर्तृहरेः कामविषयकं धिग्वचनमस्मिन् पद्ये चित्रितम् । रतिस्तु तेन सर्वथैव परित्यक्तेति तथ्यं च संन्यासाश्रमे प्रवेशेन परिपुष्यते ।

काव्यचौर्य (plagiarism) प्राचीनकालेऽपि विद्यते स्म। तन्निरोद्धुं च लेखका अक्षमा इव आसन्। लेखकीयमेतादृशमवशत्वं महाकविना बिल्हणेन विक्रमाङ्कदेवचरितेऽभिव्यक्तं, यथा—

"गृह्णन्तु सर्वे यदि वा यथेष्टं
नास्ति क्षतिः कापि कवीश्वराणाम्।
रत्नेषु लुप्तेषु बहुष्वमर्त्यै-
रद्यापि रत्नाकर एव सिन्धुः॥"

वस्तुतश्चेन्न कापि क्षतिर्भवेत्, तदा त्वेतादृक् क्षोभोऽनावश्यक एव स्थास्यति। चौर्येणाऽन्येन वा लोपप्रकारेण महान्तो भाण्डारा अपि रिक्ताः संजायन्ते इति तु कथनमेव नाऽपेक्षते। एतदालक्ष्यैवाधुनिके काव्ये काव्यचौर्यमपराध इति समुद्घोष्यते। तन्निरोद्धुं चाऽन्ताराष्ट्रियस्तरे केचन नियमा अपि विद्यन्ते। अतः खलु महाकवेर्बिल्हणस्य कथने किमप्यवशत्वमेवालक्षणीयम्।

एष महाकवेर्दृप्तता (Pride) मपि प्रदर्शयति। कवयस्तु केवलं शारदादेश एव जनिं लभन्ते, इति कथनं तु दर्पभावनामेवाभिव्यनक्ति, यथा—

"सहोदराः कुंकुमकेसराणां
भवन्ति नूनं कविताविलासाः।
न शारदादेशमपास्य दृष्ट-
स्तेषां यदन्यत्र मया प्ररोहः॥"

सत्यमेव शारदादेशे महान्तः कवयः संजाताः। परं तद्देशीयेन बिल्हणेन स्वयं तत्प्रशस्तिस्तु नैव करणीया। अतः खल्वेतस्मिन् पद्ये तदीयो मिथ्यादर्पः (Vanity) मुखरतामेति।

श्रीहर्षेऽपि काचिद् दर्पभावना (Pride) संदृश्यते। यदा सः कान्यकुब्जेश्वरात् ताम्बूलासनादेः संप्राप्तिं वर्णयति, तदा स्पष्टमेवाभाति यदेतादृशी संप्राप्तिरत्यन्तमेव दुःशक्या। प्राप्तिकर्त्ता च महाकविर्महापण्डितो वा विद्यते, इति कारणविशेषोऽप्यत्र संकेतितः यथा—

"ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरात्।"

सत्यमेव श्रीहर्षः कवीश्वरो विविधशास्त्रपारङ्गतश्चासीत्, परं स आत्मविकत्थनेऽपि रुचिं प्रदर्शयति। तार्किकमुदयनाचार्यमालक्ष्य कथितेनैतेन पद्येन तथ्यस्यैतस्य पुष्टिः संजायते, यथा —

"साहित्ये सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले
तर्के वा मयि संविधातरि समं लीलायते भारती।
शय्या वास्तु मृदूत्तरच्छदवती दर्भाङ्कुरैरास्तृता
भूमिर्वा हृदयंगमो यदि पतिस्तुल्या रतिर्योषिताम् ।।"

अनेन स्पष्टमेव प्रतीयते यत् सः तार्किकाचार्येणोदयनाचार्येण सह शास्त्रार्थाय सन्नद्ध आसीत्। अत्र न केवलं दर्पभावना (Vanity) अपि तु काचिद् हीनभावनाऽपि साक्षात्कर्तुं शक्यते। न खलु सः तर्कशास्त्रे कस्माच्चिदपि हीनः, एवैव स प्रकटयितुं चिकीर्षति।

साम्प्रतिके काले केषाञ्चिल्लेखकानां कृतिषु संप्रेषणीयतातत्त्वस्याभावो भवति। परं तादृशा लेखकाः स्वकीयां त्रुटिमस्वीकुर्वन्तः समुद्घोषयन्ति यत् पाठकैरेव स्वकीयं निम्नं स्तरं विहाय लेखकीय उच्चतरः स्तरः समवाप्तव्यः, येन खलु संप्रेषणीयताऽभावो दूरीभविष्यति।

भट्टिकाव्यनाम्ना प्रथितस्य रावणवधमहाकाव्यस्य प्रणेता महाकविर्भट्टिरपि स्वकृतिं शब्दशास्त्रज्ञैरेव पठनीयामालोचनीयां च मनुते। तदनुसारमन्येषां कृते त्वेषा रचना दृष्टिहीनानां हस्ते दर्पण इव स्थास्यति, यथा—

"दीपतुल्यः प्रबन्धोऽयं शब्दलक्षणचक्षुषाम्।
हस्तादर्श इवान्धानां भवेद् व्याकरणादृते।।"

एतत्तथ्यं तु सुविदितं यदेषा कृतिर्व्याकरणशिक्षणाय तु नैव लिखिता। अस्मिन् काव्ये बहूनि शब्दधातुरूपाणि प्रयुक्तानि, परं तत्खलु सर्वं साहित्याध्येतॄणां कृते दुर्बोधं न प्रतीयते, यथा—

बलिर्बबन्धे जलधिर्ममन्थे, जह्रेऽमृतं दैत्यकुलं विजिग्ये।
कल्पान्तदुःस्था वसुधा तथोहे येनैव भारोऽतिगुरुर्न तस्यौ ।।"

अत्र कर्मवाच्यार्थं परोक्षभूतात्मकस्य लिट्लकारस्यात्मनेपदी प्रयोगा लेखकीयं पाण्डित्यं तु प्रदर्शयन्ति, परं न खलु ते सर्वथैव दुर्बोधाः। अन्यच्चैतादृग्भिः प्रयोगैर्न कापि रसचर्वणा जायते, इति तु स्पष्टम्। वस्तुत एष महाकविर्न केवल वैयाकरण आसीत्, अपि तु,सः सरसकाव्यस्य रचनाया परमां प्रौढिं दधौ। तदीया प्रसिद्धिरपि सरसपद्यावल्यैवाऽजायत, यथा—

"न तज्जलं यन्न सुचारुपङ्कजं, न पङ्कजं तद्यदलीनषट्पदम्।
न षट्पदोऽसौ न जुगुञ्ज यः कलं, न गुञ्जितं तन्न जहार यन्मनः॥"

अथ च—

"प्रभातवाताहतिकम्पिताकृतिः कुमुद्वतीरेणुपिशङ्गविग्रहम्।
निकास भृङ्गं कुपितेव पद्मिनी न मानिनि ससहतेऽन्यसंगम्॥"

अनेन स्पष्टं यदेतादृशी रसालंकारसंवलिता रचना सहृदयेभ्यो भृशं रोचते। अतो हि व्याकरणानभिज्ञानां कृते तदीया कृतिर्न खलु दृष्टिहीनानां हस्त आदर्श इवाभाति। न किं ततः पूर्वोक्तं लेखकीय वचनं पाण्डित्याधृतस्य दर्पस्यैव द्योतकम्?

साम्प्रतं काव्यान्तर्गतानां पात्राणामपि मनो विश्लेषणीयम्। सर्वप्रथम कुमारसम्भवे दग्धं कामदेवं दृष्ट्वा भग्नमनोरथायाः पार्वत्याः चित्रणं द्रष्टव्यम्—

"तथा समक्षं दहता मनोभवं पिनाकिना भग्नमनोरथा सती।
निनिन्द रूपं हृदयेन पार्वती प्रियेषु सौभाग्यफला हि चारुता॥"

रूपमात्रेण शिवस्य प्राप्तिरसाध्येति मत्वा पार्वती स्वकीयं रूपं विनिन्देतिकालिदासेन चित्रितम्। वस्तुतः सा पार्वती पूर्वं तु स्वकीयेन सौन्दर्येणैव शिवमाराधयितुं पतिरूपेण चावाप्तुं प्रायतत, किन्तु भस्मीभूतं मनोभव सदृश्य सा निजं रूपं निरर्थकं मेने। अनेन तया रूपाश्रितस्यदर्पस्य समाप्तिः संसूच्यते।

एवमेव नैषधीयमहाकाव्ये यदा हंसो दमयन्त्या मनोभावं ज्ञातुमिच्छति, तदा सा स्त्रियोचितया व्रीडया न खलु नलं प्रति स्वकीयामभिलाषां प्रकटयति, नैव च तां प्रच्छादयति, यथा—

"मनस्तु यं नोज्झति जातु यातु मनोरथः कण्ठपथं कथं सः ?
का नाम बाला द्विजराजपाणिग्रहाभिलाषं कथयेदभिज्ञा ? ।।"

अथ च—

चेतो नलं कामयते मदीयं नान्यत्र कुत्रापि च साभिलाषम् ।।"

अनेन ज्ञायते यत् सा नैजामभिलाषां वचसा प्रकटयितुं प्रस्तुता नासीत्। परं श्लेषालङ्कारमाश्रित्य तया स्पष्टतो निगदितं यत् सा नलातिरिक्तं कमपि वरं न कामयामास। एतेन दमयन्त्या मनोद्वैविध्य स्पष्टतामेति। वस्तुतो न कापि भारतीया बाला स्वमुखेन वरात्मिकां कामनां प्रकटीकरोति। नैसर्गिकी व्रीडा एव तत्र कारणम्। पर सा हंसकृतेनाग्रहेण संप्रेरिता सती निजकामनां सर्वथैवाच्छादयितुं न शशाक। एतदेव तदीयमवशत्वमभिव्यक्तिमाध्यममन्वेषयाञ्चकार। निश्चप्रचमत्र लेखकीयं वैदग्ध्यमपि प्रशंसनीयतामधिगच्छति।

उत्तररामचरिते पञ्चवट्यां समागतं रामं प्रति वासन्त्या एष उपालम्भोऽपि मनोद्वैविध्यं व्यनक्ति—

"त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां
तामेव शान्तमथवा किमतः परेण ।।"

अत्र सीतायाः सखी वासन्ती सख्याः परित्यागकृते राममुपालम्भेनानेन व्रीडयितुमाकाङ्क्षति। यः खलु रामः पूर्वतरे काले सीतां स्वजीवितं विना स्वहृदयमिव मनुते स्म, स एव तां परितत्याज, इत्येष उपालम्भोऽतिदारुण आसीत्। अत एव सीतायाः सहचरी वाक्यमसमाप्यैव विरमति। परित्यागस्य तु नामापि वचसि नानेयमिति कृत्वा वासन्त्या विवक्षा मध्य एवं विराममधिगच्छति। परमर्धेऽवसितोऽप्युपालम्भः श्रीरामेण पूर्णतयाऽधिगत इत्यत्र न कोऽपि सन्देहः। एतेनोपालम्भेन रामेणोदीरितानां कथनानां वैयर्थ्यमपि संपुष्यत इति ज्ञेयम्।

अन्ते च वेणीसंहारनाटके नैराश्याक्रान्तस्य धृतराष्ट्रस्यैतत् कथनं द्रष्टव्यम्—

"दायादा न ययोर्बलेन गणितास्तौ भीष्मद्रोणौ हतौ।
कर्णस्यात्मजयग्रत शमयतो भीतं जगत् फाल्गुनात्।।
वत्सानां निधनेन मे त्वयि रिपुः शेषप्रतिज्ञोऽधुना।
मानं वैरिषु मुञ्च तात ! पितरावन्धाविमौ पालय।।"

अत्रान्धीभूतयोः पित्रोः करुणावहं नैराश्यमेव न चित्रितमपि तु दुर्योधनान्तः स्थितस्य मानस्य वैयर्थ्यमपि संकेतितम्। धृतराष्ट्रः स्वपुत्रं स्मारयति यद् भीष्मद्रोणकर्णसदृशामतिरथानां वधेसंजाते कौरवाणां पूर्णो विनाशः पराजयश्च निश्चितः। अतः खलु तेन पाण्डवैः सह सन्धिविधातव्या। वस्तुतो धृतराष्ट्रः सर्वेषां पुत्राणां विनाशेन स्वकीयां दुःस्थितिमप्यपेक्षते। सन्ततिविनाशे सति दृष्टिहीनयोर्दम्पत्योः पालनं सेवाशुश्रूषां वा को विधास्यतीति तदीया दुश्चिन्ताऽत्यत्र मुखरिता। अतएव स स्वपुत्रं मानं त्यक्तुं परामृशति। परं दुर्योधनस्तु न किमप्येतद् गणयामासेति तु कथनीयतामेव नार्हति। पूर्णनैराश्यमधिगतस्य तस्य मुमूर्षावृत्तिः (instinct of death) दृढत्वं गतासीत्, अतः खलु स परामर्शमात्रमवगणयाञ्चकार।

उपर्युक्तेन विवेचनेन सुस्पष्टमिदं यत् संस्कृतसाहित्ये लेखकीयस्य पात्राणां च मनसो विविधा वृत्तयोऽन्वेषणीयतामर्हन्ति। अत एव रसालङ्कारादिविवेचनेन साकं मनोविश्लेपणमपि विधातव्यमित्येष विचारोऽपि संपुष्टिमादधाति। राजस्थानविश्वविद्यालयान्तर्गत रामायणमहाभारतः मधिकृत्य यन्मनोविश्लेपणात्मकं शोधकार्यं पूर्वतो विहितं, तत्खलु नव्याय समालोचनामार्गाय प्रेरणाप्रद भविष्यतीत्यपेक्ष्यते।

पूर्व-अध्यक्ष,
स्नातकोत्तर संस्कृत विभागस्य
डूँगर महाविद्यालये
बीकानेर (राजस्थान)

# विहंगम-दृष्ट्या संस्कृतगद्य-साहित्यस्य विश्लेषणम्

आचार्यः चन्द्रमौलिः

मनोगतभावनां पर-प्रेषणीयत्वे स्वीक्रियते भाषायाः माध्यमत्वम्। सा द्विधा-पद्यमयी, गद्यमयी च। उभयोर्युगपद्वर्तित्वमेव निश्चीयते। संस्कृत-साहित्ये गद्यप्रयोगः प्राचीनकालत एवोपलभ्यते। कृष्णयजुर्वेदब्राह्मणग्रन्थाः, उपनिषदः, बाहुल्येन वैदिकसाहित्यञ्चासाद्यते गद्यस्वरूपे। ऐतिहासिककालात्पूर्वं सप्तमशताब्द्यां यास्कमुनिना प्रणीतं निरुक्तं गद्यविषया विभाति। पातञ्जलमहाभाष्यं तामेव समलंकरोति। ऋग्वेदादेव गद्यसाहित्यविकासो मान्यतामास्कन्दति। पद्यमिव तत्र गद्यमपि वैविध्यमानमभवत्। गद्यमपि साधारणं काव्यात्मकं चेत्युभयकोटिमाटीकते। द्वितीयस्य विकासः कदा कथमिति निश्चयेन वक्तुं नो पार्यते। अद्यत्वेपि सुमधुराकर्षकमनोहारिविकसितगद्यस्वरूपं दण्डिसुबन्धुबाणकृतिषु परिदृश्यते। तत्र व्यवहृतं प्रौढप्राञ्जलगद्यस्वरूपमवलोक्य सम्भाव्यते यदेतेभ्यः पूर्वमपि प्रभूतगद्यलेखकाः प्रादुर्बभूवुः। परं तेषां विषये चैतिहासिकपृष्ठभूमिः क्वापि नोपलभ्यते। इदमपि मन्ये परतन्त्रतापाशनिबद्धे भारतवर्षेऽनुपलब्धगद्यसाहित्यस्य लोपोऽजायत। कात्यायनवार्तिके समुद्दिष्टाख्यायिका सम्भवतो गद्यमाध्यमेन निबद्धासीत्। पातञ्जलमहाभाष्ये वासवदत्तासुमनोत्तराभैमरथ्याख्यायिका त्रयस्योल्लेखः कृतो वर्तते। बृहत्कथा, पंचतन्त्रम् तथान्याख्यायिका अपि बहुशो मिलन्ति।

संस्कृतगद्यसाहित्यस्य लाघवं लघुकायता च प्रधानं वैशिष्ट्यम्। इदमेवान्यभाषाभ्योऽप्यस्य वैशिष्ट्यमवसेयम्। अत्र समासबाहुल्यविशिष्टा शैली दृग्गोचरीभवति। रुद्रदामशिलालेखे समासबहुलालंकृतगद्यप्रयोगो दृश्यते। प्रयागप्रशस्तिगद्यस्वरूपमपि प्रौढं समाससमन्वितञ्च राराजीति। दर्शनग्रन्थेष्वपि शास्त्रीयगद्यस्वरूपं विशेषतो विकासकोटि-

माप्त चकास्ति। शास्त्रीयोदात्तप्राञ्जलगद्यप्रणेतृषु पतञ्जलिः, शवरस्वामी, भगवत्पादशंकराचार्यः, जयन्तभट्टश्च सर्वथा प्रसिद्धिशिखरमारूढाः विराजन्ते। पातञ्जलगद्यविधाने व्यावहारिकभाषाप्रयोगः कथोपकथनशैलीसमन्वितप्रवृत्तिश्च परिलक्ष्यते। समस्तं तत्स्वरूपं सरलं, सुबोधं, स्वाभाविकं पाठकबोधहेतवे सततोपादेयं ग्रथितं प्रतिभाति। शवरस्वामिना कर्ममीमांसासूत्रेषु स्वभाष्यमाम्नातम्। शैली च परमरमणीया, नैसर्गिकी, सुरुचिपूर्णा। उपनिषत्सु प्रणीतं गद्यात्मकं शाङ्करभाष्यं सारगर्भितं, प्रौढं, प्राञ्जलं प्रसन्नं गम्भीरञ्च। तत्र बृहतीभक्तिः, साहित्यिकमाधुर्यम्, प्रसादगुणस्याभूतपूर्वा सुषमा वरीवर्ति। जयन्तभट्टो न्यायदर्शनस्य प्रामाणिकग्रन्थं न्यायमञ्जरीमरीरचत्। शैली च व्यंग्यपूर्णा मनोहरा।

एतदनन्तरं गद्यकाव्यसाहित्यं समुपलभ्यते। काशिकादिग्रन्थेषु आख्यायिकानिर्देश आसाद्यते। कथासाहित्यस्य प्रादुर्भावसमये निश्चयनयेन किमप्यभिधातुं न शक्यते। तत् रूपद्वये लभ्यते। कथात्मकम् आख्यायिकात्मकं च। उभयोरन्तरमिदम्—कविकल्पिता भवति कथा, आख्यायिका चैतिहासिकघटनालम्बनात्मिका। कथायां नायकस्य स्वयंवक्तृत्वमाहोस्वित् किमपि पात्रमन्यत् कथां श्रावयति। आख्यायिकायां नायक एव वक्तृत्वं लभमानो भवति। कथायामध्यायाः उच्छ्वासादयो न भवन्ति। नापि तत्र पद्यप्रयोगो विधीयते। आख्यायिका विभक्ताऽध्यायोच्छ्वासादिभिः विनियुज्यते। यत्रतत्र पद्यप्रयोगोऽपि समाश्रीयते। कथाया सन्ध्यासूर्योदयरजनीप्रभृतिवर्णनं विभाति। आख्यायिकायाञ्च पूर्वोक्तं सर्वतो भवति। सावर्णनात्मिकापि नो तिष्ठति। प्रथमायां कतिपयविशिष्टसंकेतिकशब्दप्रयोगो जायते। द्वितीयस्यां तथा नेति। सा भावात्मकशैलीसमन्विता विधीयते। कथाख्यायिकासु गद्यकाव्यस्य नव्यभव्यरूपमासाद्यते। यस्य सर्वसमर्थप्रणेतारो दण्डी, सुबन्धुः बाणश्चेति प्रसिद्धाः सन्तीति। आन्तरबाह्यसाक्ष्यप्रमाणैरित्थं निर्णीयते। एषु प्रथमो दण्डी, ततः सुबन्धुस्ततोबाणश्चेति।

परम्परानुसारं दण्डी "काव्यादर्श-दशकुमारचरितग्रन्थद्वयस्य रचयिता मन्यतेतराम्। "अवन्तीसुन्दरी नामक गद्यकाव्यमपि निर्दिश्यतेऽस्यैव। अयम् काञ्ची निवासिनो, दाक्षिणात्यस्य, पल्लवनरेशस्य, राजवर्मणः, सभासदो भूत्वा तत्रैव स्वग्रन्थान् प्रणिनाय। काव्यादर्शोलंकार-

अन्यतमा दशकुमारचरितं गद्यकाव्यमस्ति । काव्यादर्शनिहित-शैली-रूपावस्तु सम्बन्धि विहित-नियमाना परिपालनं दशकुमारचरितेऽव-लोक्यते । तत्र विविधविषयसंवलिता सजीवा कृतिः । कथाविनोदयोः पुष्टं दशा तत्र तात्कालिकसमाजस्य रोचकचित्रण कृत्स्न विभाति । यत्र रचनावशे राजवाहनः । दण्डी सुभगमनोरमवैदर्भीरीत्या आचार्यः । वर्णन-प्रणाली सरस-सरलप्रसादगुणयुता । गद्यस्वरूप वैरविक, प्रवाह-पूर्णं सान्त्वनं, चापलाशालीकोति ललितं विद्यते । वाक्यविन्यासो ललितं सौन्दर्यं पुष्कलञ्च । स्पष्टार्थत्व, सम्यगभिव्यक्तिः, भाषासमृद्ध-विन्यासस्य, कल्पनायाः उर्वरता, शैलीविशेष गुणोऽस्ति । सततव्यालोचना-मनु 'दण्डिनः पदलालित्यमिति" भणिति प्रसिद्धिमाप । यस्य गद्यस्वरूपं सजीवमभ्यावहारिकतां प्रतीति । जननिवह-गद्यकाव्यकारित्वेन तत्पुरस्य वेदनायाः आनन्दस्य च परिस्फुरणमस्य गद्यसाहित्ये पर्याप्तमुपलभ्यते ।

गद्यकारस्य सुबन्धोरपि प्राञ्जलं गद्यस्वरूपम् । एतत्प्रणीता वासवदत्ताऽद्वितीयैव गद्यकृतिः । इयं हर्षचरितात्प्राक्तनी । अत्र कथानकस्य लघुत्वेऽपि वर्णनविस्तारस्य प्राधान्यम्, कल्पना वैदुष्यञ्च । तत्र कन्दर्प-केतुवासवदत्ताप्रणयकथा वर्णिता । कथानकस्य लाघवेऽपि नायक-नायिकारूपसौन्दर्यवर्णने, विरहातुरताचित्रणे, मिलनाकांक्षासंयोगदशाव्या-वर्णने चर्तुर्येऽस्य कथाकारस्य वैशिष्ट्यम् । शब्दकौशलकारणात् कृतावस्याः विषयान्तरस्यैव विद्यते बाहुल्यम् । शैली चानुप्रासातिशयोक्ति-सम्भृता, समासबहुला गौडी । अत्र च वरीवर्ति श्लेषविरोधाभासयोः दुर्गमकान्तारः । पौराणिकसंकेतः सर्वातिशायी । अत्र कुत्रचिद् रसास्वादाभावोऽपि बोभूयते । अत्र चित्रकाव्यवत्रावर्ते भावचित्रणं घूर्णायितम् । आडम्बर-कृत्रिमताऽसंगतीनामपि सत्ता बोभवीति ।

महाकविर्बाणः सरस्वतीवरदात्मजः । अयं लक्ष्मीसरस्वत्योः समागमास्पदम् । स्थाण्वीश्वरस्य तात्कालिकनरेशस्य हर्षवर्धनस्य प्रशस्तिमयं हर्षचरितं प्रणीतम् । अयं शोणनदतटीवर्ति प्रीतिकूटनगरस्य निवासी आसीत् । अस्य सम्भाविता रचना गद्यद्वयी—हर्षचरितम्, कादम्बरी च । प्रथमा रचनाख्यायिका द्वितीया, गद्य काव्यस्य सर्वोत्कृष्टमुदाहरणम् । हर्षचरि-तस्योच्छ्वासत्रयेषु निजात्मकथा, शेषेषु हर्षवर्धनस्य जीवनचरितमंकित-मास्ते । इदमैतिहासिकविषये गद्यकाव्यप्रणयने प्रथमः प्रयासः प्रतिभाति ।

काव्यसौष्ठव-दृष्ट्यापि वर्ततेऽत्र वैशिष्ट्यम् । स्थानेस्थानेऽत्र बाणस्य प्राप्यते विचित्रवर्णन-शक्तिपरिचयः । वेविद्यते च प्रसादगुणस्याधिक्यम् ।

कादम्बरी समस्तसंस्कृतसाहित्यस्य सर्वोत्कृष्टगद्यमयी रचना। कथानकेऽस्ति सम्मिश्रणमुपकथानकस्य । कथायाः प्रधाननायिका कादम्बरी । महाश्वेताप्रणयकथा कादम्बरीप्रेम्णो भूमिकामाश्रास्ते। कथानकरहस्योद्घाटनमवसाने जाजायते । बाणेन कादम्बरीपात्राणां चरितचित्रणं कौशलेनाङ्कितम् । सर्वाणि पात्राणि सजीवानि विहितानि। सौम्ययुवकहारीतः, उदारनृपस्तारापीडः, आदर्शामात्यः शुकनासः, राज्ञी-विलासवती, छायेवानुसरन्ती पत्रलेखा, स्नेहिलोऽपि कठोरः कपिञ्जलः, शुभ्रवसना तपस्विनी महाश्वेता इत्यादीनि सर्वाणि पात्राणि सजीवानि वर्णितानि सन्ति । कथानायिका कादम्बरीचित्रणे कथाकारेण स्वाप्रतिम-कल्पनावैभवस्य, वर्णनपाटवस्य मनोवृत्तिमार्मिकपरीक्षणस्य च परिचयो-ऽदायि । कवेः बहुमुखिजीवनस्य विविधानुभवोऽपि रोचकशैल्याङ्कितो विभाति । प्रासादवनोपवनाश्रमाणां यथार्थवर्णनं कृतं गद्यकारेण । तत्सर्व-थानुकरणीयं स्पृहणीयं च । तत्र वर्णन विविधता दर्शनीया । कुत्रचिद् विन्ध्याचलस्य विकटभयावहाटवीवर्णनम्, महर्षे जावालेः शान्तपावनाश्र-मस्य सात्विकसुषमाचित्रणं तथैवान्यत्र शूद्रकतारापीडयोर्विलासवैभवयोः सजीवानि चित्राणि कल्पितानि सन्ति । एकत्र वीणावादिन्याः महाश्वेतायाः विरहविधुरमूर्तेर्दर्शनमन्यत्र च कादम्बरीप्रणयोन्मादस्य सलज्ज स्निग्धचित्रण कृत चकास्ति । कथोपकथनं सरसं स्वाभाविक च यत्कथावस्तुनोऽग्रेसरता सरसां विदधाति । संवादे सर्वत्र प्रसादगुणस्य छटा । रसश्च प्रधानः शृंगारः । अत्र मानवहृदयस्य वेदनापूर्णमूककथा । रतिरत्र सर्वथोदात्ता परिष्कृता च । गद्ये मौलिककल्पनायाः, सुरुचिपूर्णस्वभावोक्तेः, अश्लिष्ट-श्लेषस्य स्फुटरूपेण प्रतीयमानरसस्य, विकटाक्षरबन्धपदावलेः च दुर्लभ-त्वेऽपि मनोभावानां याथातथ्यचित्रणं नव्यभव्यार्थकल्पना च बाणस्य नैज वैशिष्ट्यम् । पाञ्चालीं शैलीमनुसृत्यार्थानुरूपमेव शब्दसंगुम्फनं परमहृद्यम् । प्रकृतिचित्रणं सालंकारं सजीवम् । वर्णनं सूक्ष्मनिरीक्षणस्य परिचायकम् । अत्ररीतेरुत्कृष्टता, अलंकाराणामनुपमछटा, प्रकृतिचित्रणस-जीवता वैभवविलासवर्णनम् सर्वातिशायि वर्तते । श्लिष्टलाक्षणिकप्रयोगेषु कुशलता द्रष्टव्यास्ति । अस्य गद्यकाव्यस्य यथार्थं महत्त्वं कथानके, चरित-चित्रणे, वस्तुविन्यासे च नास्ति, प्रत्युत कवित्वमयरसप्रवाहेऽस्ति । शब्द-

विभागानां वैविध्यं:
लौकिककथानां मूलरु
प्रौढता पूर्वोक्तगद्यसा...
वर्णननैपुण्यं, कल्पनावैचित्र्यम्, पदलालित्यम्, श्लेषचातुर्यम्, अलंकार-वैभवमत्र प्रधानं, कथानकं च गौणम् ।

"गद्यं कवीनां निकषं वदन्तीति" वामनभट्टस्योक्तिरियं वस्तुस्थिति-मेव द्योतयति । गद्यकाव्ये गद्यकारस्य पूर्णा परीक्षा भवति । तत्र कवेरेकमपि स्खलनं महादोषाधायकं जायते । पद्यापेक्षयाऽवधानं विशेषतो ऽपेक्ष्यते । कथा-साहित्यस्य विकासो गद्यस्वरूपमेवावलम्बते । लोक-प्रचलित-घटनाधारे कथासाहित्यनिर्माणस्य प्रवृत्तिर्जाता । बौद्धयुगेऽस्याः प्राचुर्यमभवत् । ततोऽपि प्रभावोऽस्या नावरुद्धः । अस्याः रूपद्वय-मासाद्यते विकसितम्–नीतिकथा लोककथा च । प्रथमा राजनीतिमयी, धार्मिकी, व्यावहारिकी चोपलभ्यते । द्वितीया शिक्षात्मिका, मनोरञ्ज-नात्मिका च । नीतिकथा, जन्तूनुपजीव्य बहुधा प्राकाश्यमुपनीता । अस्या उपदेशकलितं स्वरूपं प्राचीनतममस्ति । उपनिषत्कालेऽपि प्राधान्यमस्या अनुभूयते । बौद्धमहाभारतकाले तु विकासः परां कोटिमभजत् । पंचतन्त्रे एतद् विषयकनीतेः सफलं सम्मिश्रणं जातं विभाति । पञ्चतन्त्रं विश्व-स्यानेकभाषासु सर्वथानूदितं वर्तते । अस्य नीतिग्रन्थस्य निर्माणं नृपतेरमर-शक्तेः पुत्रत्रयस्य कृते नीतिविद्यां शिक्षयितुं जातम् । राजनीति-संवलित-व्यावहारिकशिक्षणमनेन समासाद्यते । निखिलोऽपि ग्रन्थ उपदेशपरिपूर्णः । अत्र सफला राजनीतिः, वर्णनकलापटुता, हास्यविनोदव्यंग्यानि च परिलक्ष्यन्ते । भाषा सरला, शुद्धा, सुबोधा च । दीर्घसमासक्लिष्टपदा-भावः । नीतिलोकव्यवहारपूर्णकथात्मिका तन्त्राख्यायिका मानवपरिष्कृत-जीवननिर्माणे पर्याप्तसाहाय्यमाचरति ।

हितोपदेशोऽपि चान्यतमो ग्रन्थः । वंगप्रदेशेऽस्य रचना नारायणेन कृता । अत्रापि नवीनाः नीतिकथा उपलभ्यन्ते । रचनाशैली मनोहारिणी-प्रभावशालिनी च । अत्र सप्तदश नवीनाः नीतिकथाः अपि मिलन्ति या पञ्चतन्त्रे न सन्ति । शेषाः पञ्चतन्त्रस्यैव कथाः । अयं चतुर्भागेषु विभक्तः । मित्रलाभः, सुहृद्भेदः, विग्रहः, सन्धिश्चेति । अस्य ग्रन्थस्यो-द्देश्यम् बालकानां कृते सरल-सरस-संस्कृतभाषायां नीतिशिक्षणम् । उद्देश्यपूर्तिः सफलतामाबिभर्ति ।

गुणाढ्यप्रणीत-बृहत्कथा लोकप्रियकथायाः एकमात्रप्राचीनतमो ग्रन्थः। उत्तरकालिकसंस्कृत-कथासाहित्येऽस्य ग्रन्थस्य साधीयान्प्रभावः। अत्र पात्राणां चरितचित्रणं सुन्दरं दृष्टिपथमायाति।

क्षेमेन्द्रलिखिता बृहत्कथामंजरी रचनाशैलीदृष्ट्योत्कृष्टा। सोमदेवेन कथासरित्सागरस्य रचना काश्मीरप्रदेशे सम्पादिता। अत्र मूर्खधूर्तशठानां चरितनिर्माणे उपादेयाः रोचकाः कथाः सन्ति। आसु कथासु कतिपयाश्चर्यमयघटना अपि वर्णिताः सन्ति। प्रकृतिचित्रणं च सजीव सुन्दरं मानसोन्मादकम्। इतो व्यतिरिक्ताः वेतालपञ्चविंशतिका, शुकसप्ततिः, सिंहासनद्वात्रिंशतका, अवदानशतकम्, दिव्यावदानम्, जातकमालाश्च लोककथान्तर्गताः विभावनीयाः। अत्र सर्वत्र गद्यस्वरूपं परिमार्जितमुपादेयञ्च वरीवर्ति। अवशिष्टानां विशिष्ट-परिचयोऽन्यत एव वावसेयः।

विवादास्पदे नाटकोत्पत्तिविषये न गत्वा तत्रापि किंचिद् गद्यरचनारूपमेव संक्षेपतो विविच्यते। यद्यपि नाटकेषु पद्यमपि दीयते परन्तु, तत्रत्य गद्यमेव प्राधान्येन मूर्तरससंचार विदधाति। भासकालिदासशूद्रकहर्षवर्धनभवभूतिविशाखदत्ताः विश्वविश्रुताः नाटककाराः प्रथिताः। कालिदासस्य शाकुन्तल नाटकम् धरायां स्वर्गमेवोत्तारयति। कविकुलगुरुणाऽनुभूतिप्रगल्भप्रतिभयाऽभूतपूर्वसफलताऽस्य प्रणयने समालब्धा। रसपरिपाकदृष्ट्येद श्रेष्ठतमम्। सर्वत्र कोमलमधुरभावानामभिव्यक्तिर्दरीदृश्यते। मर्यादितसंयमितविधया सर्वजनीन सार्वभौमं प्रेमानवच्छिन्नं प्रदर्शितम्। नाट्यप्रतिभा, कल्पनाप्राचुर्यं, भाषालालित्यं, रसपरिपाकः, मानवीयमनोभावानां मार्मिक–विश्लेषणं, अभिनेयता, किमपि वैशिष्ट्यमादधाति। भारतीयनाटकेषु गद्यविकासः चरमकोटिमारूढो विराजते।

कौटिल्यार्थशास्त्रे संस्कृतगद्यविधायाः परमो विकासो दृश्यते। अनेन चाणक्यकालिकराजनीतिविधानोत्कर्षस्य सूचनाऽऽसाद्यते। प्राचीनभारतस्य सभ्यता संस्कृत्योराभा कापि विलोक्यते। अस्य ग्रन्थस्य हेतोरेव राज्यशासनविषयकसूक्ष्मातिसूक्ष्मसमर्यविवेचनेन भारतीयानां शासनव्यवस्थापरिज्ञानमासीदिति नवयुगीनाः राजनीतिविशारदाः साश्चर्यं मन्यन्ते। अत्र राजनीतिसिद्धान्तस्य क्रियायाश्च सफलं सामञ्जस्यं कृतं वर्तते। अस्य

ग्रन्यरत्नस्य गौरवं जगतीतलेऽभूतपूर्वमेव विराजमानमवलोक्यते। अत्रत्यं गद्यं प्राञ्जलं, विशुद्धं संस्कृतस्य राष्ट्रभाषात्वसमर्थकं च वेविद्यते।

चम्पू काव्येषु अपि गद्यस्वरूपं परिमार्जितं विभाति। त्रिविक्रमभट्ट-प्रणीतनलचम्पू ग्रन्थः साहित्यिकदृष्ट्या विशेषमहत्त्वपूर्णोऽस्ति। अत्र सरसरमणीयप्रसादगुणपरिपूर्ण-श्लेषस्य प्रचुरता विभाति। अन्येऽपि चम्पू-ग्रन्थाः स्वकीयां विशिष्टतां परिरक्षन्ति। सर्वत्रानवच्छिन्नगद्यप्रवाहः प्रव-हति। चम्पूकाव्यविधाविकासे जैनाचार्याणामपि महत्त्वपूर्णयोगदानं दृश्यते। एभिर्गद्यपद्य-समन्वितप्रमोदः प्राप्यते। अत्र गद्यपद्ययोः समस्तविशेषतायाः समाहारो भवति। सर्वथाऽत्रत्यो गद्यभागः सालंकारो भवति। दृष्टान्त-रूपेऽवान्तरकथापि यथास्थानं प्रयुज्यते। गद्यविकासे भागग्राहिणी चम्पू-विधापि स्वकीयं वैशिष्ट्यमभिरक्षति।

ब्राह्मणग्रन्थेषु यज्ञविधानस्य, ब्राह्मणधर्मस्य च प्राधान्येनोपवर्णनं विभ्राजते। ब्राह्मणानां कर्त्तव्यदिशि संकेतो मिलति। ते यज्ञक्रियासम्पन्न-कर्तारः चारित्र्यवन्तः क्रतुमाध्यमेन जनाभिमतसाफल्यदातारो भवेयुः। सहैव यजमानकर्त्तव्यनिर्देशोऽपि प्राप्यते। यजमानाश्च ब्राह्मणसमादर-सम्पादकाः, दक्षिणादातारो विशेषतो विप्ररक्षकाश्च जायेरन्। नृपतयो द्विज-सम्पत्तिं स्वप्नेऽपि नास्पृशन्। ते यज्ञदक्षिणायां सर्वस्वमपि प्रायच्छन्। यज्ञावशिष्टसम्पत्तयो ब्राह्मणानां कृते ग्राह्या आसन्। ते भूसुराः सन्तो-देवत्वाधिकारिणो जाताः। तेषां यज्ञानुष्ठानेन भयेन देवाः सदाकम्पन्त। तत्र तन्महत्त्वमेवोपवर्णितं शोभते। धार्मिककृत्यवर्णनैः साकं विपुलाख्या-नानि, तात्कालिकसामाजिकजीवनम् चारित्रिकविशेषताश्च महनीयता-विशिष्टा आसाद्यन्ते।

उपनिषद् वेदान्त एवास्ति। तस्याः रचना वेदान्तरं प्रादुर्भूता। सा वैदिकसाहित्यस्यावसानिकं रूपं प्रस्तौति। प्राचीनतमोपनिषदः आरण्य-कभागाः सन्ति। अध्ययनान्ते वैदिकबुधाः उपनिषदामेव गवेषणां व्यधुः। दार्शनिकाः उपनिषत्सु वैदिकरहस्यमाप्नुवन्। तासां सिद्धान्तो ब्रह्मात्मवाद-मनुसरति। तत्र ब्रह्मणः सगुण-निर्गुणस्वरूपं विभाति। ततो विकसित-दर्शनग्रन्थेषु विशेषतो गद्यविधैव परिगृहीता राजते। अङ्गोपाङ्गभेदेन जैन-साहित्यं विस्तरमापन्नम्। तत्राङ्गानि द्वादश सन्ति। आचाराङ्गम्, सूत्रकृताङ्गम्, स्थानाङ्गम्, समवायः, भगवती (व्याख्या प्रज्ञप्तिः),

ज्ञातार्थकथा, उपासकदशा, अन्तकृतदशा, अनुत्तरौपपातिकदशा, प्रश्न व्याकरणम् विपाकसूत्रम्, दृष्टिवादश्चेति। सम्प्रति दृष्टिवादो नोपलभ्यते। इमे जैनागमा प्राकृते निबद्धाः परन्तु तेषां विस्तृतव्याख्या संस्कृतभाष्यमेनं व विहिता विभाति। व्याख्या. रूपत्रये मिलन्ति। निर्युक्तिः, भाष्यं चूर्णिश्चेति निर्युक्तिभाष्ये पद्ये, चूर्णिश्च संस्कृतगद्येऽवलोक्यते। व्याख्या सरलसरसप्रौढसंस्कृते विराजते। जैनागमेषु प्राचीनतमटीका हरिभद्रसूरेरुपलभ्यते। शीलाङ्कसूरिरपि प्रसिद्धिमापत्। शान्त्याचार्योऽभयदेवो मलधारी हेमचन्द्रो मलयगिरिश्च वैदुष्यसम्भृताः संस्कृत-टीकाकारसफला गद्यलेखकाः अजायन्त। येषां साहित्ये महत्त्वपूर्णमास्पदम्। वैदिकेषु-जनबौद्धेषु संस्कृतगद्य प्रबलप्रचारेणाऽस्य राष्ट्रभाषात्मिका व्याप्तिरेव व्यज्यते, गद्यसाहित्यस्य प्रवाह. कदापि नावरुद्धः। सरिदिव प्रसन्नमयीधारा सतत प्रवहमानैवावलोक्यत।

आधुनिक-गद्य-महाकाव्येषु शिवराजविजयस्य महत्त्वपूर्णं स्थानम् विद्यते। अस्यैतिहासिकग्रन्थस्य रचयिता वाराणसेयोऽम्बिका-दत्तव्यास आसीत्। अयमुपन्यास· शिववीरस्य कथानकेन सम्बद्धः। कविकल्पना-प्राचुर्येणास्य स्वरूपं मनोहारि प्रभावशालि च जातम्। भारतीयस्वतन्त्रता-संग्रामस्योरुणोदयकाले लिखितोऽयमुपन्यासो जनजागरणे सोपयोगो जातः। कवेर्वर्णनशैली परमोत्कृष्टा। वर्णनस्य प्राधान्येपि गतिमत्यो घटनाः सन्ति। प्रसादप्रवाहेण सह परिष्कृतप्रौढतापि चास्ते। पूर्वतनसफल-गद्यलेखकानां समन्वितप्रभावोऽत्र परिलक्ष्यते। अयं विषयवस्तुदृष्ट्या-शिववीराऽवरंगजीवयोः प्रसिद्धैतिहासिकघटनाचक्रमवलम्बते। पात्राणां चरित–चित्रणं वास्तविकं मनोविज्ञानानुसारं विहितमास्ते। शिववीरो भारतीयादर्शस्य संस्कृतेः सभ्यतायाः मातृशक्तिरक्षकस्य च रूपे अङ्कितो-वर्तते। मानवबाह्यप्रकृतेः सुन्दरसमन्वयो अत्र विराजते। प्रकृतिवर्णन कामप्यभिख्यां परिरक्षति। महाराष्ट्रभूधराणां, गहनविपिनानां सूर्यो-दयास्तमनयोः समर्थ चित्रणं कृतं विभाति। शब्देषु लालित्यम् मालारूप-कम्, अनुप्रासः शब्दमैत्री पदमैत्री सर्वं दर्शनीयमस्ति। नायकोऽत्र शिव-वीरः, प्रतिनायकोऽवरंगजीवः। द्वयोः घातप्रतिघातौ कथावस्तुनी स्तः उपन्यासस्य। प्रधानो वीररसः। हास्यशान्त-वीभत्सादयो रसाः अङ्गानि। लेखकस्येयं विशेषता यत्तस्य भाषा सदा भावमनुकरोति। स्थाने-स्थाने वर्णन सालङ्कारम्। यत्र तत्र नवीना शब्दाः युगीना अपि

प्रयुक्ताः । नाटकोचितभाषायाः विलासः पदे पदे परिलक्ष्यते। संवादस्य विन्यासोऽपि कौशलेन कृतो वर्तते । ध्वन्यात्मकाधुनिक-शब्दप्रयोगेण भाषा-स्वरूपं सजीवं सम्पन्नम् । वर्ण्यविषयोदात्ततया सहैव भाषागौरवाभिवृद्धिः प्रत्यक्षैव । अत्रत्यं गद्यस्वरूपं सर्वथा क्रमशो विकासमाप्तमनुकरणीयं प्रशंसनीयञ्च विद्यते ।

धर्मसिन्धुनिर्णयसिन्धुजयसिंहकल्पद्रुमादि तिथि निर्णायकग्रन्थेषु गद्य-स्वरूपं परिष्कृतं मिलति । तत्र पद्यं नापेक्षितम् । धर्मशास्त्रनिर्णये गद्य-विधैव गृहीता । संक्षेपत आदिकालतोऽद्यावधि गद्यसाहित्यस्यक्रमिक विकास प्रदर्शितः । संक्षिप्तकाये निबन्धे एतद् विषयकं गम्भीराध्ययनप्रस्तुतेः विद्यतेऽनवकाशः । तदप्याशासेऽनेन परिलेखेन गद्यसाहित्यस्य साधारणं परिचयं प्राप्तुं पार्यते पाठकैरिति शम् ।

---

# काश्मीर-भ्रमणं मम

श्रीनवलकिशोरकाङ्करः, जयपुरम्

अपरा सुरजनवसतिर्मधुरा मूर्तिश्च प्रकृतिसुन्दर्याः।
नव-दल-फल-सुम-सरणिः काश्मीरकुल-काश्यपी जयति ॥१॥

अथ समवसितेषु मधुमत्तमधुलिहां मञ्जुगुञ्जनरञ्जितेषु वासन्तिकेषु वासरेषु, समाप्तिमुपयातेषु च कालेजसत्रकार्यसम्भारेषु साम्प्रतं भ्रष्टाचारप्रसार इव प्रतिपलं परितः प्रसर्तुं प्रारब्धवान् महाकाल इव ग्रीष्मकालः। एष्वेव दिवसेषु विश्वविद्यालयादीनां परीक्ष्यान् निर्णीयाहं श्रान्तं क्लान्तञ्चात्मानं विनोदयितुमस्मच्छरीरादव्यतिरिक्तां परिणीतां प्रोक्तवान्—"प्रिये! इह तु साम्प्रतं शरशङ्कव इव संविशन्ति देहं रविरश्मयः, परमप्रतप्तकालायसरसमिव विकिरति दुःसहमातपं तपनः, वह्निविस्फुलिङ्गा इव समुत्पतन्ति सर्वत्र मृत्कणाः, शरीररोमाणि छेत्तुमिव प्रवहति प्रतप्तः प्रभञ्जनः, उलूक इवालोक-मीक्षितुमपि न पारयति दृष्टिः, शिखरिस्रोत इव च प्रत्यङ्गं निःसरति घर्माम्भसां जालकम्। किमन्यत्, कलौ पुण्याचरणमिव दुःस्पर्शं जातं भूतलम्, ऋतम्भरा वागिव प्रयत्नप्रेक्षणीया जाता शान्तिसन्ततिः, गुरुजनसमादरभाव इव च दुर्भावतां गतः सुखसंवासः। अतः कुत्र परमातपसन्तापसम्भृतेषु वासरेषु त्वेषु मनोविनोदनीयम्? को वा शैत्यप्रधानो विषयो गतिविषयीकरणीयः? कथञ्च ज्वलदङ्गारवत् परितप्तः कायः सान्त्वनीयः?" एतदाकर्ण्य पीयूषमुचं वाचमुच्चारयन्त्या तयाऽकथ्यत—"स्वामिन्! नैदाघेष्ववकाशेष्वनेकधाऽऽवाभ्यां शैत्यप्रचुराणि शिमला-मसूरी-नैनीतालप्रभृतीनि बहूनि स्थानानि गमिकर्मीकृतानि, परं नाथ यावत् काश्मीरकाश्यपी लोचनगोचरी कृता। स्वर्गसौन्दर्यं तत्सौन्दर्यं गदन्ति जगन्ति। शैत्यमपि तत्र समधिकं वर्तत एव। अतस्तत् स्थानमेवावयोर्ग्रीष्मकालिकं मनोविनोदकरं न साम्प्रतमसाम्प्रतं भविष्यतीति।" श्रुत्वैतत् सुललितेन कान्तकान्तोपदेशेन प्रीतिविस्फारिताक्षोऽहं वशंवद इव तत्क्षणमेव सक्षणं तद्वदनं स्वीकृत्य

काश्मीरगमनं निश्चेचयम्। समुषिते दिवसेऽथ पत्नीद्वितीयोऽहं स्टेशन-नाम्नाऽऽख्याते रैलस्थितिस्थाने समागमम्

तत्र हि जिगमिषूणां यात्रिणां महती समष्टिरवर्त्तिष्ठ। कियन्त-स्तत्र परिभ्रमन्तः कलकलेन तत्स्थानं मुखरयन्तः, अविरतताम्बूलदल रागानुरञ्जनं कलयन्तः, यौवनमदालस-मन्थर-गमनचरणन्यासात् स्थापयन्त-श्च पाश्चात्यवाचि मिथः किमपि परिलपन्तः शकटिकाऽऽगमनं प्रतीक्षमाणा आसन्। यथा यथा तदागमनसमयः सङ्कोचमञ्चति स्म तथा तथा कृत-त्वराणां यात्रिणां हृदयेषु तदारोहणकामना वर्धमाना बोभवीति स्म। अथ स्वल्पेनैवानेहसा सा धूमोद्गारमुद्गिरन्ती, चक्रचलननिनादेन कर्णौ स्फोटयन्ती, सीत्कारेण शिशून् तर्जयन्ती, तमोमयमिव च तत्स्थलं विदधती तत्रागतवती। आगतवत्यामेव च तस्यां शकटिकायां तत्र कोऽप्यपूर्वः कोलाहलः प्रावर्तिष्ठ। अहमहमिकया चान्तः प्रविविक्षूणां बहिरा जिगमि षूणाञ्च तत्र यात्रिणामीदृशा वाग्विलासाः प्रावर्तन्त—"त्वरिगमन! कथम्पुरः प्रधावसि, महिलामपि न पश्यसि? रे वीतधैर्य! क्षणं तिष्ठ, ममावतरणोत्तरं वेक्ष्यसि सुखेन, हंहो शठ, किं मे शिरस्येवासिसिपसे? रे निर्लज्ज! बराकीं बालवत्सामपि स्त्रियं नावेक्षसे पयः पाययतीयं स्तन-न्धयं तनयम्, रे स्थविरे! किं चेलाञ्चलं चालयसि मे शयिते शिशौ? एवं प्रचलत्सु वाचां प्रसारेषु कथञ्चिदहमपि लोकापवादेषु पदाधिकारिण इव तेषु चेतो नाञ्चयन् पत्न्या सह तदन्तः प्रविश्य ससुखं समुपाविशम्। स्वल्पसमयानन्तरं प्रस्थानपलप्रचारकेण रैलस्य सीत्कारशब्देन मुखरीकृते तत्स्थलाभोगे सुहृदः सर्वे "श्रीमतां प्रत्यागमनसमयमवेक्षमाणाः कष्टेन कालं क्षपयिष्यामः" इति तीर्थोदकैरिव स्नेहसिक्तै र्वचोभिः पावयन्तः सहज-स्नेहकलितया बन्धुभावप्रगल्भया च दृष्ट्या गमनाभिनन्दनमिवोपपादयन्तः कृतनमस्कारा रैलयानप्रस्थानक्षणेनैव सह ततः प्रत्यागच्छन्नात्मनो गृहान्।

अथास्मदीया शकटिकाऽपि ततः प्रस्थाय प्रभञ्जनजवमसहमानेव द्रुतं धावमाना, समुद्गतेन धूमचयेन तमोमयमिव नभोमण्डलं विदधाना, चलच्चक्रसमुद्घोषेणोद्भूताद्भुतकलकलमयमिव सकलं महीतलं कुर्वाणा, रतिश्रान्ता कान्ता इव च स्थाने स्थाने स्थित्वा पानीयञ्च पीत्वा विश्रामं लभमानेव धनपतिदिशं गच्छन्ती आसीत्। रैलयानमधितिष्ठन्नहमपि

सजाये मध्ये मार्गमष्टास्वपि काष्ठासु युगपत्प्रसारितकरे भास्करे दिवस- [illegible] विश्रान्तिक्षणमनुभवन्तीः श्रमिकसी- [illegible] वसुमतीञ्च वीक्षमाणो भारत- राजधानीं देहलीमुपागच्छम्। तदानीं तत्र दिवसावसानमेघवसनसंवृत- शरीरा आत्मकुलायाभिमुखमाभिगमनोत्सुकानां खगकुलानां मालाभिर्विभू- षितकण्ठा भाले च सूर्यसिन्दूरबिन्दुं दधाना सन्ध्यासुन्दरी समुज्जृम्भिताऽव- र्तत। तदा निखिलं भुवनञ्च स्वल्पेनैवानेहसा गाढान्धतमसा समाच्छाद- दयितुमिव प्रदोषोऽपि प्रासरीसरीत्। न कश्चन विधिविधानमतिक्रमितुं प्रभवतीति प्रदर्शयन् दिनकरोऽपि सञ्चितकरोऽस्तमगात्। विलयं गतवति च दिननाथे दिवसकान्तिर्विरहाकुला सती सतीलोकं प्रातिष्ठत। तदा तत्रैवावां सायन्तनीं क्रियां सम्पाद्य मलिनाम्बरां तमिस्राञ्च व्यपगमय्य उदयाचलशिखरमञ्चति विवस्वति यमुनास्नानं विधातुं कालिन्दीकूल- मगच्छाव। तत्र स्नानसन्ध्यादिकृत्यं समाप्यामध्याह्नं गगनस्पर्शिभवन- शिखरैरुपशोभितां विशदाट्टालिकामालावलयितां कोटिचन्द्रबिम्बमनोहर- भवनकान्तकान्त्या हरिहर्म्यमपि समुपहसन्तीं देहलीं नेत्रातिथितामानीय विश्रम्य च क्षणं यथासमयं ततः प्रस्थायापरस्मिन्नहनि गगनतलमध्यम- ध्यारूढे वासरपरिवृढे पठानकोटमुपागतवान्। अत्रैव चास्मद्रेलयात्रा तदानीं पूर्णतामयासीत्। इतः परं तदा काश्मीरान् गन्तुं मरुत्तरयानस्यैव सौविध्यमविद्यत। अतस्त्वरितमेवावामाह्निकक्रियाकलापं सम्पाद्य मध्या- ह्नोत्तरं श्रीनगरगामिना मरुत्तरयानेन प्राचालिष्व।

अमुष्मिन् यानेऽन्येऽपि बहवो यात्रिणो भ्रातरः काश्मीरान् दिदृक्षवः आसन्। सर्वे वयं मार्गरामणीयकं विलोकयन्तो यानचालकस्य चक्रिणः कौशलेन विघ्नैरनिघ्नीकृताः सायम् आत्मतेजसामेवातपसन्तानमसंसह्य इव, नलिनीसमागमावाप्तिवियोगमाकलय्य इव वा पश्चिमपारावार- पयसि पितत्सौ सहस्रांशौ मध्येमार्गमेकत्र स्वच्छतोयाधारपुलिने स्वल्पं विश्रम्य सन्ध्याञ्चोपास्य भूयस्ततः प्रस्थाय समासन्नवदने भगिनी- भूतायाः सन्ध्यायाः वियोगशोकेनैव तमोमिषेण मलिनाम्बरावृतायां निशायां जम्बूनगरमुपेत्य तत्र होरार्धमितस्ततो भ्रमित्वा भोजनादिकृत्यञ्च समाप्तिं सम्भयित्वाऽतिथिविश्रामशालायां नातिविशालायां रात्रिमगमयाम। महति प्रत्यूषेऽप्य समुत्थायावान्तु तत्रैव शौचस्नानोपासनादिकृत्यजातं सम्पाद्य समं सर्वैः पाण्डरतां स्पृशति विधुबिम्बे, तमः समच्छेत्तुं समुद्गतेन

तपनेन च नितरां रमणे तारागणेऽपि लयं लम्भिते, कालजवनिकामिव करैरपावृत्य तमो वेलां वियोगव्याकुलां नलिनीमात्मानं दर्शयितुमिव चोदयाचलशिखरासन्नक्षेत्रमुपागतवति कमलिनीभर्त्तरि सवितरि, विहाय-स्तलान्नातिदूरङ्गतेऽथ प्रातः सन्ध्यामुपासितुमिव सप्तर्षिमण्डले ततः स्थानात् पुनः प्रचलितौ। मध्याह्ने ऽथैकत्र निर्मलसलिलाधारव्याकीर्ण-विसकाण्डे परिसरे निपद्य सर्वे सार्धमानीतेन भोज्येनोदरदेवमर्चितवन्तः, कतिचन क्षणांश्च विश्रम्भालापैर्व्यपगमय्य भूयस्ततश्चलित्वा मार्गे वेरी-नाग-वारहमूलाप्रभृतिदर्शनीयस्थानान्यवलोकयन्तः पङ्वादने रजनीरमणा-गमनं विभाव्य लज्जयेव रक्तायमानेषु दिगङ्गनाननेषु काश्मीरराजधानी श्रीनगरनाम्नीं नगरीं समेत्य यथासौविध्यं सर्वे यात्रिणः पर्यगच्छन्नित-स्ततः। परमावां तु तां निशां तत्रैवैकस्मिन् राजकीये सुखावासालये सानन्दं व्यत्यगमयाव।

अथ प्रातः ऐन्द्रीदिङ्मुखमुदञ्चति सिन्दूरविन्दुसुन्दरे दिवाकरे स्नानपूजादिकर्म विधाय तत्र निवासाय कस्यचनैकस्य हाउसबोटाभिधस्य नातिमहतः परं सर्वसुखसज्जासमुपेतस्य नौकाभवनस्य मध्येजलं स्थितस्य प्रबन्धोऽक्रियत मयका। प्रायस्तत्रैतेष्वेव विलासिनो यात्रिणो निवसन्तीति तत्रत्यैर्ज्ञातम्। जलगृहेष्वेषु प्रमोदस्य सर्वविधं सौविध्यं भवतीति सर्ववि-दितमेव। नैव तत्र किमप्यलभ्यं वस्तु धनवतां मनोविनोदकरम्। अस्मन्नौ-काभवनं तु तद्दर्शनीयस्थानानां मध्यगतमेकयवनस्याधिकारेऽवर्त्तिष्ट। तत्र हि प्रतिदिनं रूप्यकाणां विंशतिं प्रदाय समुचितेनानेन भाटकद्रव्येण कोष्ठकद्वयी लब्धा, यस्यां सर्वविधं सौविध्यमविद्यत। शाकाहारभोजन-कृते च रूप्यकपञ्चदशी प्रत्यहमपेक्षिताऽऽसीदन्या प्रतिजनम्। तत्र निवस-तोरावयोर्दैव भ्रमितुं जिगमिषा समुदेति स्म मानसे, तदैवावां शिकारा-नामधेयां लघ्वीं नावमधिरुह्य वनोपवनादिदृश्यानि द्रष्टुमितस्ततो गच्छावः स्म। यतस्तदानी तत्र पद्मदलविलोलविलोचना, विकसितेन्दीवरानना, विकचकाशशुभ्रश्वेताम्बरा, मृदुक्वणत्कलहंसनूपुरा, पक्वस्थूलनागरङ्ग-पयोधरा, प्रकृतिवराङ्गना स्वैरं विहरन्तीव मनो मोहयति स्म। अस्मि-न्नेव प्रसङ्गे आवाभ्यां तत्र शालीमारबाग-चिनारबाग-नसीमबाग-डललेक-प्रभृतीन्यनेकानि दृश्यस्थलान्यवलोकितानि। अमीषु कैः कैः शब्दैः किं किं प्रशस्यताम्? एकस्मादेकं स्थानमात्मनो विशिष्टं रामणीयकं वहति

स्म। यत्र परितः परिराजमानाः पलाशिपरम्पराः परमहारित्येन कोटिकीरनिकरसौन्दर्यातिरेकमप्यपजरीहरीति स्म। तत्र शालामारारामस्य तरुलतासन्निवेशस्तु विचित्र एवावर्त्तत। यत्रैकस्मात् प्रसूनशोभाभारभृतः उपवनादग्रे किञ्चिदध एकं पुनरन्यं रम्योद्यानं विराजते स्म, यस्य पूर्वस्मादपूर्वैव तरुलतासन्निवेशविच्छित्तिरवातिष्ठत। ततोऽप्यग्रे पुनः किञ्चिदधोऽभितो विविधविहगकुलकलरवकलिततरुवल्लरीकमपरं प्रमदवनं मनश्चोचुरीति स्म। भूयस्ततोऽप्यग्रे गतानां किञ्चिन्निम्नमपरं नैकविधफलदलपुष्पकिसलयविभाभारनम्यमानलतावलयं मनोज्ञमुपवनाङ्गनं नयनानि पेप्रयीति स्म दर्शकानाम्। एवं तत्रान्येकान्यधोऽधोऽभिनवानि लोचनासेचनकानि कान्तोद्यानानि शोभन्ते स्म। सर्वत्रैव चैको मध्येस्थलं स्वच्छोदकनिर्झरोऽपि प्रवहन्नासीद्यन्नीरनैर्मल्यं क्षीरसौन्दर्यमपि न्यक्कुर्वत् काम-प्यपूर्वां शोभासाहितीं तन्तनीति स्म।

एकदा राकातिथिरासीत्, तत्रापराह्लसमये सकृद्भुक्तवते स्वप्रकोष्ठस्थितवते मह्यं कश्चन पत्रहारको दलमेकमप्रायच्छद्यद्वाचयित्वा शीर्णानीव ममाङ्गानि, श्लथानीव च देहबन्धनानि। आसीद्यतस्तद्धि दलं मर्मकस्य बालसुहृदो दुरुदन्तस्य। को नहि जानाति यन्नक्तन्दिवमेकविषयावासः, सततमेकत्र विद्याभ्यासः अनुदिनं समानभोगविलासः, परोक्षेऽपि गुणगणप्रकाशः, सदैव हासपरिहासः, समानशीलविकासश्चेत्यादीनि भवन्ति सुहृदां स्नेहसवर्धनकारणानि। अत एवामुष्मिन् सुहृद्वर्ये किमपि स्निह्यति स्म मे मनः परमदूरस्थितेऽपि कमलिनीहृदये मिहिरस्येव। सुहृदोऽस्यानुस्मृत्य दुर्वृत्तमनिष्टशतशङ्कातङ्काकुलो दीर्घदीर्घान्निःश्वासमारुतान् मुञ्चमानः कथमपि मिथ्याविकल्पशतसहस्रसमाकीर्णं मूढहृदयं समाश्वासयन् सावशेषदिवसं सकष्टं व्यनैषम्।

अथ मन्दं मन्दं प्रवातुमुपक्रान्ते प्रदोषवाते, कलकरुणमुच्चैः क्रन्दितुमारब्धे च मध्येजलं कोकयुगलव्राते सहस्रस्मरशरप्रहारमूर्च्छितमिव मां संज्ञां लम्भयितुमात्मरूपानुरूपविलासेन सपरिहासेन चिन्तातपमपहरन्ती हर्षविप्रुषो विकिरन्ती विनयेनावनमन्ती मत्सीमन्तिनी ससङ्कोचं नौकाविहाराय चारुविचारं प्रस्तुतवती। शब्दमयेनाप्यनुलेपनसुखमिवोत्पादयता श्रोत्रमार्गेणान्तः प्रविश्य चिन्ताहरणमन्त्रेणेव मां निश्चिन्तं प्रकुर्वता तद्-

वचसा सहसा साहसेन सम्भृतोऽहं तया सह नौकाविहारायोदचलम्। तत्र झेलमनद्यास्तटे कुहचिज्जलक्रीडादोहदेन समायाता अम्लानमालतीमालाकोमला: काश्मीरमहिला: कामोष्माणं सान्त्वयितुमिव वारिविहरणपरायणा आसन्, कुत्रचित् परिघृतपीताम्बरा: परित्यक्तसमाडम्बरा: स्वकरगृहीतशुभ्रकरका: काश्मीरविप्रवटुका: सायं सन्ध्यामुपासितुं जलमनुप्रविष्टा: सुरदीर्घिकासलिलावतीर्णा: बालसप्तर्षय इव प्रतीयन्ते स्म। एकत्र धवलवसनसमुल्लसितशुभ्रशरीरवल्लर्य: कलहंसकलालापमधुरवचनोपन्यासैर्मिथो लपन्त्य: प्रान्तान्तरेभ्य: समायाता: सीमन्तिन्य: सुरपुरविलासिनीरुपहसन्त्यस्तत्र विहरन्ति स्म। तासां गौरवदने श्यामबिन्दु: शारदशर्वरीशशुभासने शालाग्राम इव शोभते स्म। तत्रानुझेलमकूलं सालतालरसालतमालपाटलप्रियालकरीलजाला: विविधा: साला: सर्वर्त्तुफलपुष्पदलाढ्या: पारिजाता इव कामपि प्रकृतिसुन्दर्या: सुषमां वितानयन्ति स्म। काश्चन काञ्चनवर्णा वल्लर्यस्तु रात्रौ विभावसोर्विभा इव विलोक्यन्ते स्म।

अस्मिन्नेव शोभनेऽन्हेहसि नावमारुह्य मनोऽवसादम्प्रशमयितुमावां विहर्तुं प्राचालिष्व। स्वल्पेनैव कालेन शयितुमिव पराशाचेलाञ्चलान्तर्हिते राजीवजीवितेश्वरे प्रभाकरे स्वर्गङ्गावगाहनोत्कसुरतरुणीजनस्तनस्रस्तेन मलयजचूर्णेनैव श्वेतायमाने नभोमण्डले चास्मत्तरणिरपि तरुणीव मत्तमातङ्गगत्या गच्छन्ती तरङ्गै: खेलन्तीव च शनै: शनै: पर्यचलत्। तदानीन्तत्रापराण्यपि बहूनि नौकाभवनानि सर्वत: शोभन्ते स्म। यत्रैकतो वल्लकीकाकलीकर्णकुहरं प्रीणाति स्म; अपरतो मदकरमृदङ्गस्य श्रुतिमधुरो गम्भीरघोष: समायाति स्म, परत्र विलासिनीनां नूपुरारावः समाकर्ण्यते स्म, अन्यतश्च तासा रसनाझनत्कार: कामपि हर्षातिशय तनुते स्म।

एवं तरणिविहारं प्रकुर्वाणावावां यावत्तद्ह्रदमध्यभागमुपागमाव तावत्तत्र मध्येजलं सहसैवास्मद्दृष्टिरेकस्मिन् भास्वति भास्वरे रत्ने समपतद्यद्धि दोलामधिरुह्येव विमलैर्जलतरङ्गैरितस्ततो धावदिव दृश्यते स्म, किन्तु पुनर्ज्ञातमभवद्यदसावस्माकमक्ष्णोर्महान् भ्रम आसीद्यतस्तत्तु मणिरत्नमिवाचरच्चन्द्रमसो बिम्बं जलस्य स्वच्छतया प्रतिबिम्बितं स तत्र सर्वान्

विस्मापयति स्म । एवं क्षणमिव सक्षणां कतिपयक्षणान्नस्तत्र भ्रामयित्वाऽस्मत्प्लवश्चन्द्रः पयोदपटलमिव कमलवनं समुत्पाटयंस्तरणिं परतटं प्रापिपत् । तत्र चावां स्वल्पं विश्रम्य राजीवराजमानवारिभिराननेन्दीवरं प्रक्षाल्य पीयूषमिव स्वादूदकं कामं निपीय तरङ्गरङ्गद्राजहंसायमानानां जलविहगानां केलिविलासान् विलोकयन्तौ समासन्ननववादने पुनः स्वकीये हाउसबोटनाम्नि नौकागृहे समेत्य भोजनक्रियां सम्पाद्याथापरैर्यात्रिबन्धुभिश्च सह चिरं प्रमोदगोष्ठीमनुभूय सविलासं निशीथिनी व्यत्ययगमयाव । एवन्तत्र विभिन्नेषु दिवसेषु श्रीनगरासन्नवर्तीनि चश्मेशाही-पहलगांव-चन्दनवाड़ी-गुलमर्ग-प्रभृतीन्यपि स्थानानि विलोक्य त्रिगुणानि पञ्चदिनानि सुरपुरसुखानीवानुभूतानि नन्वावाभ्याम् ।

काश्मीरेषु तत्र मुख्यरूपेण यवनाः पण्डिताश्चैव निवसन्तो दृष्टाः । तत्रत्या ब्राह्मणास्तत्र पण्डितशब्देन प्रोच्यन्ते । सर्वे एवैते पण्डिता यवनाश्च प्रायो नातिधनिकाः । येषां परिधानमपि मालिन्येन न हृदयावर्जकमवर्तत किन्तु शैत्याधिक्येन काश्मीरवासिनो जना गौराङ्गा एव दृशमस्पृशन् । आसीत् पूर्वमसौ देशः सुरसरस्वत्या अपि लीलाविलासनिकेतनम् । तत्रैव आनन्दवर्धनोद्भट-कल्लटोव्वट-कह्लणमहिमभट्टादयो विश्वविश्रुतयशोवैभवा विद्वांसः शारदातनया जनिमलभत । किमन्यद्, भामहस्य अलङ्कारसम्प्रदायः, वामनस्य रीतिसम्प्रदायः, कुन्तकस्य वक्रोक्तिसम्प्रदायः, आनन्दवर्धनस्य ध्वनिसम्प्रदायः, महिमभट्टस्यानुमानसम्प्रदायः, अभिनवगुप्तस्य व्यञ्जजनासम्प्रदायः, प्रभूतग्रन्थानां रचयितु र्क्षेमेन्द्रस्य औचित्यसम्प्रदायः, इत्यादयः प्रौढाः साहित्यसम्प्रदायास्तत्प्रवर्तका आचार्याश्चापि काश्मीरमेदिनीमेवात्मनो जनुषा धन्यतामललम्भन् । परन्तु साम्प्रतं तत्र सुरभाषायाः कथा तु दूरे आस्तां साधारणशिक्षाऽपि नातिप्रचलिता वर्तते । अत एव शिक्षाया अभावादापणेषु वस्तूनां क्रयविक्रयकर्मणि भूयान् मिथ्याव्यवहारः प्रचलितो दुनोति चेतः । कस्यचिदपि वस्तुनश्चतुर्गुणमूल्यान्न्यूनं तु नैव कश्चिद् विक्रेता ब्रूते । तत्र हि सुस्वादूनि अक्षोटफलानि, सुगन्धिताः केसरखण्डाः, काष्ठशिल्पकलाकृतयः, 'काश्मीरी शाल' इति नाम्ना प्रसिद्धानि ऊर्णावसनानि च प्रधानरूपेण भवन्ति । इमान्येव च वस्तूनि तत्र यात्रिणो मुखयाचितं मूल्यं दत्वाऽपि काश्मीरस्मृतौ चेक्रीयन्त एव । मयकाऽपि तत्रेदृग्विधानि बहूनि वस्तूनि पत्न्यभिनन्दितानि समक्रैषतैव ।

एवं तत्र कांश्चिद्दिवसान् सानन्दमपवाह्य मरुत्तरयानतः पुनरेकस्मिन् शुभे वासरे प्रातस्ततः प्रस्थाय द्वितीयस्मिन्नहनि पठानकोटमागच्छाव। इतश्च रेलमधिरुह्य प्रत्यावर्तनसमये मध्येमार्गममृतसर-जालन्धर-देहलीप्रभृतीनि नगराण्यपि वीक्ष्य पंचविंशतितमे दिवसे सानन्दं स्वगृहान् समायासिष्व आवाम्। अद्याप्यसौ काश्मीरच्छविः स्मृतिसरणिमुपधावन्ती हृद्यमन्दां मुदं जनयति।

□□

# याचना-पुराणम्

—श्री कलानाथ शास्त्री

अद्य सायन्तनभ्रमणानन्तरमहं नितान्तं श्रान्तमिवात्मानमन्वभवम् । दैनीन्दनो मे कार्यक्रमो यदहं रात्रौ शयनीये सानन्दमर्धनिमीलितनेत्रः पत्न्या सह किञ्चिदालपन् होरार्धं तिष्ठामि, तदनन्तरं निद्रादेवी न जाने कदा मामात्मसात् करोति, अन्यस्मिन्नेव च लोके नयति । अद्यापि तमेव कार्यक्रममनुसर्तुमिच्छुरेकं पुस्तकमादाय खट्वायामुपाविशम् । मत्पत्नी महानसकर्मव्यापृता न मह्यमवधानं दत्तवती । मयोच्चैराकारितेयम्—"आर्ये ! कोऽयमद्य महान् महानसव्यापारो यद्रात्रेरष्टवादानन्तरमपि न बहिरायाति भवती ? किं खट्वारूढं मां दृष्ट्वा 'खट्वारूढो जाल्मः' इति प्राचामाभाणकं सत्यापयन्ती मां जाल्मं नानुगृह्णात्यार्या स्वसंभाषणेन ?

"न खलु तादृशं किमपि कारणम् । किन्तु प्रातरष्टवादने किं वोत्तरमहं प्रतिवेशिन्यै[1] प्रतिपत्स्ये इत्यधुना चिन्तयामि । भवांस्तु सर्वदेव विनोदव्यापृतचेताः परिहासमन्तरा न किमपि हृदये करोतीति दौर्भाग्यं मदीयमेव ।"

"अहो किमेवमकारणचिन्ताभिराकुलीभूय मामपि सचिन्तं करोति श्रीमती ? किं वा प्रतिवेशिन्यै कथनीयं श्वः ?"

श्रीमती मां प्रतिवेशिनां कृत्यव्यवहारेषु, गृहकर्मसु च साभिरुचिं ज्ञात्वा सस्मितं बहिरायाता । आह च— "अद्य अस्मत्प्रतिवेशिनो घोषमहाशयस्य पत्नी प्रतिरिह समायाता, याचते च शतं रूप्यकाणि ।"

"शतं रूप्यकाणि ?"

"अथ किम् ।"

---

1. परिवेशिनी=पड़ोसन

"किमिति ? किं सा याचिकाऽस्ति ?"

"नैव । अल्पकालिक–ऋणरूपेण द्रव्यं वाञ्छति । तस्या भ्राता, भ्रातृजाया तत्परिवारश्च मासमेकं तत्समीपे निवासाय समायाताः । मासस्यान्तिमश्चायं सप्ताहः । वेतन हि व्यतीतप्रायम् । वयमेव नूनमेतेषां दृशि धनिकाः, कुसीदिनः, ततो वयमृणं दास्याम एवेति........"।

"अहो ऋणं याचते ! तदपि शतं रूप्यकाणामेव !! एतावतः कृते किमिति भवती चिन्तापरा ? प्रतिवेशसम्बन्धोऽपि तु रक्षणीय एव ?"
"तत्तु सर्वं समीचीनम् ।

"परं कस्य सविधे सन्ति शतं रूप्यकाणि ?"

"भवत्याः सविधे भवेयुः । मया तु सर्वं वेतनं समर्पितम्, देव्यै भवत्यै, श्रीमत्यै ।" परिहासो मया प्रारब्धः ।

"कुत्र सन्ति मत्सविधे मुद्राः ? अस्मिन्नेव तु मासे नवनीतस्य (अस्मत्सुतस्य) वस्त्राणि मया निर्मापितानि ।"

"हा धिक् ! किं तर्हि वयं प्रतिवेशिन्यै प्रतिपादमिष्याम उत्तरम् ?"

"तदेव त्वहं पृच्छामि । ज्ञातमधुना श्रीमन् ! श्वः सा पुनरस्मान् याचयिष्यते ।"

"आर्ये ! चेत्सत्यं पृच्छसि, तां याचमानां दृष्ट्वाहं लज्जावनतो भविष्यामि । याचना मां लघूकरोति । श्रुतं त्वया, किमहं प्रातः पठामि ?"

"किम् ?"

"शृणु ।"

"ज्वलतु जलधिक्रोडक्रीडत्कृपिटप्रभवप्रभाप्रतिभटपटुज्वालामालाकुलो जठरानलः ।"

तृणमपि वयं सायं संफुल्लमल्लितल्लिका परिमलमुचा वाचा याचामहे न महीश्वरान् ।"

"तत्तु वर्तते एव । अहमपि न कदापि कमपि किमपि याचिष्य इति पूर्वमेव प्रतिज्ञातवत्यस्मि । तृणं वा भवेत् । ऋणं वा भवेत् ।"

"धन्यासि देवि !" मया परिहासः पल्लवितः, "सत्यं रावण-कुलस्य कन्यकाऽसि ।" "अरे ! किं प्रजल्पति भवान् ? काऽस्ति रावण-कुलस्य कन्यका ? किमति मां मुधाऽऽक्षिपति ? भवान् भवेत्कामं मेघनाद-कुलस्य—वंशधरो यदेवं......."

"हन्त ! अकारणकुपिताऽसि ? पूर्वं पृच्छ मां रावणकुलकन्य-कात्वरव्यातेर्व्याख्याम् । तदा ज्ञास्यसि ।"

"ब्रवीतु भवान् ।"

"शृणु । रावणः स्वाभिमानिनां शिरोमणिरासीत् । स न कदापि किमपि याचते स्म । तमेव सर्वेऽयाचन्त । परं यदा यज्ञे स्वशिरसां बलिं निधायाऽऽममेधोऽनेन प्रारब्धस्तदा प्रसन्नो भगवान्मृडानीपतिराविर्भूय वरं याचितुममुमादिदेश । शिरांसि चास्य पुनः प्ररूढानि दशाऽपि । किन्तु तेषां कतमं शिरो याचनां कुरुताम् ? याञ्चा ? धिक् ! रावणशिरसामिमां विचिकित्सां वर्णितवतो मुरारिकवेः पठितं भवत्या तदिदं पद्यम् ?

सन्तुष्टे तिसृणां पुरामपि रिपौ कण्डूलदोर्मण्डली लीलालन पुन-र्विरूढशिरसो देवस्य लिप्सोर्वरम् ।

याञ्चादैन्यपराञ्चि यस्य कलहायन्ते मिथस्त्वं वृणु, त्वं वृणित्य-भितो मुखानि, स दशग्रीवः कथं कथ्यताम् ?

एवं यथा रावणो याञ्चादैन्यपराङ्मुखोऽभूत्तथा भवत्यप्यस्तीति मयाऽऽत्मा धन्यो मन्यते ।"

एतदुपरि श्रीमती रावणरवविनिन्दकमट्टहासमारब्धवती । किन्तु त्वरितं गम्भीरतया मयोक्तं पुनः—

"परम् ऋणग्रहणं न खलु याञ्चा, भिक्षा वा । अयं तु विनिमयः । अस्मिन् संकटसमये यदि जना भिक्षामपि याचेरन्, न तच्चित्रम् । एकैको युवाऽद्य जनसंख्यावृद्धौ सहायकः । प्रजाः वर्धन्ते, खाद्यमल्पम् । अहं तु न

केवलं सन्तति-निरोधमपि तु सर्वकारीयाज्ञया[1] विवाहनिरोधनियमं प्रचालयितुमिच्छामि । न च कश्चन विवाहं करोतु न च प्रजा उत्पद्येरन् ।"

श्रीमती पुनरट्टहासमारब्धवती । किन्तु तदैव पृष्ठद्वारतो मन्मित्रं धीरेन्द्रो निम्नोद्धृतां धिक्कृतिपरम्परामुद्गिरन् मद्गृहं प्राविशत् ।

"वाजपेयिन् ! कोऽयं नवीनो विदूषकव्यापारोऽयारब्धस्त्वया ? जनान् हासयितुं शाकुन्तलस्य माढव्यम्, मृच्छकटिकस्य शकारम्, भारतीय-चित्रपटस्य 'जॉनी वाकरं'[2] पाश्चात्यं चार्ली चप्लिनं चापि भवानतिशेते ।"

"धीरेन्द्र ! तिष्ठ । नाऽयं विनोदस्य विषयः । गंभीरा चर्चेयम् ।"

"का अस्तीयं चर्चा ?"

"मदीयः प्रतिवेशी मां शतं मुद्रा ऋणं याचते । न च मत्सविधे किमपि द्रव्यम् ।"

मध्य एव मत्पत्नी प्रोक्तवती— "आवां च याच्ञां भिक्षां च लाघवं मन्वहे ।

"नाऽऽवां कंचन याचावहे न च कश्चनाऽऽवां याचताम् ।"

धीरेन्द्रः— "तत्तु समीचीनम् । किं तु न जानाति भवान् यद्भारते याच्ञायाः परम्परा सुतरां प्राचीना ।"

अहम्—"किमिदं प्रलपसि ? वयं परम्परया स्वाभिमानिनः, दानिनः । सर्वमेधं कृत्वा सर्वस्वं समर्पितवान् रघुः, स्वाङ्गं प्रदत्तवान् शिबिः, दानी कर्णः, बलिः रन्तिदेवः....एवंविधा दानिनोऽस्माकं संस्कृतौ प्रादुरभूवन्....।"

धीरेन्द्रः—"धन्योऽसि विद्वन्मूर्धन्य ! सेयमेव ते तर्कबुद्धिः ? अरे दानिनामिमां सूचीमुद्गिरन् भवान् किमिदं विस्मरति यदेभ्यो दानिभ्यो दानयाचनां कृत्वा एतेषां नाम दानिनां गणनारम्भे प्रसेधितवन्तो याचका अपितु भारतीया एवाऽऽसन्,

---

१. सर्वकारः—सरकार इति हिन्द्याम् ।

२. जॉनीवाकर—इत्याख्यो हिन्दी—चलचित्रपटानां हास्याभिनेता,

—स्व. चार्ली चेप्लिनश्चाङ्गल-चित्रपटानाम् ।

तेषां परम्पराऽपि तु भारतीया, प्राचीना च। यदि याचका नाऽभविष्यन् तर्हि दानिनः कुतोऽभविष्यन् ?"

मत्पत्नी—"तर्हि धीरेन्द्रस्य मतं यद्भारते परम्परया याचका एव जन्म लभन्ते ?"

धीरेन्द्रः—अथ किं प्रजावति ! यदि भवती श्रोतुमिच्छति तर्हि रहस्यमिदं भवत्यै निगदिष्यामि। लोकानां कल्याणाय समीचीनमिदम् भवत्या पृष्टम्। रहस्यमिदं देवानामप्यगोचरम्। स्वयं भगवान् वामनो रहस्यमिदं प्रत्यक्षीचकार। स इन्द्राय प्रोक्तवान्, इन्द्रो नारदाय प्राह, नारदः कौत्सायाब्रवीत्।"

एतदुपर्यावां सौत्सुक्यं पृष्टवन्तौ, "वामनः प्रत्यक्षीचकार ? कथमिव ?"

तदैव द्वारि आकारणघंटिका (कॉल-बेल) खनखनायिता। कोऽयं भवेद्यात्रावस्मद्द्वारि ? श्रीमती त्वरितमुत्थाय द्वारि समगात्। क्षणानन्तरं च हस्ते पत्रखण्डद्वयमादाय समायाता।

"किमिदम् ?" मया पृष्टम्।

"द्वारि चत्वारश्छात्रास्तिष्ठन्ति। परश्वस्तेषां[1] विद्यालयस्य निर्धनछात्राणां साहाय्यार्थं दानीयचित्रपटप्रदर्शनस्य (चेरिटी शो) समायोजनम्। तदर्थं त्रिकट[2] द्वयमस्मद्-हस्ते विक्रेतुं वाञ्छन्ति।"

मया धीरेन्द्रः प्रोक्तः—"दृश्यतां, द्वारि याचका अपि समायाताः। वैदिकी मंगलाकांक्षा चरितार्था जायते—याचितारश्च नः सन्तु, मा च याचिष्म कंचन।"

---

१ परश्वः=परसों इति हिन्द्याम्। श्वस्तः परस्मिन् दिने।

२ त्रिषु स्थानेषु कट्यते छिद्यते इति त्रिकटम्। ग्रहणसमये, मध्ये निरीक्षण-समयेऽन्ते च त्रीणि स्थानानि) कटे वर्षावरणयोः इति धातोः सम्पाद्य संस्कृतीकृतोऽयं शब्दः कतिपयैः विद्वद्भिः। अत्रापि प्रयुक्तः।

"तदेव त्वहं कथयामि वाजपेयिन्! भारतेऽस्माकं याचका भिक्षुकाश्च सर्वत्र सुलभाः।"

मध्य एव मत्पत्नी मामधिक्षिप्तवती—"किन्तु भवन्मते मा भूत्सेयं याचना। विनिमयः सोऽयमपि। भवान् चित्रपटं द्रक्ष्यति, तदर्थं भवान् द्रव्यं ददाति।"

तदेव धीरेन्द्रो मत्पक्षमादाय प्रोक्तवान्—"किन्तु देवि! दृश्यतां यच्चित्रपटस्यास्य प्रदर्शनं नाम्नैव भिक्षादानमाधारीकरोति—'चेरिटी शो' इति। मन्मते त्विदं भिक्षायाचनमेव। यद्यहं चित्रपटं द्रष्टुमिच्छामि तदा स्वेच्छया तत्र गत्वा त्रिकटं क्रेष्यामि। इच्छाया अभावेऽपि साहाय्यार्थं द्रव्ययाचनं भिक्षैव भवति। एतैः पूर्वं चित्रपटस्य स्वामी चित्रपट, प्रेक्षागारं च प्रदातुं याचितः स्यात्। अधुनैते त्रिकटद्रव्य जनतां याचन्ते।

भवांश्चित्रपटं पश्यतु, मा वा पश्यतु, भवानेभ्यः पञ्चमुद्रा, दशमुद्रा वा दास्यत्येव। सर्वमिदं भिक्षैव।

यदि सिद्धान्तदृशा पश्यामस्तर्हि का वा भवेत्परिभाषा भिक्षाया इत्यपि वच्मि। द्रव्यस्योपार्जनं श्रमेण भवति। भवान् श्रमं करोति, तद्विनिमये भृतिं, वेतनं वा लभते। तत्खलु भवदुपार्जितं द्रव्यम्। यदि स्वामिनोऽनुपस्थितौ, तस्य दृष्टिं परिहृत्य वा किंचिद्वस्तु भवताऽऽत्मसात्क्रियते तर्हि तच्चौर्यमित्युच्यते। यद्युपार्जनं, चौर्यं चेति द्वयमपि न संभवति तर्हि जना भिक्षामाश्रयन्ते। स्वस्वत्वाऽऽपादनस्यायं तृतीय उपायः। याचना च द्विविधा। अल्पीयसा समयेन परावर्तनस्य वचनं प्रदाय द्रव्यग्रहणम् ऋणमित्युच्यते। यद्यहं भवते ऋणं प्रयच्छामि, तदा तस्मिन् द्रव्ये मदीयं स्वत्वं स्वल्पकालाय निवर्तते—"रजकाय वस्त्रं ददाति" इतिवत्। स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादानं दानमित्यस्माकं वैयाकरणा अब्रुवन्। मार्क्साख्यो[1] विद्वान् श्रमस्यापीमां नवीनां परिभाषामारब्धवान्।

---

1. कार्ल मार्क्स इत्याख्यो योरोपीयविद्वान् येन धनपति-श्रमिकसम्बधाना शास्त्रं लिखितमभूत्।

श्रमस्य विनिमये द्रव्यग्रहणमुपार्जनम्। एव द्रव्यग्रहणस्य त्रय एवोपायाः, उपार्जनं चौर्यं, याचनञ्च ।

उच्यते ह्याङ्गलभाषायामपि—

'Four ways to a square meal,

Earn, beg, borrow or steal.'

नान्यः पन्था विद्यतेऽयनाय । यद् द्रव्यं श्रमोपार्जितं नाऽस्ति, तद्याचितं वा भवेत्, चोरितं वा भवेत् ।"

सर्वमिदं धीरेन्द्रस्य व्याख्यानं श्रुत्वाऽहं ज्ञानाञ्जनशलाकयोन्मीलितनेत्रमिवात्मानमन्वभवम्। किन्तु तावता मत्पत्नी दानीयचित्रपटस्य त्रिकटद्वयं गृहीत्वाऽऽगच्छत्। धीरेन्द्रोऽवोचत्, "धन्याऽसि प्रजावति ! यथा बलवान् बलिर्वामनरूपाय भगवते त्रिविक्रमाय त्रिलोकीं प्रदाय गौरवान्वितोऽभूत्, तथैव त्रिकटान्यादाय भवती शोभते ।" साऽपृच्छत्—"किन्तु धीरेन्द्र महाशय, वामनेन प्रत्यक्षीकृतं किं तद्रहस्यमस्ति यद् भवता ज्ञातम्?"

"अहो, श्रूयतां तत्। याचकानां सम्प्रदायगुरुर्भगवान् वामनः सर्वत्र दानस्य पुण्यं महत्त्वं च प्रासारयत्। सर्वान् दानिनोऽनेन विमोह्य वराकं बलिं च बन्धयित्वा विना परिश्रमं याचनानन्दस्य रहस्यमप्यसौ लोकेऽवतारयामास। तदनन्तरं भारतवर्षे याचनाया भिक्षायाश्च महती परम्परा प्रासरत्, दृश्यता—स्वयमिन्द्र स्वकीयं पुत्रमर्जुन कर्णस्य शक्तेरभिमुखमकिञ्चित्करं विज्ञाय कर्णं तस्य कवचकुण्डलेऽयाचत । कीदृशः सरलः उपायो युद्धं विजेतुम्? अनेन नितरामजेयः कर्णः सुपराजेयः समजायत ।"

मत्पत्न्या पृष्टम्—"किमिन्द्रस्त्रैलोक्याधिपोऽपि याच्ञालाघवं स्वीचकार ?"

धीरेन्द्रः—"हा हन्त ! इन्द्रः स्वयमजानात् यन्मम शक्तेः आधारभूतं वज्रमपि याचनाद्वारा एवाऽऽनीतम्। वृत्रस्य शक्तेर्भीता. सर्वे देवाः दधीचिं दानस्य महत्त्वं बोधयित्वा, मुग्धस्यास्यास्थीन्यपि दानव्यपदेशेन नीतवन्तः। तत एव तु इन्द्रो वज्रधरः समभूत्। एवंविधो याचकः चेदन्यं याचेत, किं तत्र चित्रम्? स्वयं धर्मः कपोतरूपं धृत्वा राज्ञः शिबेः सभायां

स्वशरीरपरिमाणमामिषमयाचत ।" अहम्—"तर्हि भवन्मते भारतीया देवा अपि भिक्षुका एवाभूवन् ?"

धीरेन्द्रः—"अथ किम् ? अतएव तु भिक्षाऽस्मत्संस्कृतौ परमं पवित्रं कर्त्तव्यं, धर्मः सर्वपुण्यानां च सारभूतं वस्तु संमन्यते । पश्यतु भवान्, ब्रह्मचारी, वानप्रस्थः, संन्यासी इति त्रय आश्रमास्तु स्वजीविकायै भिक्षामेवाश्रयन्ते । भिक्षाटनं ह्युपनीतस्य ब्रह्मचारिणः प्रथम कर्त्तव्यम्, "भवति ! भिक्षां देहि" इत्यारटन् बटुः भिक्षाटनं दिने दिने चरति । अस्मद्वैयाकरणा अपि भिक्षाटनं प्रमुखा क्रिया, गोरानयनं चानुषङ्गिकीति कृत्वा 'भिक्षामट, गां चानयेति' छात्रान् साग्रह पाठयन्ति सिद्धान्तकौमुद्याम् । शिक्षां समाप्य स्नातको गुरुदक्षिणां दातुकामोऽपि भिक्षामेवाश्रयति । कौत्सरघुवृत्तान्ते स्वगुरवे दक्षिणां प्रदातुं रघोः स्वर्णमुद्रा याचितुं 'कौत्सः प्रपेदे वरतन्तुशिष्यः ।' किन्तु कौत्सः समपश्यत् यत्सर्वमेधानन्तर वराको रघुरपि स्वयं भिक्षुक एव संजातः । एवमेव महाभारतीयः उत्तङ्कः स्वगुरुपत्न्याऽऽज्ञप्तः, 'गुरुदक्षिणारूपेण राज्ञः सौदासस्य पत्न्याः कुण्डले मदर्थमानय' इति । तदर्थं वराक उत्तङ्को भिक्षुको बभूव ।

किं बहुना । चातुर्वर्ण्ये मूर्धन्यो वर्णो ब्राह्मणो भिक्षया एवाजीवत् । शिलोञ्छवृत्त्या भिक्षया वा जीवनं गौरवममन्यत । अतएव सखे ! एतस्याः परम्परायाः प्रतिनिधयो वयं यदि भिक्षुका न भवेम तर्हि कोऽन्यो भवेत् ?

अहम्–किन्तु सखे ! ये ब्राह्मणाः श्रमेणोपार्जनं भिक्षातो वरं मन्यन्ते ते दानं न गृह्णन्ति, दक्षिणां गृह्णन्ति । दक्षिणाशब्दस्य चाऽऽङ्ग्लभाषानुवादो भवति "फी" (फीस) इति । श्रमस्य प्रतिफलं खलु दक्षिणा । नेदं परिग्रहपदवाच्यम् ।

मत्पत्नी धीरेन्द्रस्य सिद्धान्ताद् वैमत्यं प्रकाशयन्ती प्रोक्तवती—"अरे, श्रीमन् ! दानस्य महिमानं भवान् कथं जानातु ? अस्मद्देशे पुरा धनिका भूयांसोऽभूवन् । धनस्य व्ययं ते कर्तुं नापारयन् । अत एव समाजे । समान-वितरणानुकूलाऽऽर्थिकी व्यवस्था प्राचीनैरार्यैर्दानपरम्परामिषेण वृताऽभूत् । श्रुतं भवता भर्तृहरेरिदं पद्यम् ?

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य ।
यो न ददाति, न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥ इति

धीरेन्द्रः—तत्सर्वमहं जानामि । किन्तु भवती न जानीते यद् यदि भारते धनिका भूयांसोऽभविष्यंस्तर्हि दानं भोगो नाश, इत्यादि पद्यानि निर्माय दानिनां दानाय प्रेरणस्य काऽऽवश्यकताऽभविष्यत् ।

यद् वस्तु स्वल्पतरं लभ्यते तस्य महत्त्वमधिकतरं भवति। एवंविधानि पद्यानि भिक्षुकैर्ब्राह्मणै रचितानि, धनिकेभ्यश्च श्रावितानि ।

तदैव मया मध्ये एव प्रोक्तम्—"सखे! धनिकैरपि रचिताः कतिपये श्लोकाः । तद्यदि वाञ्छथः श्रोतुं तर्हि तेष्वेकतमं श्रावयामि—

तृणाल्लघुतरस्तूलस्तूलादपि च याचकः ।
वायुना किं न नीतोऽसौ ? मामयं प्रार्थयेदिति ॥

एतदुपरि सर्वे वयं हासमुखरा अभूम । तदैव मत्पत्नी प्रोक्तवती—तर्हि धीरेन्द्र! अहं कल्पयामि यद् याचनाया महत्त्वस्य कारणमिदं वर्तते यद् याचने न कोऽपि परिश्रमः, न किमपि कष्टम् । सहजं सरलमिद कार्यम् । श्रमस्तु नूनं कष्टकरो भवति ।"

धीरेन्द्र—तत्तु स्पष्टमेव । परं श्रमविमुखा वयं भारतीया भिक्षाटनस्य नित्यनूतनानामुपायानामाविष्कारे नितरां श्राम्यामः इति किं नाऽऽश्चर्यावहम् ? दृश्यताम्—याचनस्य विना श्रमं द्रव्योपार्जनस्य च कत्युपायाः अस्माभिराविष्कृताः। येऽन्यत्र भृतिं न लभन्ते ते तीर्थेषु तीर्थगुरवः (पण्डा इति हिन्द्याम्) भूत्वा याचन्ते, मन्दिरेषु पूजका भूत्वा याचन्ते भगवन्मूर्तेरपदेशेन, शनिग्रहस्य सेवका भूत्वा शनिवासरेषु शनिमूर्ति शनैश्चरस्य चित्रं वा जनान् प्रदर्श्य याचन्ते, रथ्यासु भिक्षुका भूत्वा याचन्ते भारते सुचिरात्प्रचलन्ती सेयं भिक्षुकपरम्परा तावद् बद्धमूला समजायत यद् ये नितान्तनिःस्पृहा, निर्लिप्ता महान्तश्चासंस्ते स्वाभिमानधना अपि सन्तः प्राचां परम्परामिमामविगर्णयितुमक्षमाः स्वार्थस्याभावेऽपि परार्थं याचन्ते स्म । महामना मदनमोहनमालवीयो वाराणसेयहिन्दूविश्वविद्यालयं निर्मातुं सहायतां याचमानो देशस्य कोणं कोणं बभ्राम । महात्मा मोह

दासो गांधी हरिजनानां पददलितानां च कृते याचते स्म । अस्माकं समयेऽपि सन्त विनोवाख्यो याचको भूमिहीनानां कर्षकाणां कृते "भूमिदानस्य" "ग्रामदानस्य" वा नाम्ना भूखण्डानि याचतेस्म । सर्वे एते भगवतो वामनस्य वास्तविका उत्तराधिकारिणः।" एतदुपरि सर्वे वयं कतिपयक्षणपर्यन्तं भृशमहसाम ।

अहम् – ज्ञातं, ज्ञातम् । अत एवाहं शंके यदिमां परम्परा प्रचालयितुमेवास्माकं नेतारो, मन्त्रिणः प्रधानमन्त्री चापि विदेशान् मुद्रासहायतां याचन्ते । मुद्रासहायतामेव न, कदाचन यन्त्राणाम्[1] सहायतां याचामहे वयम् । विश्व बैंक इत्याख्या संस्थापि याच्यते बहुधाऽस्माभिः । भवतु तादृशी याचना कदाचन ऋणरूपेण, कदाचन केवलं सहायतारूपेण ।

मत्पत्नी–ऋणरूपेण याचिता सहायता तु भवन्मते नाऽस्ति याचना । अन्यविधाऽपि सहायता यदि केनचन देशेन स्वेच्छया दीयते, का तत्र हानिः ? तत्र मा भवतु नूनं बन्धनम् ।

अस्माकं तु सहायताग्रहणस्य समय एव वर्तते बन्धराहित्यम्[2] । न तत्र समयो, बन्धनं वाऽस्त्विति ।

धीरेन्द्रः—सर्वं तिष्ठतु तत्समीचीनं प्रजावति । किन्तु याचना तु साऽस्त्येव । किं च याचकस्य सविधे कदाचनान्यः कश्चन याचकश्चेत्समायाति, सोऽपि तस्मात् किंचिल्लभते एव । अतो वयं यदा कदाचनान्येभ्यः प्रतिवेशिदेशेभ्यः[3] सहायतां प्रदाय कर्त्तव्यं पालयाम एव ।

धीरेन्द्रो महामहोपदेशकवद् बद्धपद्मासनो विषयं स्पष्टीकर्तुं पुनरूचे–"गौरवस्याऽऽश्चर्यस्य च विषयस्त्वयं विद्यते यदस्माभिर्याचनस्यान्येऽपि विविधा नवीनाश्च प्रकारा आविष्कृताः । यदा वयं परोपकारस्य किञ्चन कृत्यं चिकीर्षामस्तदा सहायतायै सर्वकारं (प्रशासनं) याचामहे, सर्वकारोऽ-

---

१. टेकनिकल असिस्टेंस इत्याङ्ग्लभाषायाम्

२. केनचिदपि बन्धनेन, आभारेण, विवशतया वा विना ।

३. नेपालादि निकटस्थलघुदेशेभ्य इत्याकूतम् ।

स्मभ्यं भिक्षां ददाति किन्तु तद् "अनुदानम्" (ग्रान्ट इन एड) इत्युच्यते । दानस्यैकः प्रकारस्तदिदम् "अनु"–"दानम्" । धनाधिपात् सामान्यजनात् वा द्रव्यानयनं "अंशदानम्" अथवा "चन्दा–दानम्" इत्युच्यते । अनाथालयस्या-नाथबालका गीतवादित्र-पुरःसारं वाद्यवृन्द(बैण्ड)मादाय जनान् याचितुं गेहाद् गेहं प्रयान्ति । कदाचन दानीय-चलचित्राणि प्रदर्श्य कदा-चिच्च दानीय ध्वजान् (फ्लैग) आसंजनीश्च (स्टिकर) विक्रीय वयं जनान् याचामहे ।"

अहम्—भगवन् ! एतत्सर्वं तु जनैः सुतरां सोढम् । किन्तु पाखण्ड भिक्षाया अपि कतिपये प्रकारा विनिःसृता, यैस्तु सर्वेऽपि भारतीयास्त्रा-सिता एव ।

एवंविधा भिक्षानटाः प्रत्यहं दृश्यन्ते ये रथ्यासु गच्छतो जनान् निरुध्य याचन्ते—'हन्त ! मद्गृहे कश्चन मृतः, और्ध्वदैहिकसंस्कारार्थं द्रव्यं नास्ति, किञ्चिद्दीयतां, अथवा 'मत्पत्नी पुत्र-प्रसूतवती, तदर्थं द्रव्यं दीयताम् ।' किं वा जलपूर (बाढ़) कारणाद् दुर्भिक्षकारणाद् वा क्षतिग्रस्ता ध्वस्तगृहा वयम्, साहाय्यं क्रियताम् । किञ्च 'कारणवशादत्र यात्रायै समायातस्य मे पटपुटक[1] छिन्नम् अतोऽद्य किञ्चिद्धनं दीयताम्, धनादेश[2] द्वारा गृहं गत्वा तत्परावर्तयिष्यामि' अथवा वयं याचनाद्रव्ये-णैव यात्रां चिकीर्षामस्तद् भिक्षा दीयताम् । किं वा 'गृहं मे दग्धं दीयतां किञ्चित्'–इत्यादि सर्वं कारणजातं नितरां मिथ्या भवति । प्रवञ्चनार्थं तदिदं सर्वं क्रियते, जनाश्च लुण्ट्यन्ते । किं बहूनां नानुभूतं कदाचन भिक्षा-नाटकस्यैतद्विधस्य दृश्यसौख्यम् ?

मत्पत्नी—एवंविधैरेवाऽऽडम्बरकारिभिः प्राचीन–भारतीयपर-म्परायां दानमाहात्म्यं, भिक्षायाश्च पावनत्वं धूलिसात्कृतम्, मृषायितम् तत् । न वयमद्य कञ्चन विश्वसिमः ।

धीरेन्द्रः—परं विश्वासस्यावश्यकताऽपि कास्ति ? किमिति भिक्षावृ-त्तिराश्रियेत ? अद्य हि श्रमस्य युगम् । श्रमः क्रियताम् । नैष्कर्म्यं खलु पातक

---

१. पटपुटकं=जेब छिन्नं=काट ली गई ।
२. धनादेश.=धनप्रेषः=मनीआर्डर इत्याङ्गलभाषायाम् ।

(आराम हराम है) इति निरन्तरमारट्यनाम्। अत एवैतेषु दिनेषु भिक्षावृत्तिनिरोधायास्माकं विधायका विधीन्[1] पारितवन्त। याचकान् श्रमं शिक्षयितु श्रमालयाः रात्रिविश्रामगृहा भिक्षुकालयाश्च निर्मीयन्ते।

तदैव घटीयन्त्रेण एकादश वादितानि। मत्पत्नी सहसाऽवोचत् "धीरेन्द्र–महाशय! अहमपि भवन्तं भिक्षामेकां याचे"।

"कां भिक्षाम्?" पृष्टं धीरेन्द्रेण।

"यदधुना एकादश वादितानि। तव पत्नी मम भगिनी शर्मिष्ठा भवन्तं प्रतीक्षमाणा भवेत्। तद् भवान् स्वगृहं प्रयातु। भवन्मित्रं वाजपेयिमहाशयोऽपि शेतामधुना। श्वः पुनरपि कार्यालयं गन्तव्यम्।"

"गच्छामि साम्प्रतम्। किन्तु प्रतिवेशिन्यै ऋणदानस्य भवत्याः सा समस्या समाहिता वा न वा?"

अहम्—"साऽपि समाहिता भविष्यति। यतो हि मत्ति मत्सविधे शत रुप्यकाणि। अस्माभिरधुनैव क्रीतस्य भूखण्डस्योपरि गृहनिर्माणाय ऋणप्रदानार्थं मया सर्वकारो याचितोऽभूत्। तदुपरि अष्टसहस्रमुद्राणां प्रथमो भवन-निर्माण-ऋण-भागोऽद्यैव मया लब्धः। तस्मादेव द्रव्यराशेरिदं दास्यामि।"

मदीय-द्रव्य-याचन-लाघवोपरि विस्मयाकुला मत्पत्नी निरुत्तरा मुद्रितमुखी चाऽतिष्ठत्। "भवताऽपि सर्वकारो ऋणं याचितः? तर्हि······ भवानपि·········" इत्यादि किञ्चिदस्पष्टमुदीरयन् धीरेन्द्र साट्टहासं गृहाद् बहिः निश्चक्राम।

---

[1]. विधानमण्डलेषु "अधिनियमितीः" कृतवन्त इति।

# हस्ति-दन्ताः

आचार्यः डॉ० नारायणशास्त्री काङ्कुरः विद्यालङ्कारः

आसीत् अस्माकं समितौ सप्त सदस्याः। अतः सा 'सप्तर्षि-मण्डली'-नाम्ना अपि व्यवह्रियते स्म। अस्याः अधिवेशनानि प्रतिमासं द्वितीय-शनिवारे भवन्ति स्म। भोजनपानानन्तरं नव-वादन-वेला अधिवेशनार्थं तिष्ठति स्म। एकघण्टा-पर्यन्तं कार्यं चलति स्म। समितेः अथवा अधि-वेशनानां कश्चन एकः अध्यक्षः पूर्वं नियतः न क्रियते स्म।

अध्यक्षतायाः सौभाग्यं विना पक्षपातं सर्वेभ्यः एव मिलेत्, अनेन दृष्टिकोणेन अध्यक्षं निर्वाचयितुं सर्वथा अभिनवा एव पद्धतिः आविष्कृता आसीत्। तदनुसारं सर्वे अपि सदस्याः एकस्यां कर्गद-चिटिकायां स्वं नाम विलिख्य चिटिकायाः गोलिकां निर्मान्ति स्म। पुनः सर्वाः अपि गोलिकाः एकत्र मेलयित्वा एकेन बालकेन एकया बालिकया वा तासु एका गोलिका उत्थाप्यते स्म। गोलिकायां यस्य नाम निःसरति स्म, स एव तस्य अधि-वेशनस्य अध्यक्षीय सिंहासनम् अलङ्करोति स्म।

पुनः अध्यक्षात् अतिरिक्ताः षट् सदस्याः तस्मिन् अधिवेशने अध्यक्ष-द्वारा सम्भाषणीयं स्वस्व-वाञ्छानुसारम् एकं विषयं कर्गद-चिटिकायां लेखित्वा चिटिकायाः पूर्ववत् गोलिकां निर्माय अध्यक्षस्य सम्मुखं स्थापयन्ति स्म। अध्यक्षः तासु गोलिकासु यथेच्छम् एकां गोलिकाम् उत्थाप्य उद्-घाटयति स्म। उद्घाटनेन यः विषयः पुरतः आयाति स्म, तस्मिन् एव विषये अध्यक्षेण तात्कालिक-निज-प्रतिभया भाषणं क्रियते स्म।

अनेन विधिना विना कम् अपि पक्षपातम् अधिवेशने अध्यक्षतां कर्तुं तथा तत्कालं समुपस्थिते विषये भाषणार्थं स्वप्रतिभां विकासयितुं सर्वेभ्यः समुचितः पर्याप्तः अवसरः मिलतिस्म।

एकस्य अधिवेशनस्य चर्चा अस्ति। तस्मिन् अधिवेशने पूर्वोक्त-विधिना अध्यक्षपदे श्रीमतः शशिशेखर-शास्त्रिणः वारः समायात। इतः

पूर्वं तेन कदा अपि अध्यक्षता कर्तुं सौभाग्यं प्राप्त न आसीत्। अतः तस्य तात्कालिक-भाषण-दान-प्रतिभातः अपि सर्वे अपरिचिताः एव अवर्तन्त। किन्तु सः सदा एव अन्येषाम् अध्यक्षाणां भाषणानां यथा तथा आलोचनां कर्तुम् अवसरं न त्यजति स्म। अतः तस्मिन् दिने सर्वे अपि सदस्याः तस्य तात्कालिक-भाषण-कौशलं परीक्षितुम् अत्यन्तम् उत्सुकाः अवर्तन्त।

श्रीमान् शशिशेखर-शास्त्री यदा समस्तानाम् अपि सदस्यानां करतलध्वनि-मध्ये अध्यक्षस्य सिंहासने विराजमानः सञ्जात, सम्मुखम् आनीतासु गोलिकासु च एकां गोलिकाम् उत्थाप्य उदघाटयत् अवाचयत् च तदा विषयः आसीत्—हस्ति-दन्ताः' इति। इमं विषयं वाचयतः एव श्रीमतः शास्त्रिणः मुखाकृतौ सदस्याः तस्य हृद्गतान् भावान् पठितुं प्रवृत्ताः। श्रीमान् शास्त्री महाशयः अपि क्षणद्वयं तु महान् गम्भीरः स्तब्धः च अभूत्।

गम्भीरतायाः कारणम् इदं न आसीत् यत् तस्य समीपे अस्मिन् विषये भाषितुं सामग्री न अवर्तत, प्रत्युत तेषु दिनेषु सर्वकारेण आपत्कालः उद्घोषितः आसीत्। अतः यत् किञ्चित् तेन भाषितव्यम् अग्रे पृष्ठे सम्यक् चिन्तयित्वा संयत-भाषायाम् एव भाषितव्यम्, अन्यथा सर्वकारस्य कोपभाजनतायाः आशङ्का अतिष्ठत्। पुनः श्रीमान् शशिशेखर-शास्त्री एकः सर्वकारीयः कर्मचारी अपि तु आसीत्। अतः इदं चिन्तनम् एव तं क्षणद्वयाय मौनिनम् अकरोत्। यद्यपि तस्मिन् अधिवेशने कश्चन पञ्चमः कर्णः न शृणोति स्म, तथापि भित्तीनाम् अपि श्रोत्राणि भवन्ति' इदम् आचार्य-वचनं तं सावधानं करोति स्म।

क्षणद्वये व्यतीते श्रीमान् शास्त्री महाशयः सिंहासनात् उत्थितः, अक्षिणी न्यमीलयत्, हस्तौ अबध्नात्, पुनः तारस्वरेण मङ्गलाचरणस्य इमान् श्लोकान् अपठत्—

ॐ यां मेधां देवगणाः पितरश्चोपासते। तया मामद्य।
मेधयाऽग्ने! मेधाविनं कुरु स्वाहा ॥१॥
मूकं करोति वाचालं पङ्गुं लङ्घयते गिरिम्।
यत्कृपा तमहं वन्दे परमानन्द-माधवम् ॥२॥
तद्दिव्यमव्ययं धाम सारस्वतमुपास्महे।
यत्प्रसादात् प्रलीयन्ते मोहान्धतमसश्छटाः ॥३॥

एवं हि मन्यतां, श्रीमता शास्त्रिणा मङ्गलाचरणं कुर्वता एव स्वीया सर्वा अपि सम्भापण-सामग्री स्वमस्तिष्के यथास्थानं सङ्कलिता आसीत्। मङ्गलाचरणं सम्पाद्य स्वीयां सस्मितां दृष्टिं सर्वतः सदस्येषु प्रक्षिप्य हस्ते भापण-विपय-चिटिका च गृहीत्वा एवं हि भाषितुं प्रवृत्तः—

सम्मान्याः प्रेयांसः सुहृद्वर्याः !

अद्यतन-विपयस्य क्षेत्रं महद् विशालं विद्यते। अस्मिन् विपये पूर्वम् अपि एकदा चिन्तितुम् अवसरः मिलितः आसीत्। परन्तु तदा सगाम्भीर्यं नैव चिन्तितवान्। एकवारम् अहं पत्न्या साकं शरज्ज्योत्स्ना धवलितायां निशायां प्रासाद-पृष्ठोपरि शयानः आसम्। पत्नी पादौ संवाहयन्ती अवतंत। तस्या. मृदु-मृदु-किसलय-कराभ्यां पादौ संवाहयन्तं मां कदा निद्रादेवी स्वोत्सङ्गे कृतवती ? न किम् अपि जाने।

स्वप्ने मम सम्मुखम् एकः प्रौढः जनः अपरेण प्रौढेन जनेन सह समुपस्थितः। सः सचरणस्पर्शं माम् अवादीत्—"गुरुदेव ! वन्दे"। तम् अनु तत्सहचरः अपि तथा एव आचरत्।

अहम् आपाद-मस्तकम् अमु न्यभालयम्। अपरिचिन्वन्तम् असौ माम् अनुमाय अब्रवीत्—"गुरुदेव ! अपि परिचिनोति मां श्रीमान् ?"

अहं सन्देह-दोलाम् एव अधिरूढः अकथयम्—"नहि बन्धो ! भवान् एव किं न मां स्व परिचाययति ? मम तु आयुपा सह स्मृतिः अपि दिनम् अनुदिनं क्षीयते।"

सः अवदत्—"गुरुदेव ! अद्यतः पञ्चत्रिंशद्-वर्ष-पूर्वं वाराणस्या संस्कृत-महाविद्यालये ब्रिटेन-निवासी अहं श्रीचरणानाम् अन्तेवासी सन् संस्कृतम् अशिक्षे। नामतः 'जेक्सनः' सन् अपि श्रीचरणैः सुधारित-नामा 'जयकृष्णः' श्रीमतां प्रियशिष्यः अस्मि।"

अहं स्व स्मृति-तन्तुषु बल यच्छन् अन्ते तं पर्यचिनवम्। वस्तुतः विदेशित्वात् संस्कृतं पठितुं तम् अनधिकृतं मत्वा अपरैः पण्डितैः परित्यक्तम् अहम् एव दुस्साहसं कृत्वा संस्कृत पाठितवान् आसम्।

अहम् अकथयम्—"अरे ! त्वं. जयकृष्णः असि !. कुशाग्र-बुद्धिः जयकृष्णः !! अनुशासन-रतः जयकृष्णः !! !" एवं कथयन् एव अनि-

च्छन् अपि तं प्रकम्पमानाभ्यां भुजाभ्यां गृहीत्वा वक्षसा समयोजयं महतीं प्रसन्नतां च अभिव्यक्ताम् अकरवम् । पुनः अपृच्छम्—"चिराद् दृष्टः असि । सम्प्रति स्वदेशे कं व्यवसायं करोषि ?"

सः अब्रवीत्—"गुरुदेव ! 'अंग्रेजाः ! भारतं त्यजत' भारतीया एतद्-आन्दोलन-प्रसङ्गे अहम् अपि स्वदेश-बन्धुभिः सह मातृभूमितः अपि गरीयसीं, देवैः, अपि सदा समीप्सिताम् एतां भारतभूमिं त्यक्त्वा स्वदेशं न्यवर्त्ति, तदा प्रभृति एव च एकस्मिन् विश्वविद्यालये भारतीय-संस्कृत-संस्कृति-विभागे संस्कृत-प्राध्यापकः अस्मि ।"

अहम् अवोचम्—"साधु, साधु । अधीत-विद्यस्य उपयुक्त एव विनियोगः । इदानीम् अत्र आगमनेन तु केनचन विशिष्टेन एव प्रयोजनेन भवितव्यम् । अथ अयं महाशयः कः ? किम् अस्य अपि परिचयः कारयितव्यः ।

सः उदतरत्—"आं गुरुदेव ! गत-सप्ताहे वाराणस्यां सम्पन्ने विश्वसंस्कृतसम्मेलने निजदेशतः प्रतिनिधि-रूपे भाग ग्रहीतुम् उपस्थित अभूवम् । अयम् अस्ति मम एव सहृदयः सुहृद्वर्यः भारतीयभाषानुसन्धानाधिकारी । संस्कृतज्ञानम् अपि अस्य समीचीनम् अस्ति । वर्तमाने विश्वस्मिन् अपि विश्वे प्रसृतं विषमयं वातावरणम् उन्मूलयितुं तत्स्थाने च सुख-शान्ति-साम्राज्यं संस्थापयितुं संस्कृत-वाङ्मयस्य एव सर्वत्र प्रचुरं प्रचार प्रसारं च अभिकामयते । भारतेन अस्यां दिशि तज्जन्मस्थल्यां तदर्थं क्रियमाणान् प्रयत्नान् योजनाः च अवगन्तुम् अयम् अपि सम्मेलन-प्रसङ्गेन मया सह आयातः अस्ति । भारते अस्य आगमन प्रथम-वारम् एव सञ्जातम् ।"

अहम् अपृच्छम्—"अपि सिद्धः युवयोः मनोरथः ? अपि समधीताः भारतीयाः संस्कृत-प्रचार-प्रसार-योजनाः ?"

जयकृष्णस्य सुहृद् अवादीत्—'पूर्णतः नैव, किन्तु तण्डुल-न्यायेन तद्विषये यत्किञ्चित् अवश्यम् अवगतम् ।"

अहं पुनः अपि अप्राक्षम्—"अपि ततः सन्तोषः समजायत ?"

सुहृद् उदतरत—"कस्मिंश्चित् अंशे सन्तोषः, कस्मिंश्चित् अंशे

च न। सर्वकारः एकतः संस्कृतस्य अभ्युदयं चिकीर्षति, अपरतः च शिक्षायां तस्मै समुचितम् अपि स्थानं न दित्सति। एकतः सः संस्कृतस्य गौरवं गायति, अन्यतः च तस्य प्रचार-प्रसारार्थं पर्याप्त-धन-राशिम् अपि न व्ययी-करोति। संस्कृत-शिक्षकेभ्यः अन्यभाषा-शिक्षक-तुल्यं वेतनं दातुम् अपि सः कृपणतां करोति। अतः एव तु आजीविका-दृष्टितः संस्कृतपण्डिताः स्वसन्ततिम् अपि संस्कृतं न पाठयन्ति। सम्मेलन-मञ्चे संस्कृत-गुण-गायकाः कियन्त सर्वकारीयाः अधिकारिणः स्वयं संस्कृतं जानन्ति ? कियन्तः वा ते अन्यान् संस्कृतं शिक्षितुम् उपदिशन्तः अपि स्वयं संस्कृतं शिक्षितुं प्रय-तन्ते ? अथ, कियन्तः वा ते संस्कृत शिक्षणसंस्थासु स्वकीयान् सन्तानान् प्रवेशयन्ति ?"

जयकृष्णः स्वसुहृद्-वचनं समर्थयमानः अब्रवीत्—"गुरुदेव ! अद्य-तने भारतीये संस्कृत-परीक्षा-पाठ्यक्रमे संस्कृतेतर-विषयाणाम् इयान् अधिकः सन्निवेशः कृत अस्ति, यत्, तदग्रे संस्कृतपाठ्यक्रमः गौणः इव नगण्यः सञ्जायते। एवं तु पूर्वम् अपि कदाचन न अविद्यत। तस्मात् उत्तीर्ण-सर्वोच्च-परीक्षाः अपि स्नातकाः शुद्ध-संस्कृते लेखितुं भाषितुम् अपि च सर्वथा असमर्थाः अस्माभिः अवलोकिताः। भाषायाः विषये यदा तेषाम् ईदृशी दुर्दशा विद्यते, तदा किं कथनीयं तेषां विषय-नैपुण्यस्य विषये ?"

जयकृष्णस्य सुहृद् तत्र एव अग्रे अवादीत्—"पुनः ये केवलं संस्कृतम् एव शिक्षितुम् इच्छन्ति, तेषां कृते संस्कृतप्रचारकम्मन्येन सर्वकारेण ततः प्राप्तानुदान-संस्थाभिः वा एव कुत्र व्यवस्था कृता अस्ति ? तन्त्र-मन्त्रादीनां शिक्षायाः प्रबन्धः तु संस्कृत-संस्थासु अपि न मिलति। अथ काभिश्चित् संस्कृत-सेवि-संस्थाभिः प्रकाशिताभ्य एव संस्कृत-पत्र-पत्रिकाभ्यः कियत्यः सर्वकारीयाः अर्द्ध सर्वकारीयाः च संस्कृत-संस्थाः ग्राहिकाः भूत्वा प्रोत्साहनं ददति ? संस्कृत-नाम्ना सर्वकारतः प्रचुर-धन-राशिं गृहीत्वा अपि तद्राशेः पूर्णोपयोगः संस्कृत-हिते न कृत्वा अन्यत्र क्रियते, इतः अधिकः असदाचार कुत्र द्रष्टुं प्राप्स्यते ? न जाने, एतद्राशि-वितरकाः अपि अधिकारिणः केन हेतुना अशक्ताः सन्तः इमम् अन्यायं न निवारयन्ति ?"

जयकृष्णः सुहृद्वचनं समर्थयमानः अकथयत्—"आम्, गुरुदेव ! मत्तः यदि सत्यं पृच्छ्येत, तर्हि संस्कृतस्य विकासे बाधकाः यथा स्वयम्

असंघटिताः निहित-स्वार्थाः संस्कृतज्ञाः सन्ति, तथा तदितरे न सन्ति। माम् एव किं न पश्यन्ति गुरुचरणाः ? यदि श्रीचरणाः मां संस्कृतं शिक्षयितुं कृपां न अकरिष्यन्, तर्हि किम् अहम् अस्मिन् जन्मनि संस्कृतज्ञः भवितुम् अशक्ष्यम् ?"

मां मौनिनम् अवलोक्य जयकृष्णस्य सुहृद् अवादीत्—"अस्मिन् प्रवासे अस्माभिः केचन सुद्धाः संस्कृतभक्ताः अपि दृष्टाः, ये संस्कृतस्य सर्वत्र प्रसारम् अभिलषन्तः तत्र स्वकीयं सर्वविधं सहयोगम् अपि प्रयच्छन्ति। उदाहरणरूपे 'अधिकार'-सम्पादकानां त्यागमयी निःस्वार्था संस्कृत-सेवा सङ्केतयितुं शक्यते। ते 'कानोता भवन, हल्दियों का रास्ता, जयपुर–३०२००३' अस्मात् स्थानात् प्रकाश्यमाने स्वकीये 'अधिकार' नामके दैनिक-हिन्दी-पत्रे एकं 'संस्कृत-समाचार'-स्तम्भं नियतं कृतवन्तः सन्ति, तस्मिन् च संस्कृते एव लिखितान् समाचारान् प्रकाश्य प्रतिदिनं लक्षशः जनेषु संस्कृतस्य प्रचारप्रसारयोः अद्वितीयम् अनुकरणीयं च कार्यं कुर्वते। तेषाम् अस्याः अनुपम-सेवायाः उपलक्ष्ये संस्कृत-पक्षपातिना सर्वकारेण ततः प्राप्तानुदानसंस्कृत-संस्थाभिः च कियत् कीदृशं च प्रोत्साहनं दीयते, इदं तु न जाने। परन्तु इदम् अस्ति अवश्यं सुन्दरं कर्म। समस्तैः अपि संस्कृत-पत्रैः सम्मिल्य यत् कर्म कर्तुं न पारितं, तद् 'अधिकार'-माध्यमेन एकलाः एव सम्पादकाः अनायासं निष्पादयन्तः सन्ति इति जागतिकेषु आश्चर्येषु इदम् अपि एकम् अभिनवम् आश्चर्यं स्वीकरणीयम्।

प्रेयांसः बन्धवः ! यदा किञ्चित् अन्यत् अग्रे सः कथयितुम् उद्यतः एव आसीत्, यत्, न जाने कुतः एकः मत्कुणः आगत्य मां पृष्ठे अदंशत् ? तेन च मम सः स्वर्गीय-सुख–सन्निभः मधुर–मधुरः स्वप्नः झटिति एव भग्नः अजायत। किन्तु अनेन स्वप्न–वृत्तान्तेन संस्कृत-प्रचारक-प्रसारकम्मन्यानां 'हस्तिदन्तता' तु सम्मुखं समायाता एव। किं बहुना ?

इति सम्भाष्य श्रीशशिशेखर शास्त्रिमहाशयः अस्मासु सर्वेषु सदस्येषु यद्धापण–कौशलं करतल-ध्वनिना सह सहर्षं स्वीकृतवत्सु स्वीयां सस्मितां दृष्टिं पुनर् अपि विकिरन् स्वासने समुपविष्टः।

ततः तद्–अधिवेशनस्य आतिथेयेन श्रीरामनाथ द्विवेदिद्वारा उष्णपेयेन, मिष्टान्नेन लवणान्नेन च सत्कृताः वयं श्रीशशिशेखर-शास्त्रिणः भाषण-नैपुण्ये पृथक् पृथक् चर्चां कुर्वन्तः स्वं स्वं गृहं प्रति प्रस्थिताः इति।

# चन्दनमुनिकृतं पद्यसाहित्यम्

डॉ० सत्यव्रतः

हरियाणाप्रदेशान्तर्गते सरस्वतीपत्तने 'सिरसा' इति प्रथिताख्ये नगरे १९१४ खिष्टाब्दे लब्धजनुरिभ्यचरस्य केवलचन्द्रमुनेस्तनुजनुश्चन्दन महाभागो वैश्यवंशसुलभं कुलागतमदभ्रं वैभवमृद्धिं चैकपदे विहायाल्पीयसि वयसि तेरापन्थाभिधानस्य शासनस्याष्टमाचार्येभ्यः कालुगणिभ्यो भागवतीं प्रव्रज्यां परिगृह्य मुनित्वमापेदे। पदवाक्यप्रमाणज्ञेभ्यो विद्वद्धौरेभ्यो विधिना संस्कृतं शब्दशास्त्रं न्यायं वेदान्तमार्हतदर्शनं च सविशेषं स चिरं पर्यशीलयत् नदीष्णतां च तत्राविन्दत्। वयसः पञ्चाशं वर्षमनुभवन् स प्राकृतगिरमपि सोद्योगमधीत्य तत्र पारीणोऽजायत 'सक्कयं पागयं चेव पसत्थ इसिभासि अं' इत्यागमिकं वचश्चान्वर्थं चकार। इदानीं सप्ततिकल्पोऽयं मुनिपुंगवो विविधविषयावगाहिना वैदुर्येण गाम्भीर्येणौदार्येण च तुङ्गं किमपि पदं चुम्बति साम्प्रतिकेषु संस्कृतकाव्यकारेषु। प्राकृतवाचा ग्रन्थकर्तृषु विरलविरलेष्वाधुनिकेष्वपि स कथमपि न हीयते। संस्कृत-प्राकृतगीर्भ्यां स काले काले गद्यपद्यात्मकान् त्रयोदशग्रन्थान् प्राणयत्। तद्दृब्धानां गद्यग्रन्थानां सविस्तरं विवेचनमस्माभिरन्यत्र व्यधायि[1]। मुनिवर्य्याणां पद्यसाहित्यम् अधिकृत्य प्रवर्ततेऽत्र कापि चिन्ता।

आपातबन्धुराणां पौद्गलिकपरिणामानां पर्यन्तदारुणत्वं कर्मणः प्रभुत्वं तत्फलस्यावश्यम्भावित्वं प्रव्रज्यायाः सुखकरत्वं च प्रख्यापयन्ति वृत्तान्युपजीव्यापि अर्जुनमालाकार-प्रभवप्रबोधाभिनिष्क्रमण-रयणवालकहादयः मुनिवर्य्याणां गद्यग्रन्थाः कमपि साहित्यिकं गौरवं वैभवं चावहन्ति। तत्पद्यसाहित्यं च प्रायेण निरवशेषधर्मबुद्ध्या व्यरच्यत येन तस्य कानिचित् काव्यानि स्वाध्यायग्रन्थत्वे प्रचरन्ति, इतराणि जीवनानुभवस्य निकषायन्तेऽपराणि च दर्शनकक्षां विगाहन्ते।

---

१. स्वरमंगला, ३/४, ६/१, ६/२.

संवरसुधा —संवरसुधानामधेयं[1] गीतिकाव्यं चन्दनमुनिकृतानां काव्यानां धुरि कीर्त्यते । आर्हतदर्शने कर्मपुद्गलानामागमनमार्ग आस्रवोऽभिधीयते । ते प्राधान्येन पञ्चसंख्याकाः सन्ति । तन्निरोधकाः संवरा अपि पञ्चसंख्यामश्नुवन्ति । स्थानांगादिषु येऽपरे पञ्चदश आस्रवाद्भेदास्ते योगाभिधे मुख्यास्रवेषु पश्चिमे समाविशन्तीति ते संभूय विंशतिगणनामियन्ति तदपकर्तारः संवरा अपि च तां सख्यामञ्चन्ति ।

विंशतिगीतिकात्मके संवरसुधाभिधाने ललितमधुरे काव्ये कविवर्य्येण चन्दनमुनिना गीते गीते स स संवरो नवनीतहृद्यया माध्वीकास्वाद्यया वाचा प्रत्यपादि । गीतिका इमास्तेन तेन रागेण गीयन्ते, येन काव्यमाधुर्यं परिबृंहणमयते । प्रकाशाख्ये सन्दर्भे निरूपितः आस्रवगीतिकाया भूमिकां सूत्रयति । प्रतिप्रकाशम् आस्रवं निधाय गीतिकायां तन्निरोधकं संवरं प्रतिपाद्यमानमिदं काव्यं चर्पटपञ्जरी-शिवमहिमादिदर्शनपराणां स्तोत्रकाव्यानां कक्षां विगाहते, विषयलिप्तान् च तत्कर्दमादुद्धृत्य बहूपकरोति तेषाम् । अध्यात्मपरिप्लुतमिदमधीत्य कोऽप्यात्माभ्युदयोऽनुभूयते वाचकैः। आत्मश्रेयस्कराः सन्दर्भाः काव्ये प्रतिपदं दृष्टिपथमवतरन्ति । मिथ्यात्वं गर्हमाणः कविराह—

आत्मरुचिर्जागर्त्ति न कर्ह्यपि, पापे रमते स्वान्तम् ।
विभवविलासं हास्यं लास्य कलयति सुतरां कान्तम् ।।
हा हाऽनन्तकालतो जीवो मिथ्यादर्शनलीनः ।
नाद्राक्षीद् विमलं निजरूपं सहजानन्दविहीनः ।।

प्रमादो हि महान् रिपुः । त निरस्य व्यवहरमाणो जनः सुखप्रकर्ष लभते ।

विना प्रमाद चर भारण्डविहंगमवत्प्रभुघोषः ।
संवरसुधापानतो भावी प्रचुरसुखानां पोषः ।।

सर्वंकृच्छ्मूलं परिग्रह इति विचार्यापरिग्रहिभिर्जनैर्भाव्यम् । ममत्वमित्यनर्थान्तरं परिग्रहो वस्तुरूपं व्यपोहतीति शास्त्रज्ञैरस्य मूर्च्छेत्यपराख्या प्राणायि ।

---

१. १९७० ख्रिष्टाब्दे चूरुस्थिताद् आदर्शसाहित्यसघात् प्रकाशिता ।

'मूर्च्छा परिग्रहः शास्त्रज्ञैः स्पष्टमुद्‌घुष्टं रे।
वस्तु वस्तुरूपे विराजते तद्धि ममत्वाद् दुष्टं रे ॥

आत्मोत्थानपोषिका दुःखशोषिका ईदृश्यः कृतय एव चिन्ताभृतानां विषयमग्नानां स्वार्थान्धानां श्रेयसे भवन्ति। यत्सत्यं संवरसुधा स्वाध्यायग्रन्थेन तुलामारोहति। नात्र विलोक्यन्ते परम्परीणा रसा अलंकारा वा परं तेऽध्यात्मरसस्य षोडशीं कलामपि न स्पृशन्ति, यद्धारा काव्ये आद्यन्तमनारतं प्रवहति। प्राणवायुवत् काव्यान्तर्वर्ती अनुप्रासः संवरसुधायां किमपि रामणीयकं जनयति गेयतां चास्याः प्रगुणीकरोति। शास्त्रशासनोन्मुक्तमप्यध्यात्मकलितं काव्यं कमभ्युदं लब्धुं पारयतीत्यस्य संवरसुधा निदर्शनतामेति।

प्रास्ताविकश्लोकशतकम् —भर्तृहरिप्रक्रान्तामितरैश्च कविपुङ्गवैः प्रवर्धितां शतकसरणिमनुरुध्य चन्दनमुनिना शतकाभिधं काव्यद्वयं प्रणीयत। प्रास्ताविकश्लोकशतकं[1] तत्कृतां विविधविषयस्पृशां मुक्तकपदभाजां प्रायेण शतसंख्याकाना पद्यानां सचितिरस्ति। कानिचित्पद्यान्यत्र धार्मिकविषयान् स्पृशन्ति, अपराणि दर्शनमवगाहन्तेऽन्यानि व्यवहारात्मकानि तत्त्वानि चुम्बन्ति, कानिचिच्चोपदेशपराणि। साधनाक्षण उदारदृक् कविर्जगति यद् व्यलोकयत्तदवलम्ब्य च यद् व्यमर्शयत् तस्य सारं कलया शतकेऽस्मिन् निधातुं प्रायतत। अव्याजमनोहरया भाषया हृद्यया च शैल्या विरचितोऽयं श्लोकसन्दोहो बहूपकरोति लोकानाम्। यदत्र कविना प्रत्यपादि न तत्सकलमभिनवम् अश्रुतपूर्वं वा। कालिदास-भर्तृहरिप्रभृतीनां प्राचां कवीनां भावान् कविरुपजीव्यतामनयत् केषुचित्पद्येषु। न तदमीषां गौरवं व्याहन्ति।

शतके काश्चिदन्योक्तयोऽतितरां रुच्या आस्वाद्याश्च। जनो न चाकचिक्येन महिमानं विन्दति। क्षान्तिर्हि कार्यं साधयति गौरवं च प्रापयतीति काचव्याजेन साधु प्रतिपादितम्—

काच ! त्वया किं करणीयमस्ति
सोढुं न शक्तस्तनुमाहतिं यत्।
न चाकचिक्याल्लभसे महत्त्वं
सहिष्णवो मूल्यमवाप्नुवन्ति ॥४६

[1]. १९७१ ख्रिष्टाब्दे कलिकातातः प्रकाशितम्।

'हृदि विषं वाचि च मधु' वहन्तो द्विजिह्वा लोकापकारेण दम्भे च वाक्कर्कशेभ्योऽतिरिच्यन्ते इति काकोक्तिमिषेण प्रख्यापयन्ति कविः।न वायसस्वरो खरोऽपि न लोकस्य व्याघाताय। पिशुनानां चटुवचांसि च मधुराण्यपि परेषां मर्माणि विध्यन्ति—

खरः स्वरः प्राकृतिको मदीयो
मया परेषां विकृतं कृतं किम्?
येऽन्यान् चटूक्त्या बत! वंचयन्ते
तेभ्यस्त्वहं लक्षगुणोऽस्मि साधुः ॥४९

काव्येऽत्र विविधाः शिवा भावा अनारतं जृम्भमाणा विलोक्यन्ते। क्रियापेतं ज्ञानं वन्ध्यं तदनपेतं च मोक्षाय कल्पते (४)। चपलमतयो नेह जगति किंचित् समासादयितुं पारयन्ति। ते कार्ये कार्ये व्यामुह्यन्ति। स्थिरप्रत्ययपरीतोऽध्यवसायो हि सिद्धिमावहति कर्मणि (१२)। वर्णो न कस्मै गौरवमर्पयति न च तद्गुणान् व्यपोहति। कस्तूरिका कृष्णापि अनर्घा बहुमानास्पदं च। पीता च हरिद्रा गुणैस्तस्याः कलामपि न स्पृशति (३०)।

कथं नरो मनुजतां विहाय पशुपदवीमारोहतीति सम्यग् व्यमर्शि कविनात्र पद्ये—

स्नेहो न जागर्ति शिशुं निभाल्य
प्रीतिर्न जागर्ति निभाल्य भार्याम्।
भक्तिर्न जागर्ति गुरुं च दृष्ट्वा
स मर्त्यरूपः पशुरेव भूमौ ॥७०

ईदृशेन भव्यभावोच्छ्वासेन काव्यं प्राणिति। शतकेऽस्मिन् विद्यन्ते काश्चिन् माधुर्यापन्नाः सूक्तयो याः कवेः सूक्ष्मेक्षिकां लोकबोधं च प्रथयन्ति।

अनुभवशतकम्—मधुविषसंयुता उच्चावचा हेयाहेयाश्च भावा अनुपदं समुन्मिषन्तीह जगति। मानववासनया विपरिणममानास्ते एव अनुभवपद्यां प्रपद्यन्ते। कविवर्यो मुनिचन्दनो यानभव्यान् भव्यान् वानु-

भवान् काले कालेऽविन्दत् तेषु कांश्चिद् अनुभवशतकनामधेये[1] एकोत्तर-शतपद्यात्मके काव्ये विदधौ।

शिष्येण किं करणीयम्, किं गुरोः कर्त्तव्यतामेति, कथं परा निजायन्ते स्वजना वा परायन्ते, विपदि कथं व्यवहर्त्तव्यं सम्पदि च कथमाचर्यं, कथ लोकोऽत्र सिद्धिमापद्यते इत्यादीन् नैकान् विषमान् लक्ष्यीकृत्य अनुभूतान् अनुभवान् शिखरिणीछन्दैः संदृब्धवान् कविरिह शतके। अत्रोपन्यस्ताः सर्वेऽनुभवा न प्रशस्या न वा चमत्कारिणोऽसाधारणा वा। काव्ये द्वधाः केचिदनुभवाः सामान्यकक्षां गाहन्ते, केचिदनुभूतचरा परम् अपरे केचिन्निश्चप्रच श्लाघ्याः। इमे एवास्यै काव्याय गौरवमर्पयन्ति।

असत्तुतचरे जने प्रीतिर्न कार्या। यो विरोधं विषहते स एव प्रेमा—

> विरोधं दृष्ट्वा यत् स्खलति नहि सत्प्रेम सुचिरं।
> न झंझावातैर्यः पतति तरुराट् सोऽत्र फलवान्॥३६॥

अस्मिन् शतकेऽपि काश्चन सूक्तयः कविना सविवेकं प्रयुक्ता। दृष्टान्तत्वेन विनिहितास्ताश्च काव्येऽभिख्यां कामपि जनयन्ति। काश्चिद् विदां विनोदाय स्युः—

> अपन्थाः पन्थाः स्याद् यदि हृदयनिष्ठा दृढतरा।३४
> न विज्ञाः शोभन्ते समयगतिबोधाद् विरहिताः।८५
> समाप्तो गण्डूषे भवति न समुद्रः कथमपि।८६

**वर्द्धमानशिक्षासप्तशती**—मार्कण्डेयपुराणान्तर्निहितां दुर्गासप्तशती शाक्तधर्मसर्वस्वामुपजीव्य, काले सप्तशतश्लोकात्मिकाः सप्तशतीसंज्ञां बिभ्राणाः काश्चित् कृतयः प्राणीयन्त। भगवद्गीतापि सप्तशतपद्यानि परिष्वजते परं न सा तदाख्यां भजते। अत्र हि संवादपरया विमर्शपुरस्सरया च शैल्या दर्शनस्य सारभूतं तत्त्वं कविना समासेन समाहारेण च प्रत्यपादि। भगवद्गीतायाः संवादविवेचनात्मिकां पद्धतिमनुसृत्य प्रथितयशा मुनिचन्दनो वर्द्धमानशिक्षासप्तशतीति[2] नामधेयां कृतिं विरच्य भृशमुपकृतवान् आर्हतदर्शन-प्रतिपित्सुन्।

१. चूरूस्थिताद् आदर्शसाहित्यसंघात् १९६० ख्रिष्टाब्दे प्रकाशितम्।
२ १९७६ ख्रिष्टाब्दे ग्वालियरतः प्रकाशिता।

चरमतीर्थाधिपतेर्महावीरस्वामिनो विचारदर्शनं तद्गणधराः प्राकृत-वाचा येषु ग्रन्थेषु न्यबध्नन् ते आगमा इत्युदीर्यन्ते। आचारविचारात्मकस्य तत्र निहितस्य जैनदर्शनस्य नवनीतं निर्मथ्य आर्हतदर्शनचञ्चुः कविवर्य्यो मुनिचन्दनो विदां बोधाय तदिह काव्ये वर्द्धमानशिक्षारूपेण न्यधात्। स्फटिकावदातया वाचा हृदयंगमया च शैल्या प्रणीतेयं सप्तशती जैनदर्शनस्य प्रमुखानि तत्त्वानि सुष्ठु व्याकरोति। यत्सत्यं दशवैकालिक-उत्तराध्ययनसूत्र-स्थानांग-सूत्रकृताग-आचारांगादीनां जिनदर्शनजीवातुभूतानां ग्रन्थानां सारोऽत्रैकपद उदितः। को धर्मः किंस्वरूप आत्मा, ज्ञानकर्मणोः कः सम्बन्धः, किं कर्म, को द्रव्यरूपः, के कषायाः, किं स्वरूपस्त्यागः, किं किं च दुःखम्, कानि मदस्थानानि, कथं व्रतिना चर्य्यं कथं च गृहिणेत्यादयो विषया सप्तशत्यां वैशद्येन समासेन च सम्यग् व्यामृष्टाः। अश्वघोषवत् कविश्चार्दनन्दिनजीवनसुलभैर्दृष्टान्तैर्दार्शनिकान् सिद्धान्तान् तथा हेलया व्याकरोत् यथा निगूढा अपि ते झटिति बुद्धिमारोहन्ति दृष्टान्तपुरस्सरत्वाच्च स्मृतिपथान्नापयान्ति। आर्हतदर्शनप्राणभूता जीवाजीवादयो नव पदार्थाः कविना तडागस्य निदर्शनेन व्यावर्णिता येन तत्स्वरूपः सपदि प्ररूपितोऽभवत्—

> जीवस्तडागरूपोऽयमतडागरूपस्तथेतरः ॥३७/७
> वहमानं जलं पुण्यं, पापं कलुषितं हि तत्।
> नालिकारूपमाप्तोऽसावास्रव पुण्यपापयोः ॥३७/८
> वह्न्नीरावरोधो हि संवरश्चास्रवेतरः।
> उदञ्चनं जलादीनां, शोषणं निर्जरा पुनः ॥३७/१०
> जलस्य संचयो बन्धो मोक्षो रिक्तं सरस्तथा।
> इत्थं तडागदृष्टान्तात् सम्यग्बोधः प्रजायते ॥३७/१०

अद्यत्वे यद् दुर्मोचं जातिबन्धनं विलोक्यते तेन निकृता जडीकृताश्च लोका कं कं कष्टं नासादयन्ति। जैनदर्शनं जातिवादं तस्यातात्त्विकतया पराकरोति। मुनिवर्य्यैर्जातिवादस्यान्तर्गडुता केषुचिदेव पद्येषु साधु व्यावर्णि। कर्मणैव जनोऽपकर्षमुत्कर्षं वा विन्दति न जन्मना।

> आचरणं हि यस्योच्चं स एवोच्चं स एवोच्चतरो नरः।
> नीचाचरणभाग् नीचो न सन्देह्यं मनागपि ॥११०/६

समेषु सम्प्रदायेष्वसुभूतमेकमेव तत्त्वमुच्छ्वसिति यत्तेषां भेदमप कृत्य अभेदमासूत्रयति। सम्प्रदायभेदेन न भिद्यते धर्मः। सम-हर्म्य-कुट रेषु किमाकाशं भिदां भजते ? दीपो मृमण्यो वा स्यात् सौवर्णो वा रौप्यो व सर्वेषु ज्योतिरेकं राजते। धर्मो हि प्राणिनां सर्वस्वम्। तस्माद्धते सर्व मन्तर्गडु।

धर्मे विनष्टे सकलं विनष्टं धर्मे सुपुष्टे सकलं सुपुष्टम्।
धर्मेण शून्यं सुतरामपुण्यं किं जीवनं तन्मरणेन तुल्यम् ॥१६/३

आत्मज्ञानम् आत्मदर्शनाय कल्पते। देहं सर्वस्वं मन्यमानो देह भृत् पदे पदे मुह्यति तत्त्वाच्च हीयते। यो हि आत्मदेहयोर्भेदं जानाति स सम्यग् जानाति। अस्यैकस्य बोधः सर्वस्य बोधाय।

आत्मज्ञानं विना नान्यज्ज्ञानं माहात्म्यमञ्चति।
आत्मज्ञानं महज्ज्ञानं सर्वज्ञानस्य कारणम् ॥१३२/८
यदा हि भेदविज्ञानं येषां संजायतेतराम्।
तदात्मदर्शनं सम्यक्तया तेषां विभासते ॥१३२/१०

क्रियाज्ञानयोः समवाय एव श्रेयसे। न केवला क्रिया सिद्धिमावहति न केवलं ज्ञानम्। ज्ञानमन्तरेण क्रिया गताक्षा क्रियाहृतं च ज्ञानं पंगु। नान्धः साहाय्यं विना चलितुं प्रभवति न पंगुः।

क्रिया विबोधा कथिता गताक्षा क्रियाहृतं ज्ञानमपीह पंगु।
सम्मील्य चोभे हि सुलब्धशोभे नैकेन चक्रेण रथः प्रयाति ॥३८/२

वर्द्धमानसप्तशत्यामपि कविना काश्चित् सरसाः सूक्तयः प्रयुक्ताः। ता अत्र रामणीयकमावहन्ति—

१. मुक्ते निर्मोके हि नहि फणभृद् निर्विषो भवति। ५०/६
२. तप्तभूमौ कथंकारं प्रस्फुटेदंकुरावलिः। ६६/४
३. प्रथम सुखमारोग्यम्। ७४/२
४. स्वरक्षा हि परस्य रक्षा। ६८/४
५. आत्मज्ञानं महज्ज्ञानम्। १३२/८

दृश्यन्तेऽत्र केचित् प्रामादिकाः प्रयोगाः। तद् वर्णितुं (पृ. ४), वर्ण्यपदे विनेयम् (पृ. ४), को धर्मपन्थाः (पृ. १२), संयमपथि (७४/७), साधुपथिस्थितस्य (२३२/२), कथं विवर्तेत (पृ. ६०), चेन्न प्रपद्येत (१००/१०), कस्मिन् काले फलग्राहिः (१८८/४) इत्यादयः प्रयोगाः पाणिनीयं शास्त्रं व्याघ्नन्ति। गच्छतः स्खलितानीव ते सह्याः।

क्वचिद् दुष्टापि वर्द्धमानशिक्षासप्तशती गुणजुष्टा। आर्हतदर्शनामावोधाय च सुभगंकरणीति विमतिं न विषहते।

उपदेशामृतम् —श्रावकानां स्वाध्यायग्रन्थत्वेन प्रणीते षोडशचषकात्मके उपदेशामृताख्ये काव्ये कविवर्यैश्चन्दनमुनिभिर्जीवने यदधीतमनुभूतं दृष्टं विमृष्टं च तस्यामृतायमानं सारं संचित्य समासेन न्यधायि[1]। प्रथमो हि चषकः काव्यकर्तुरौदार्यं सत्यान्वेषणमाग्रहहीनत्वं च प्रकामं प्रख्यापयति। सम्प्रदाये सम्प्रदाये न तत्त्वं भिद्यते सिद्धान्ते च सत्यं विद्यते। यस्य पक्षैकग्राहिणी बुद्धिर्न स तत्त्वं पश्यति। महात्मनः सर्वत्र समतां सूत्रयन्तीति भव्योक्तिः काव्यस्य प्रस्तावनामियर्ति। द्वितीये चषके सुखदुःखयोर्विवेचनपुरस्सरो विमर्शः कविना व्यधायि। सुखवद् दुःखमपि जनस्यानन्दमावहति। शाणोत्कषणमासाद्य हि माणिक्यं सम्राजां मूर्ध्नि पदं करोति। निजदोषविमर्शेन परगुणग्रहणेन च जनः पारमार्थिकं ज्ञानं विन्दतीति तृतीयचषकस्य विषयतामुपैति। ज्ञानवन्ध्या क्रिया न हितावहेति तयोः समवायः साधु—

क्रिया तदैव सफला यदा ज्ञानान्विता भवेत्।
बाणप्रक्षिप्तिरन्धानां किमु लक्ष्यं भिनत्त्यहो ॥३/१५

अतः परम् आगमोक्ता अविरति-कषाय-प्रमादादयो रोगास्तत्प्रतीकारोपायाः, तृष्णावैषम्यं दानादिवृत्तयश्च सविस्तरं व्यावर्णिताः। ज्ञानेन्द्रियाणां विमर्शे विद्यते किमपि चर्वितचर्वणम्। विस्तारोऽयं तद्गाम्भीर्यं व्याहन्ति। दानविमर्शोऽपि न तस्माद् दोषान्मुच्यते। पञ्चदशचषकान्तर्हितं मृत्युविवेचनं युज्यते रामणीयकेन केनापि। महात्मनः सहासं मृत्यु-

[1] यच्छ्रुतं पठितं दृष्टं चानुभूतं विभावितम्।
तदमृतमयं सारं मयकाऽत्र वितीर्यते ॥१/४

मर्चन्ति यस्य सुकृतानां पाथेयोऽस्ति मृत्युरतस्य भियं न जनयति। यश्चाजन्म पातकानि करोति स मृत्युकाले भयाकुलो भवति। तस्माद् धर्मः कर्त्तव्यो य इहामुत्र हितावहः।

अनुष्टुब्छन्दोभिर्विरचितमिदम् उपदेशामृतं शिक्षापरं काव्यं काव्यधर्मान् नाङ्गीकुरुते। 'न भाषासौष्ठवं तादृग् न चालंकारगौरवम्। भावानां न च गाम्भीर्यं न काव्यगणनाऽऽगतम्' (१६.२०) इत्युदीर्य कविनापि तत् प्रत्यपादि। भाषावैशद्यमत्र रुचिकरम्। काव्यगतममृतकल्पमुपदेशं परिपीय देहिनो विपदोऽपाकर्तुं जीवनं चान्वर्थं कर्तुं पारयन्तीत्यहो गौरवं काव्यस्य।

प्रकीर्णकुसुमाञ्जलिः — प्रकीर्णकुसुमाञ्जलिमुनियर्यश्चन्दनमहाभागैर्विरचितानि अष्टसंख्याकानि लघुकाव्यानि परिव्याप्य तिष्ठति। द्वात्रिंशद्भिरुपजातिवृत्तैरात्मस्वरूपं निरूपयन्ती 'आत्मभावद्वात्रिंशिका'ऽत्र प्राथम्यमुपैति। आत्मा शुद्धो बुद्धो निरामयो निरञ्जनश्च वर्तते परं विभावैः कषायैश्चाक्रान्तः स तां तां दशामनुयोभवीति।

पञ्चास्यपोतोऽविकटे स्वरूपं
विस्मृत्य तद्रूपतया यथाऽऽस्ते।
तथा विभावे तव वृत्तिरात्मन्!
लब्धे स्वरूपे तु चिदात्मकस्त्वम्॥ ७

आध्यात्मिकं विमानमारुरुक्षोरियं भवाटवी न दुर्लंघनीया न च विषयाब्धिर्दुस्तरः।

पथिकपञ्चदशके पुष्पपञ्चदशके आम्रषोडशके च क्रमेण पथिकं पुष्पम् आम्रं चावलम्ब्य प्रणीता अन्योक्तयः सन्ति। पुष्पव्याजेन रचिता अन्योक्तयो विशेषेण हृद्याः। इमा हि मानवप्रकृतिं सुष्ठु प्रख्यापयन्ति। गुणशून्यं रूपं न गौरवाय। सौरभ्यं कुसुमस्य सौन्दर्यं प्रगुणीकरोति। सुगन्धाद् ऋते सौन्दर्यमन्तर्गडुतामेति।

सुम! सौन्दर्येणालं त्वयि सौरभ्यं न चेद् वरं स्फुरति।
गुणैर्विहीनं रूपं गर्ह्यं नेदमर्ह्यं॥३/६

अर्थान्तरन्यासोऽत्र काव्यसुषमामेधयति।

'वास्तविकविचारनवकम्' विचारात्मकानि पद्यानि परिष्वजते।

'आत्मगर्हानवकम्' मनुजस्य कथने करणे च यद् वैषम्यं तदधिक्षिपति। 'सरस्वतीसप्तदशकम्' वाग्देव्याः स्तोत्रमस्ति। 'गीर्वाणवाणीमहिमाष्टकं' च सुरवाण्या गौरवं प्रख्यापयति।

जयचरिअं — रयणवालकहां प्रणीय मुनिवर्यश्चन्दनमहाभागो यददभ्रमवदातं च यशः संचिचाय तदुत्साहित आचार्यप्रेरितश्च स प्राकृतवाचा एकोनविंशतिपर्वात्मकं जयचरिअं[1] व्यरचयत्। अत्र हि तेरापन्थशासनस्य चतुर्थाधिपतेः जयाचार्यस्य धार्मिकक्रियाकलापपरीतं चरितं कविना समासेन न्यधायि। पउमचरिअमिति विमलसूरेः प्रथितं काव्यमनुरुध्य ग्रथितेऽस्मिन् जयचरिते मघवागणिकृतं जयसुजसाभिधानं राजस्थानीकाव्यमुपजीव्यतां गतम्। परं जयचरिते जयसुजसस्य वृत्तं निर्विशेषं न कविनाग्राहि! अनपेक्षितं विस्तारं विहाय सोऽपेक्षितं सारमाददे। जयचरितं केवलं चरितकाव्यमस्ति। नात्र विद्यते कल्पनामाधुर्यं वा भाषाशाम्वर्यं वा दुराधिगमा पदततिर्वा रसालंकारपरिप्लवो वा! प्राकृतगिरा चरितप्ररूपणमेव कवेरिष्टम्। भाषावैशद्येन बहूपकरोति जयचरितं प्राकृतप्रतिपित्सून्। उक्तं कविना—

णत्थि कप्पणामहुरं णत्थि तहा कव्वसंपयाजुत्तं।
बहुवित्थरिअं ण पुणो जयचरिअं केवलं चरिअं ॥१९/५५
जयसुजसं मघरइअं पेक्खतेणं मए वितालयरं।
रेहंकणसंकासं संखित्तं विरइअ इणमो ॥१९/५६
पाइआ-भासा-सायरमवगाहेउं कयाहिलासा जे।
पढमे पाढे तेंसि होही उवजोगवं एअ ॥१९/५७

अद्यत्वे प्राकृतरचना विरलविरला। चन्दनमुनेः प्राकृतग्रन्थास्तामुज्जीवयितुमलम्।

—गवर्नमेण्ट कॉलेजः
श्रीगङ्गानगरम्

---

१. १९७६ खिष्टाब्दे बीकानेरतः प्रकाशितम्।

# पर्वणीकरोपाह्वश्रीसीतारामभट्टविरचितं नलविलासमहाकाव्यम्

—डॉ॰ रूपनारायणत्रिपाठी

विश्वसाहित्ये संस्कृतसाहित्यं गौरवास्पदं वर्तते । सरस्वत्याः सिद्ध-पुत्रैः कविभि सातिशयरूपेण पल्लविता पुष्पिता रक्षिता चेयं संस्कृतभाषा प्राग्वैदिककालतोऽद्यावधि रचनावैविध्येन नितरां शोभते । प्राक्तननृपैः स्वस्योदारता गुणग्राहिताञ्च प्रकटयद्भिः समये-समये संस्कृतकवीनां समादरो विहितः तेभ्यश्च राज्याश्रयः प्रदत्तः । एवंविधेषु नृपेषु राजस्थान-प्रान्ते आमेरजयपुरराज्यस्य नरेन्द्राः प्रमुखा आसन् । तेषु चापि जयपत्तनस्य निर्माता सवाईजयसिंहः प्रमुखो मन्यते । अस्यैवाश्रये कुमारसम्भवस्य टीकाकाररूपेण प्रथितयशसा पर्वणीकरोपाह्वश्रीसीतारामभट्ट-कविना स्वकवित्वशक्ति प्रकटयता जयवंश-नृपविलास-नलविलासादिमहाकाव्यानां चत्वारिंशद्यावत्प्रशस्तकृतीनां रचना विहिता ।

**श्रीसीतारामभट्टस्य परिचय :—**

आमेराधिपतिना जयपत्तनस्य निर्मात्रा च सवाईजयसिंहेन स्वराज्य-सभायां बहवो विद्वांसः कवयः कलाकाराश्च सम्मानिताः संस्थापिताश्च, तेषु महाराष्ट्रियभट्टपर्वणीकर-राजगुरु-कुलं प्रमुखं स्थानं भजते । स्वरचिते जयवंशमहाकाव्ये श्रीसीतारामभट्टेन स्ववंशपरिचयो जयपुरराज्याश्रयश्च विस्तरेण प्रदत्तः, तदनुसारं वंशस्यास्य मूलपुरुषः श्रीमाधवभट्ट आमेरा-धिपस्य श्रीविष्णुसिंहस्य राज्यकालेऽत्र वसतिञ्चकार[१] । महाभागस्यैतस्य त्रय. पुत्रा आसन्, तेषु ज्येष्ठपुत्रः श्रीश्यामभट्टः, तस्य पुत्रः श्रीशिवरामभट्ट , तस्य च कनिष्ठपुत्रः श्रीलक्ष्मणभट्ट आसीत्[२] । श्रीलक्ष्मणभट्टस्य तृतीय-पुत्ररूपेण श्रीसीतारामभट्टो जनिमलभत । जयवंशमहाकाव्ये तेन स्वपरि-

१. जयवंशमहाकाव्ये १०–६१, ६२.

२. तत्रैव १०-१३३, १३४ १६०, १६१, १६२ १६३, १६४, १६५.

चयः स्वयमित्थं प्रदत्तः—

> आसीद्यस्य पराजितामरगुरु श्रीलक्ष्मणाख्यः पिता
> माता यस्य सती सतीव्रतपरा यस्याग्रजौ भ्रातरौ ।
> स्तः स्वन्ताधिपदाद्यजन्तजयति प्राग्वर्तिरामाभिधौ
> रामस्यास्य कृतौ कवेरिह गतः सर्गोऽयमादिर्नवः ।।[3]

श्रीसीतारामभट्टस्य द्वौ जेष्ठभ्रातरौ आस्ताम्, यथा—

> आद्यः सखाराम इति प्रसिद्धो जयादिरामस्तवपरः प्रतीतः ।
> सीतादिरामस्त्वपरोऽथ सर्वे सर्वागमानाञ्च विचारदक्षाः ।।[4]

एवं जयवंशमहाकाव्यानुसारं श्रीसीतारामभट्टस्य वंशवृक्षो निम्नरूपेण प्रस्तोतुं शक्यते—

संस्कृत-साहित्येहासे श्रीसीतारामभट्टपर्वणीकरः कुमारसम्भवस्य नवसर्गतोऽवशिष्टभागस्य टीकाकाररूपेण प्रसिद्धोऽस्ति । मल्लिनाथेन कुमारसम्भवस्य टीका अष्टमसर्गपर्यन्तमेव कृता, अवशिष्टसर्गाणां टीका श्रीसीतारामभट्टपर्वणीकरस्य वैशिष्ट्यं प्रथयति । कविनाऽनेन नलविलासस्य रचना १८८६ तमे संवत्सरे विहिता, यथा कविकथनमेव प्रमाणम्—

---

३. तत्रैव १–४६

४. तत्रैव १०–१६६

सवत्सरेङ्कवसुनागधरासमाने
मासे मधौ सहितदर्शतिथौ स रामः।
सार्द्धैकयामसमितोहनिवर्तमाने
पूर्णञ्चकार सरसं गुणिरत्नकाव्यम् ।।३२-२५

एतेन सिद्ध्यते यत्कवेः श्रीसीतारामभट्टस्य स्थितिकालः एकोनविंशतितमस्येशवीयशतकस्य पूर्वार्द्धभागो वर्तते। अस्याश्रयदाता सवाई-जयसिंह आसीत्।

**रचनात्मककार्य–विवरणम्—**

श्रीसीतारामभट्टपर्वणीकरस्य जयपत्तनीयकविषु रचनात्मकदृष्ट्या महत्प्रदेयं वर्तते। महाकविनानेन विविधविधासु रचनात्मकं कार्यं प्रस्तुतम्। डॉ. प्रभाकरशास्त्रिमहोदयैः सुमहदध्यवसायेन महाकवेरस्य कृतीनामन्वेषणं विहितम्। तदनुसारं श्रीसीतारामभट्टस्य त्रयोविंशतिसंख्याका ग्रन्थाः सम्प्रति समुपलभ्यन्ते, अन्ये च सम्प्रत्यनुपलब्धा सन्ति[५]। तेषु जयवंश-महाकाव्य प्रकाशितं वर्तते। कवेरस्यान्याः रचनाः अप्रकाशिताः सन्ति। श्रीसीतारामभट्टविरचितेषु महाकाव्येषु नलविलासः स्ववैशिष्ट्याद् वरीवर्तते। निबन्धेऽस्मिन् विवेचनमस्य प्रस्तूयते।

**नलविलासमहाकाव्यस्य विवेचनम्—**

महाकाव्येऽस्मिन् द्वात्रिंशत्सर्गेषु श्लोका अष्टशतसंख्याकाः सन्ति। अस्य कथावस्तु महाभारतस्य सुप्रसिद्धं नलोपाख्यानं वर्तते। यद्यपि नैषधीयचरिते नलोपाख्यानात् कथानकं गृहीतं, तथापि तत्र नलोपाख्यानस्य लघ्वंशमात्रं वर्तते। तस्मिन् श्रीहर्षेण काव्यस्य सुखान्ताय नलदमयन्त्योः सुखसमागमं वर्णयित्वा कथानकस्य समापनं विहितम्। श्रीसीतारामभट्ट-कविना स्वनलविलासे नलशरीरे कलिप्रवेशः, द्यूते तस्य राज्यापहरणं, वनवासः, वने दमयन्त्याः परित्यागः, तस्याः स्वपितृगृहगमनं, नैषधस्य बाहुकरूपेण ऋतुपर्णस्य सारथिकार्यं, दमयन्त्या पुनः स्वयंवरघोषणा, वैरूप्यगतस्य नलस्य तत्रोपस्थितिः, नलदमयन्त्योः पुनर्मिलनमित्यादिकथानकं महाभारतीयाख्यानानुरूपं त्रयोविंशतितमसर्गात् द्वात्रिंशत्तमसर्गपर्यन्त

५ जयपुर की संस्कृत साहित्य को देन (१८३५-१९६५) पृ० १३-१४.

सुरुचिपूर्णवर्णनैः सम्यगुपनिबद्धम् । महाभारते नलोपाख्यानमत्यव विस्तृतं वर्तते । तस्मात् मुख्य-मुख्यकथानकांशान् गृहीत्वा कविना स्वल्पश्लोकैः स्वकाव्यस्यौचित्यं संसाधितम् । द्वाविंशतिसर्गपर्यन्तं नैषधीयचरितानुसारं कथानकस्य विभाजनं कृतम् ।

कथावस्तु —

नलविलासे महाभारतस्य नलोपाख्यानं कथानकरूपेण गृहीतम् । तदाख्यानमतिप्रसिद्धं सर्वजनविदितञ्च वर्तते । अतस्तस्य विस्तारवर्णनमत्र निरर्थकम् । अत्र कोष्ठकेषु सर्गसंख्या, तदग्रतश्च सर्गेषु वर्ण्यविषयस्य संकेतमात्रमेव प्रदीयते यथा—

(१) नलवर्णनम्, (२) दमयन्तीवर्णनम्, (३) हंसदौत्यवर्णनम्, (४) दमयन्तीविप्रलम्भवर्णनम्, (५) नलदौत्यारोपवर्णनम्, (६) शक्रादिदूतीप्रत्याख्यानवर्णनम्, (७) नलकृतदमयन्तीसर्वांगवर्णनम्, (८) भैमीनलसंवादः, (९) नलदौत्यवर्णनम् (१०) दमयन्तीस्वयंवरारम्भः, (११) समस्तद्वीपाधिपतिवर्णनम्, (१२) स्वयंवरवर्णनम्, (१३) पंचनलीवर्णनम्, (१४) इन्द्रादिवरप्रदानवर्णनम्, (१५) वरीवरालंकरणवर्णनम्, (१६) वधूप्रवेशवर्णनम्, (१७) कलिनलवैराङ्कुरोत्पत्तिवर्णनम्, (१८) नलदमयन्त्योः सुरतवर्णनम्, (१९) नलदमयन्तीप्रबोधवर्णनम् (२०) नलदमयन्तीकेलिवर्णनम्, (२१) नलाह्निकवर्णनम्, (२२) नलदमयन्तीकृतचन्द्रोदयवर्णनम्, (२३) नले कलिप्रवेशवर्णनम्, (२४) नलस्य राज्यभ्रंशवर्णनम्, (२५) दमयन्तीपरित्यागवर्णनम्, (२६) दमयन्तीप्रलापवर्णनम्, (२७) दमयन्त्याश्चेदिराजपुरप्रापणम्, (२८) नलस्य ऋतुपर्णसभासमागमः, (२९) दमयन्तीपितृगेहप्राप्तिवर्णनम्, (३०) विदर्भेषु ऋतुपर्णप्राप्तिवर्णनम्, (३१) नलदमयन्तीसंयोगवर्णनम्, (३२) नलस्य भूयो राज्यप्राप्त्यादिवर्णनञ्च ।

काव्यशास्त्रीयदृष्ट्या नलविलासः—

श्रीसीतारामभट्टपर्वणीकरेण 'सर्गबन्धो महाकाव्य' मित्यादिलक्षणानुसारं नलविलासमहाकाव्यस्य रचना विहिता । नलविलासे नलो धीरोदात्तगुणान्वितो क्षत्रियो नायकोऽस्ति । अत्र शृंगारोऽङ्गी रसो वर्तते, अन्ये वीरभयानकादयोऽङ्गरूपेण सन्ति । कविना सम्भोगविप्रलम्भौ सातिशय-

रूपेण वर्णितौ। अस्येतिवृत्तं महाभारतीयं प्रसिद्धं नलोपाख्यानमस्ति। प्रारम्भे वस्तुनिर्देशात्मकं मंगलं वर्तते—

"श्रियः पद धर्मचणो यशस्वी प्रतापवान् शास्त्रविचारदक्षः।
कृते युगेऽभून्नलनामधेयो महीमहेन्द्रो निषधेषु वीरः॥"

नलविलासस्य स्वोपज्ञटीकायां कविना मंगलाचरणस्य निर्देश एव कृतः—

"रामाभिधानः स्वकृतनलविलासकाव्यटीकां निर्मित्सुः प्रत्यूहनिवृत्तये पुण्यश्लोकनलरूपं वस्तुनिर्दिशति श्रिय इति।" महाकाव्यलक्षणानुसारं नलविलासे सन्ध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासरप्रातर्मध्यान्हशैलर्तुवनादीनां सुरतविलासादीनां च साङ्गोपाङ्गवर्णनमस्ति। सर्गा एकवृत्तमयाः सन्ति, अवसानेऽन्यद् वृत्तं वर्तते। यथा प्रथमसर्गे प्रारम्भे उपजातिवृत्तमन्ते च मालिनीवृत्तम्, यथा अन्तिमः श्लोकः—

"विहग विलय मा त्वं मुक्तिमासाद्य मत्तो
नरपतिरिति सद्यो भाषमाणो जहौ तम्।
वचनविषयतां यो नाप तं मुक्तिलम्भी
मनसि विधुतपक्षः सान्द्रमानन्दमापत्॥ १।२५

नलविलासस्यान्ते कविना नलकथायाः माहात्म्यं प्रकटयता स्वपरिचयोऽपि रचनाकालसंकेतपुरःसरः समुपस्थापितः, यथा—

पिता यस्य क्षोणीवलयतिलको लक्ष्मण इति
प्रतीतः सत्यासीज्जगति प्रथिता यस्य जननी।
सखारामो जेष्ठस्तदनु जयरामश्च सहजौ
कविः सीतारामः स हि नलविलासं विहितवान्॥ ३२।२४
संवत्सरेऽङ्कवसुनागधरासमाने
मासे मधौ सहितदर्शतिथौ स रामः।
सार्द्धैकयामसमितोहनिवर्तमाने
पूर्णंचकार सरसं गुणिकाव्यरत्नम्॥ ३२।२५

एवंप्रकारेण महाकाव्यस्य लक्षणानुसारं नलविलासस्य महाकाव्यत्वमक्षुण्णमेव।

आख्यान-कला—

नलविलासे कविना श्रीसीतारामभट्टेन काव्योचितवर्णनेषु स्वकौशलं प्रथयता संक्षिप्तकथनैरधिकार्थस्याभिव्यक्तिः कृता, यथा—

"त्वया विना सापि निरर्थजन्मा तया विना त्वं च तथाविधोऽसि ।
परस्परौचित्यमिदं घटेत दृढं मया यत्नविधायिनैव ।। २।१६

आख्यानस्य महत्त्वं प्रवर्द्धयितुं देवानां कामेच्छा वर्णिता वियते । दमयन्त्याः स्वयंवरविलोकनार्थं हरिहरपितामहप्रमुखाः देवाः अम्बरस्थाः बभूवुः, यथा—

"पितामहो विष्णुहरौ कुबेरः समीरणो भानुविधू अनन्तः ।
पितामहत्वेन रमानुरोधादुमावरोधेन कुबेरतायाः ।। १०।१०

आख्यान-तत्त्वे क्वचिदनौचित्यमपि दृश्यते। यथा शक्रादिदेवानां नलस्य स्पर्धायां स्वयंवरस्थलं प्रति समागमनं किञ्चिदविश्वास्यं प्रतीयते, परन्तु महाभारतीयकथानकानुसारं तद् युक्तियुक्तमवगम्यते। आख्याने कविकल्पनायाश्चमत्कारोऽपि यत्र तत्र दरीदृश्यते । यथा द्वाविंशतितमे सर्गे चन्द्रवर्णनम्—

"भवन्मुखादभीतिवहोऽयमिन्दुः शनैः शनैरूर्ध्वदिशं प्रयाति ।
त्वदग्रतः श्वैत्यमुपेत्य मन्ये धन्ये सधन्यां कुरुषे त्रिलोकीम् ।। २२।१८

एवमेव सन्ध्याकालस्य चमत्कारपूर्णवर्णनं विलोकनीयं वर्तते, यथा—

"प्रियाह सन्ध्या वरुणस्य नारी रुषेव शोणं वदनं दधाति ।
आसु प्रियासु प्रियहार्दभृत्सु सतीषु वै सारणलोचनासु ।। २२।५

एवं नलविलासे आख्यानतत्त्वानां सम्यक् संवर्द्धनं रक्षणञ्च कविना कृतम् ।

पात्रानुशीलनम्—

नलविलासे नायको नलो वर्तते । 'अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः' इत्यादिलक्षणानुसारं नलः क्षत्रियवंशोत्पन्नो विश्वविश्रुतधीरोदात्तो नायकोऽस्ति । कविना महाभारतस्य नलोपाख्यानानुसारं नलस्य

चरित्र-चित्रणं विहितम्। नलो विद्यावान्, गुणज्ञः, प्रतापवान्, यशस्वी, प्रदाता, दयालु, नीतिज्ञः, रूपशीलसम्पन्नः, प्रजापालकश्च आसीत्। स सर्वासु विद्यासु सकलासु कलासु पारंगत आसीत्। महाभारते नलस्य पुण्यात्मारूपेणाख्यानमस्ति, नैषधीयचरिते श्रीहर्षेण तस्य पुण्यप्रचयो न प्रदर्शितः, परन्तु नलविलासे त्रयोविंशतितमसर्गानन्तरं तस्य पुण्यश्लोकत्वं प्रकटीभवति।

महाभारते नलस्य देवानां दौत्यकर्मणि किञ्चित् स्वार्थसाधकत्वं दृश्यते, परन्तु नलविलासे स्वार्थोपेक्षा देवकार्यस्य च साधकता तस्मिन् दृश्यते। राज्यभ्रंशानन्तरं दमयन्त्या सह नलो वनं जगाम, तत्र कष्टान्यनुचिन्तयन् स दमयन्तीं स्वपितृगृहगमनाय प्रेरयामास, तस्मिन् प्रसंगे नलस्य चरित्रे उदात्तीकरणं दृश्यते। यथा—

"किमर्थं प्रिये दर्भंगेण त्वयाद्य मया साकमस्मिन्नरण्येऽशरण्ये।
अवाप्नोषि दुःखं कियत्कालमम्भोरुहाभातिरस्कारकृत्पादशोभे।। २५।९
विदर्भेषु नूनं पितू राजधानीं प्रयाहि प्रियं त्वां वदामीति बाले।
तदध्वायमस्ति प्रशस्तो विलंध्यो परं चायमस्पृक्षवान्नाम शैलः।। २५।१०.

भूयो राज्यं प्राप्य किञ्चित्काल शासनं विधाय नलो वानप्रस्थाश्रमे प्रविशति, एतेन तस्याश्रमव्यवस्थानुपालकत्वमपि व्यज्यते। यथा—

"समर्प्य भुवमात्मजे विनयसम्पदालंकृते
कृती कृतिनि नैषधो विषयतो यतोऽनुन्मुखः।
विदर्भतनयायुतो गहनमरण्यमुर्वीरुहै-
र्घने घनमतिर्मतो मुनिजनस्य भूयो ययौ।।"

नलविलासे दमयन्ती नायिका वर्तते। सा यथासम्भवैर्नायकसामान्यगुणैर्युक्ता स्वकीयोत्तमा नायिका विद्यते। नैषधीयचरितमिव नलविलासेऽपि नायिकायाः श्रेष्ठता कविना विविधप्रसंगेषु प्रकटिता। दमयन्ती रूपगुणशीला आसीत्, तस्या गुणान् श्रुत्वा देवा अपि स्वयंवरे सम्मिलिता बभूवुः। पितामहादयोऽपि नभस्यास्तस्याः स्वयंवरं व्यलोकयन्। नैषधस्य राज्यभ्रंशात् सा तेन सह गहने विपिने जगाम। नलपरित्यागनन्तरमेकाकिनी दमयन्तीं कामयमानो व्याधो यदा तं धर्तुमिच्छति तदाऽसौ भस्मासात् सञ्जातः। स्वपितृगृहमागत्य सा रात्रिन्दिवं नलप्राप्त्युपायान् व्यचिन्तयत्।

अनेनाख्यानेन सिद्ध्यते यत् सा पतिव्रता विनयनयादियुक्ता आसीत्। एवं कविना तस्याश्चरित्र-चित्रणं सातिशयरूपेण विहितम्।

महाकाव्येऽस्मिन् भीमनृपस्य ऋतुपर्णाख्यसाकेताधिपस्य च चरित्र-चित्रणमपि कविना अत्युत्तमं कृतम्। ऋतुपर्णो गुणज्ञ सकलकलापारंगतो दाता विनयनयान्वित आसीत्। बाहुकवेशे नल सूतकर्मणि नियुज्य स तस्य प्रशंसामकरोत्। नलस्य स्वरूपप्राप्तेरनन्तर सः स्वनम्रतां प्राकटयत्, यथा—

> नलः स इति विश्रुत्य सलज्जोऽवनताननः।
> ऋतुपर्णो पतत्पादे नलस्य प्रयतः पुरः॥ ३२।४
> इत्युवाच च भो राजन् क्षमस्व मम शैशवम्।
> अयोग्ये कर्मणि भवानध्यरोपि चिराय यत्॥ ३२।५

विदर्भेश्वरस्य भीमस्यापि चरित्रचित्रणं महाभारतानुरूपं वर्तते। नलविलासे शक्रादिदेवानां मानवरूपेण वर्णनमस्ति। ते सर्वे मानवोचित व्यवहारं कुर्वन्ति। एतदतिरिक्तं कलिद्वापरयोः पात्ररूपेण वर्णनमतीव-चमत्कारपूर्णं वर्तते। एवं पात्रानुशीलनेन नलविलासमहाकाव्यस्य महाका-व्यत्वं प्रशस्यतमं कथयितुं शक्यते।

**वर्णन-वैविध्यम्—**

नलविलासमहाकाव्ये वर्णनवैविध्यमपि प्रशस्यं वर्तते। दमयन्तीं कामयमानो नलः समासदामग्रतः स्वचापल्यं निह्नोतुमुपवनविहारमकरोत्। तस्मिन् प्रसंगे कविना आरामस्य विविधप्रकारकं वर्णनं विहितम्। द्वाविंश-तितमे सर्गे चन्द्रोदयवर्णनमस्ति, तत्रापि कविना वैचित्र्यपूर्णं मानवीकरण कृतं, यथा—

> सन्ध्येयमीर्ष्याकुलितेव धत्ते तवाधरे बिम्बफलाधरोष्ठि!
> आरक्तमङ्गं प्रचुरं तथापि नैवाधरीयाः सुषमा स्वलम्भि॥ २२।३

नलविलासे वर्ण्य-विषयो बहुविस्तृतो वर्तते। कविना द्वाविंशतिसर्ग-पर्यन्तं महाभारतीयकथायाः नैषधीयकथायाश्च समायोजनं विहितम्। तदन्तरं महाभारतस्यावशिष्टं कथानकं काव्यौचित्यरूपेण ग्रथितम्। वर्ण्य-विषयेष्वेतेषु केचिदतिलघुभूताः सन्ति केचिच्च विस्तृताः सन्ति। यथा दमयन्त्याः स्वयंवरवर्णनं षड्सर्गपर्यन्तं वर्तते, नलदमयन्त्योः सरसलीला-

षड्सर्गपर्यन्तमस्ति। अत्र नलद्वारा दमयन्त्या: परित्यागानन्तरं दमयन्ती-प्रलापो वैशिष्ट्यं भजते। सा वनभूरुहान् सर्वान् पादपान् स्वभर्तु: विषये पृच्छति। क्वचित् कदलीं, क्वचित् कैरविणीमशोकलताञ्च, कदाचिद् दाडिमी केतकलताञ्च कदाचिन्निम्बं वटवृक्षञ्च "मदीयो भर्ता क्व? भवद्भि: दृष्ट: किम्? क्वचिद् वा?" इति सकरुणविलपनै: पृच्छति। यथा कुमारसम्भवे कामप्रिया बहुविध विलपति, तथैवात्र-दमयन्त्यपि विकला भवति। प्रसंगेऽस्मिन् विप्रलम्भस्य करुणरसस्य च सम्यक् परि-पाकोऽस्ति।

नलविलासे यद्यपि कथानकमल्पश्लोकात्मकेषु सर्गेषु समुपस्थापितं तथापि यत्र-तत्र प्रकृतिवर्णनं सूक्ष्मतया कृतं वर्तते। यथा—

"सर: सरोजालिरजोविमिश्रजलौघमुर्वीरमणो ददर्श।
सा रद्वधूरागवहु: शरीरे पयोधिकल्पो यदि वा बभासे॥" १-१६

नलदमयन्तीकृतचन्द्रोदयवर्णने कविना प्राकृतिकपदार्थेषु मानव-व्यापाराणां समारोप: कृत:। यथा—

"तारावधूराप्य सतो हिमांशु: स्थिते विहायःशयने मयूखै:।
लीलां वितन्वन्सह ताभिरुच्चैर्विलोकयतां प्रांशुमुखं विधाय॥" २२-२३

कविना पशुपक्षीणामपि मानवोचितकौटुम्बिकसम्बन्धानां कल्पना कृता। प्रथमे सर्गे नलेन गृहीतो हंस: स्वजनन्या: पत्न्या: शिशूनाञ्च भावात्मकवर्णनं करोति, यथा—

"विधिं विनिन्दामि मदेकपाले व्ययोजयद्यो जननीं च पत्नीम्।
स कष्टमापन्नमिदं जनन्या: स्वसूनुशोकार्णवमज्जिताङ्गया:॥" १-२३

नलविलासे कुमारसम्भव-शिशुपालवध-रघुवंशादीनां प्रभावो दृश्यते। नैषधीयचरितस्य प्रभावो विशेषतया वर्तते। नैषधे बहुसंख्यकेषु श्लोकेषु या कथा द्वाविंशतिसर्गेषु वर्णितास्ति, सैव कथा कविना नल-विलासे सर्गानुसारं स्वल्पश्लोकेषु समुपस्थापिता। काव्येऽस्मिन् द्यूत-क्रीडाया वर्णनमस्ति, परन्तु युद्धवर्णनं न वर्तते। द्यूतक्रीडावर्णने महा-भारतस्य छाया दृश्यते।

काव्याङ्गानां समायोजनम्—

नलविलासमहाकाव्ये रसरीत्यलंकारादीनां समुचितसमायोजनमस्ति। कविना श्रीसीतारामभट्टपर्वणीकरेण वैदर्भी रीतिमाधृत्य स्वकल्पनया चमत्कृतिरुत्पादिता। तेन चमत्कारेणास्य सहृदयहृदयह्लादत्व नवार्थत्वञ्च वरीवर्तते। नलविलासे समायोजितानां काव्याङ्गानां विवेचनं निम्नशीर्षकेषु प्रस्तूयते —

रसयोजना—काव्येऽस्मिन् शृंगाररसो मुख्यतया परिपुष्टोऽस्ति। शृंगारोचितालम्बनविभावत्वेन नलदमयन्त्योः वर्णनमत्युत्तम वर्तते। कविना नलस्य हृदि पूर्वरागस्य विवाहानन्तरञ्च शृंगारिकवृत्तीना सम्यग्वर्णनं विहितम्। दमयन्तीं कामयमानस्य नलस्य पूर्वानुरागावस्था यथा—

"धोरोऽपि वीरोऽपि दृढोऽपि सोऽपि नलोऽपि विद्याविषयोऽपि कोऽपि।
सेहे न तच्छम्बरवैरिवीर्यं येन च्युतोऽभूत्स पिनाकपाणिः॥"
१-१४

नलविलासे सम्भोगशृंगारवर्णनं सातिशयं वर्तते। अष्टादशे सर्गे नलदमयन्त्योः सुरतवर्णनं यथा—

"चुम्बितुं मुखमधत्त सुभ्रुवः पाणिना सपुलकेन वल्लभः।
वल्लभापि चकिता सती स्थिता यत्नमप्यकृत तस्य मोचने॥" १८-१३

"नीविमोचनविधानकर्मणि प्रागिवोदितभयाभवन्न सा।
व्रीडयाप्यपसृतं कियत् कियत् नद्वयोः समुचितापरस्थितिः॥" १८-१६

चतुर्थसर्गे विरहविधुरायाः दमयन्त्याः विरहवर्णनमपि चमत्कृतिपूर्णं वर्तते—

"कमलिनीदलमुत्पतति क्षमं तपहृतावुरसि व्यथिते कृतम्।
सरसमप्यभवत्खलु मुर्मुरं कमलिनं मलिनञ्च दमस्वसुः"॥ ४-७

गहने विपिने नलद्वारा दमयन्तीपरित्यागानन्तरं तस्याः हृदयगतभावानां सुरुचिपूर्णवर्णनमस्ति। तस्मिन् प्रसगे प्रकृतेरुपरि मानवव्यापारारोपोऽपि दृश्यते, तेन विप्रलम्भस्यात्यधिकोत्कर्षः संजातः।

नलविलासे शृंगाररसातिरिक्तं भयानक-वीराद्भुतादिरसान
निष्पत्तिरपि दृश्यते । भयानकवीरयोरेकत्रैव वर्णन यथा—

"ता तादृशीमथालोक्य मृगव्याधश्च कश्चन ।
ग्राहं खड्गेन निच्छिन्द्य जीवन्ती निरसारयत् ।।" २७-४

एव रसपरिपाकदृष्ट्या नलविलासकाव्य सहृदयहृदयह्लादकं वर्तते ।
**अलंकार-योजना**— नलविलासे श्रीसीतारामभट्टपर्वणीकरेण कल्पनाशक्तेः प्रचुरप्रयोगो विहितः । कल्पनाशक्त्याऽत्र शब्दार्थालंकाराणां सुसमायोजनमभवत् । त्रयोदशे सर्गे पचनलीवर्णनप्रसंगे नवसंख्यकेपु श्लोकेपु श्लेपालकारस्य चमत्कारजनकप्रयोगो वर्तते । दिङ्मात्रं यथा—

"योगेन हेममयकारिणमात्मतन्वा कोणाश्रितं गुणयुत न लभेत को ना ।
देवक्षुधाहरमलौकिकशक्तिभाजं वैदर्भि दर्भमहिताग्रमते हितेन ।।"
१३-५

भास्वत्कुलोदितमशेपजनाय दण्डदातारमात्तमसुहारिणमुन्नतेच्छम् ।
संत्रासचचलदृगेण विलोचनश्रीसौभाग्यहारिनयने त्वममुं वृणीष्व ।।"
१३-६

शब्दालकारेपु यमकानुप्रासयोः कविकौशलं दर्शनीयं वर्तते । चतुर्थसर्गे सर्वे श्लोका यमके निवद्धाः सन्ति । यथा—

"मुखमशोभत भीमभुवस्तदा विरहवह्निशिखापरितापिताम् ।
अहनि भानुमदंशुहृतप्रभो विधुरिवाधुरिवागमृताम्बुनः ।।" ४-२

अनुप्रासस्य चमत्कारः यथा—

"कुचद्वयं वक्षसि सन्निविष्टं मनोभुवा भीमभुवो भयेन ।
दग्धेन भीत्येव सुरूपसिन्धावालम्बते दाहजतापशान्त्यै ।।"२-१३

अर्थालंकारेपु रूपकोपमा–काव्यलिङ्गोत्प्रेक्षा–परिकराङ्कुर-समासोक्तिप्रतीपादीनां प्रचुरप्रयोगो वर्तते । तेपामत्र दिङ्मात्रोदाहरणानि प्रदीयन्ते । पूर्णोपमा यथा—

"हयं सितांशुप्रभमुन्चमानं गरुत्मतो वेगहरं प्रसह्यम् ।
आरुह्य रेजे स नृपो नितान्तं तथा यथोच्चैःश्रवसंबलारिः ॥" १–१६

अत्र शक्रनलयोः सादृश्यवर्णनमस्ति । यथा वा—

"गर्भेण तन्वीतनुरप्यमुष्या लावण्यपूर्णा शुशुभे शुभंयुः ।
नवोदिता चान्द्रमसी कलेव मनोहरा दीपशिखेव तन्वी ॥" २३–२

अन्येष्वलंकारेषु काव्यलिंगं यथा—

"विज्ञापयत्येवममर्त्यराजस्त्वां भैमि धीरोऽपि विलुप्तधैर्यः ।
अनंगबाणैरनिशं यतोऽसौ जघन्यते कोमलजंघि तीक्ष्णैः ॥" ८–१२

अर्थान्तरन्यासः—

"रम्यालकेयं हरते प्रसह्य चेतोलकाभर्तु रपीव नव्या ।
रम्याणि तान्येव भवन्ति यानि प्रतिक्षणं नूतनवद् विभान्ति ॥" २–७

उत्प्रेक्षालंकारः यथा—

"ऊरू भवत्याः कदलीप्रकाण्डमकाण्डमेवातनुतो जितं यत् ।
ततो निजांगे भजते जडत्वं भियेव मृद्वंगि सभंगिनेत्रि ! ॥" ७–२१

रूपकातिशयोक्तिः—

"हिरण्मयं हंसमसौ सनिद्रं कूले विलोक्याथ सवर्मपादः ।
जेतु सरोजानि शनैरुपेत्य करेण जग्राह हयावतीर्णः ॥" १–२०

परिकरः यथा—

"ये रणे वपुरपास्य पुरः स्व पार्थिवं यदतिथित्वमुपेताः ।
तत्समा भुवि न सम्प्रति किं न छिन्धि संशयमिमं मुनिवर्यः ॥" ५–५

अत्र मुनिवर्येति संशयनिवर्तनक्षमत्वगर्भत्वेन साभिप्रायविशेषणात् परिकरो वर्तते ।

व्यंजना—नलविलासे कविना व्यंग्यप्रयोगोऽपि विहितः । मृगलोचनानां समीपं गत्वा नलः स्वदौत्यकर्मणि प्रवृत्तो भवति, तस्मिन् काले तस्य धैर्यदार्ढ्यरूपं वस्तु ध्वन्यते—

"एवं स शुद्धान्तचरीभिरेणविलोचनाभी रमणीभिरन्तः।
कदर्थ्यमानो मुहुरुन्नतेच्छः सभामवापालिवृतां प्रियायाः॥" ६-६

उपमाध्वनिः यथा—

"सरोजमक्ष्णा शशिनं मुखेन रूपेण कामं प्रथितं जगत्सु।
भानुं प्रतापेन भुजेन शेषं नगाधिपं यः कुभृता विजिग्ये॥" १-१०

अत्र सरोजादीनामक्ष्यादिभिः सादृश्यातिशयवर्णनमस्ति। यथा वा-

"विम्बेन पूर्वं किमतापि नाम तपोगरीयः क्व गिरौ निवेश्य।
येनाधुनावाप्य समत्वलीलां यदोष्ठगां तात्कृतितामुपैति॥" २-६

अत्रोपमेयोपमानव्यतिरेकाद् वर्ण्यव्यतिरेको ध्वन्यते। प्रश्नोत्तर-रूपेण व्यङ्ग्योत्पत्तिः यथा—

"आल्यस्ताः किमिति करोषि चुक्रुशुस्त सूतः सन् मिथुनामिमं स्पृशस्यबुद्धिः।
सोऽवादीत्समिह वर्तते ममेदं चित्तं मे भ्रममगमत्ततः क्षमध्वम्॥"
३१ ६

**छन्दो-योजना**—नलविलासे छन्दोवैविध्यं वर्तते। कविना महाकाव्येऽस्मिन् उपजाति-अनुष्टुप्-शार्दूलविक्रीडित-मालिनी-स्वगता-मन्दाक्रान्ता-द्रुतविलम्बित-शालिनी-वसन्ततिलकेत्यादीनां छन्दसां प्रयोगो विहितः। अधिकतमेषु सर्गेष्वुपजातिवृत्तं वर्तते। तदनन्तरं वसन्ततिलका-वंशस्थ-अनुष्टुप्वृत्तानां प्रयोगोऽधिकतरं वर्तते। रथोद्धता-हरिणी-पुष्पिताग्रादीनां वृत्तानां प्रयोगः स्वल्पतया वर्तते। सर्वेषु वृत्तेषु माधुर्यं यतिगतिव्यवस्था गेयत्वञ्चाक्षुण्णमेव दृश्यते। ध्वन्यावर्तनपूर्वकं गेयत्वं यथा—

"दयितया दयितोऽपि भवानतो नहि किलानुसृतो विहितोऽहितः।
अहिततां भजसे मयि मा भज क्षमतमामत मा तदुपाश्रय.॥" ४-१८

**कथोपकथनादयः**—नलविलासे कविना सम्भाषणावसरेषु शिष्टवाण्या माधुर्यस्य च नागरिकोचितव्यवहारः प्रस्तुतः कृतः। यदा राज्यभ्रंशानन्तरं नलः दमयन्तीं स्वपितृगृहगमनाय प्रेरयति, तदा सा वदति—

"न दोषस्तवायं ममैवास्ति सोऽयमदृष्टस्य नुन्नस्य कालेन यद्वा ।
पिपासुं क्षुधार्त्तं सहायो न मारादरण्येऽशरण्ये न हास्यामि हास्या ॥"

२५-१३

स्वयंवरे सरस्वत्या विहितं नृपवर्णनं सम्भाषणरूपेऽस्ति । तत्र यद्यपि दमयन्ती स्वोत्तरं नैव ददाति, केवलं प्रतिक्रियारूपेण भ्रू विक्षेपं करोति । पञ्चमे सर्गे नारद-शक्रयोः कथोपकथन, सप्तदशे सर्गे शक्रादीनां कलिद्वापराभ्यां सह वार्तालापः, नलस्य देवानां दौत्यं, हंसस्य नलदमयन्त्योः दौत्यं, ऋतुपर्णनलयोः वार्तालापश्च सम्भाषणस्योत्तमोदाहरणानि सन्ति । यथा ऋतुपर्णस्य कथनम्—

"इत्युवाच च भो राजन् क्षमस्व मम शैशवम् ।
अयोग्ये कर्मणि भवानध्यरोपि चिराय यत् ॥" ३२-५

महाकाव्येऽस्मिन् क्वचिन्नाट्यतत्त्वानां समायोजनमपि दृश्यते । यथा वरवधूविलोकनाय समुत्सुकानां पुरवासिनामाङ्गिकाभिनयौचित्यम्—

"ततस्तदालोकनतत्पराः नराः पुरस्त्रियो नूतनचैलभूषणाः ।
सकौतुकारूपजगन्मनोहराः पृथुस्तनीकाः समुदीयुरध्वनि ॥" १५-१७

सूक्तकथनानि– कविना श्रीसीतारामभट्टेन स्थाने-स्थाने सूक्तीनां प्रयोगोऽपि कृतः । सूक्तिप्रयोगे नूतनत्वं सदाचारगर्भत्वमपि दृश्यते । कानिचिन्महत्त्वपूर्णसूक्तकथनानि, यथा—

(१) क्व दार्ढ्यभाग्भंगमुपैतु वस्तु । २-१५
(२) प्रत्यक्षमुल्लंघयितुं क ईशः । २-१६
(३) योग्येन योग्योऽर्हति योगम् । ३-१२
(४) स्वार्थो जनानां हि विवेकलोपी । ६-१०
(५) पूर्णञ्च लब्ध्वापि न मोदमेति यस्मिन् रुचिस्तत्र मनोविनोदः । ६-२२
(६) केषां कोऽर्थो भवेदसुलभः सुलभं हि सर्वम् । १३-१६
(७) स्वर्गं त्यजन्ति न कदापि हि कल्पवृक्षाः । १३-२४
(८) पुंसामदेयं हि किमस्ति यद्वा । २४-१६
(९) विरुद्धाविरुद्धं कदाचिन्महान्तः प्रकुर्वन्ति सन्तो विपन्ना भवन्तः । २५-४

(१०) अदृष्टस्यैव दृष्टत्वाद् देहिष्वारोप्यते जनैः । ३२-६

वैशिष्ट्यम्—

पर्वणीकरोपाह्वश्रीसीतारामभट्टविरचितं नलविलासमहाकाव्यं महाकाव्य-कोट्यां सर्वगुणसम्पन्नं दृश्यते । कविनाऽत्र कल्पनावैभवस्य, रसपरिपाकस्य, पात्रचित्रणस्य शब्दसौष्ठवस्य गुणालंकाराणाञ्च सम्यग् वर्णनं विहितम् । प्रकृतिवर्णने मानवभावानां वर्णने च कविना सूक्ष्मेक्षिकया पर्यालोचनं कृतम् । नैषधीयचरितं यद्यपि चरितनाम्ना कथ्यते, परन्तु तत्र नलस्य सम्पूर्णं चरितं नैवोपस्थापितं श्रीहर्षेण । चरितन्तु पूर्णमेव भवति, अतस्तदपूर्णं वर्तते, एवं विचार्यैव सत्यपि नैषधीयचरिते कविना नलविलासे महाभारतीयनलोपाख्यानानुसारं नलस्य सम्पूर्णं चरितं सकलो विलासश्च प्रस्तुतीकृतः ।

नैषधीयचरिते द्वाविंशतिसर्गेषु श्लोका अत्यधिकाः सन्ति, परन्तु नलविलासे कविना प्रत्येकस्मिन् सर्गे पंचविंशतिश्लोकाः प्रस्तुताः, तेषु च द्वाविंशतिसर्गपर्यन्त नैषधीयचरितानुसारं कथानकस्य क्रमशो विभाजनमस्ति, परस्तान्महाभारतीयमवशिष्टमाख्यानं समुपस्थापितम् । अन्ते च नलदमयन्त्योः वानप्रस्थाश्रमे प्रवेशं दर्शयित्वा सद्गृहस्थधर्मस्य भारतीयसंस्कृतेश्च प्रतिष्ठा कृता ।

उक्तविवेचनानुसारं संस्कृतसाहित्ये श्रीसीतारामभट्टस्य महद्वैशिष्ट्यं वर्तते, विशेषतो जयपत्तनराज्यस्य संस्कृतरचनाकारेषु सातिशयमहत्त्वं स्वीक्रियते । नलविलासमहाकाव्ये तस्य प्रतिभाविलासः सहृदयहृदयान् चमत्करोति ।

# भवभूतेर्नाटकेषु स्वप्नविश्लेषणम्

लेखिका—श्रीमती उषा गोस्वामी, बीकानेर

आधुनिक मनोविज्ञाने स्वप्नस्य महत्त्वपूर्ण स्थानमस्ति। निद्रावस्थायामपि मनुष्यस्य मानसिक्यः प्रक्रियाः सातत्येन प्रचलन्ति, स्वप्नश्च एपामेव क्रियाणां सातत्यबाधिका विशिष्टावस्थेति।[1] मानवस्याभिलापा अनन्ताः सन्ति, अतएव कथितम्–अनन्ताः वै कामाः। सत्यमेव यत् मानवस्य सर्वाः अभिलापाः पूर्णतां नायान्ति, तत एव सः तासां दमनं विदधाति। ता एव दमिताभिलापा याः खलु परिस्थितिवशात् तुष्टा नैव जायन्ते, अचेतने मनसि च निवसन्ति। सर्वदैव स्वाभिव्यक्तौ ताः प्रयतन्ति अवसरं च समवाप्य चेतनमनसि समायान्ति। स्वप्नस्तु तासां तुष्टेः साधनमिति वक्तुं शक्यते। जैसेन महोदयेनापि कथितम्—

"स्वप्नगतस्य वस्तुनो निश्चयस्तु वैयक्तिकेन व्यक्तित्वेन, वयसा, रत्या, जीवनस्य स्थित्या, शिक्षया, अभ्यासेन किञ्च समग्रस्यैव गतजीवनस्यानुभवैः कर्तुं पार्यते।"[2]

यैः संस्कृतनाटककारैः संस्कृतनाट्यसाहित्यस्य उत्कर्षाय प्रयतितं, तेषु भवभूतिरग्रणीः। भवभूतिना रचितानि नाटकानि न केवलं करुणर-

1. There is a Continuity of mental activities during sleep and a dream is merely a phase of this Continuity of activities. Fisher V. E. : An Introduction to Abnormal Psychology. P.–405
2. The content of dreams is more or less determined by the individual personality, by age, sex, Stationin life: education, habits and by events and experiences of the whole past life. Jaasen : Psychology 1855, P. 530

सदृष्ट्या प्रशंसनीयानि अपितु मनोवैज्ञानिके धरातलेऽपि तानि प्रखरताम् आवहन्ति । अस्य नाटकेषु सर्वाण्येव पात्राणि स्थलानि च मनोवैज्ञानिक्या सामग्र्या समाविष्टानि संदृश्यन्ते । अनेन रचिते उत्तररामचरिते मालतीमाधवे च रामसीतामदयन्तिकादिभिः कृतं स्वप्नवर्णनं प्राप्यते । तत्र खलु *स्वप्नस्य* माध्यमेन तेषामतृप्ताः किं वा दमिताश्च अभिलाषाः मुखरतामायान्ति ।

उत्तररामचरितस्य प्रथमेऽङ्के जनकजा रामेण सह शेते । स्वप्नगतायां स्थितौ च सा आत्मानं रामेण वियुक्तमाभाल्य आर्यपुत्र कुत्रासि "इति समुच्चारयति । *जाग्रदवस्थायामपि सा" हा धिक् ।* दुःस्वप्नरणरणकविप्रलब्धान् आर्यपुत्रशून्यमिवात्मान पश्यामि "इति कथयति । यद्यपि सा स्वस्वप्न महत्त्वपूर्णं न मनुते । किन्तु अस्य स्वप्नस्य किमपि महत्त्वं विद्यते । मनोविज्ञानदृष्ट्या तु अस्माकं सर्वासामेव क्रियाणां प्रतिक्रियाणां इंगितानां च यत्किञ्चत् कारणम् अवश्यं भवति । अत्र खलु व्यक्तिजीवने स्वप्नस्य महत्त्वपूर्णस्थानम् अंगीकरणीयम् । तदनुसारं रात्रिस्वप्नो दिवास्वप्नो वा कामपि भविष्यवाणी आगामिसूचनां वा न ददाति, अपितु स्वप्नद्रष्टुरचेतने स्थितानामतुष्टकामनानां संकेतमपि करोति । यथा गिल्फोर्डमहोदयेन कथितम्—

The forecasting of events in dreame is probably no better. if as good, as while we are awake. The belief in my mystrerims superiority of dreams as prophetic devices must be put down as wishful thinking.[1]

सीतायाः स्वप्नेन प्रश्नस्त्वेषु सञ्जायते यद् रामस्तु सीतायाः समीपे एव विद्यते, अतः किमर्थं सा स्वप्नावस्थायामात्मानं रामेण *वियुक्तां* पश्यति । स्वप्नस्य विश्लेषणेन एतद् ज्ञायते यत् सीताया अवचेतने मनसि परित्यागस्याशंका अविद्यत । लंकायां दीर्घकालाय निवासानन्तरं तस्या मनसि एष सन्देहः उत्पन्नो भवेत् यत् रामस्य मानसे प्रजाजन-मानसे वा तदीयां पवित्रतामालक्ष्य सन्देहस्य कोऽपि बीजम् उप्तम् । अतः खलु रामः

1 J. F. Gilford : General Psychology, P. 469

तां स्वीकरिष्यति न वा इत्येष सन्देहः सीतायाः मनसि सन्निविष्टमासीत्। सचेतने मनसि तु सा नैजस्य सन्देहस्य दमनं कतिपयैः तर्कैर्विदधाति। विशेषतः तु रामस्याग्रे तया अग्निपरीक्षापि प्रदत्ता, अन्यच्च रामस्य स्नेहोऽपि पूर्ववदेव आसीदिति। इत्यपि तया प्रत्यक्षीकृतम्। परं यथा नाटकेऽपि प्रदर्शितं सा शयनात् पूर्वं वनप्रवाससम्बन्धितानि चित्राणि अवलोकयति, अतः अचेतनस्था तदीया सन्देहभावना चेतने मनसि समागन्तुं स्वप्नमाध्यमेन तुष्टिमार्गमन्वेषयति। एतेन तु मनसोऽचेतनो भागः सिध्यति। अत्र दमिता अभिलाषा अज्ञातरूपेण तिष्ठन्ति। अनेन सार्धमेव एतदप्यभिव्यज्यते यत् स्वप्नोऽपि व्यक्तिगतानामपूर्णाभिलाषां तृप्तेरेकमात्रं साधनमिति।

प्रश्नस्त्वयं यत् सीतायाः चेतने मनसि स्वपरित्यागस्य विचारः कथं समुद्भूतः। यतः परित्यागस्य सूचनां समवाप्य सा शोकाभिभूता दारुणाघातं प्राप्नोति। अतः कथं सा परित्यागविषये चिन्तयति ?

स्पष्टतोऽस्य द्वौ कारणौ विद्येते—

(1) तस्या लङ्कायां निवासेनाऽयोध्यानिवासिनो जना रामश्च तस्याश्चरित्रमसन्दिग्धं नैव मेनिरे।

(2) ता वनस्य उन्मुक्तं वातावरणं पुनराह्वयति स्म। तदीयं स्वाभिमानमग्निपरीक्षायां अवश्यमेव खण्डितमासीत्। अनया परीक्षया रामं प्रति कश्चनाक्रोशोऽपि समुद्भूतो न वेति चिन्तनीयम्। यद्यपि लोकतुष्टये तादृश्यग्निपरीक्षा आयोजिता, किन्तु अनेन कारणेन सीताया हृदयं कदापि सन्तुष्टं नासीत्। अतः तस्या अवचेतने मनसि सदैव परित्यागस्य आशंका अविद्यत। अस्मिन् संदेहे जनसमुदायस्य लंकायामविद्यमानतः रामस्य च लोकाराधनमहत्त्वमपि सम्मिलितम्। एतदतिरिक्तं वने स्वतन्त्रविचारणायापि तस्या अदम्याभिलाषा विद्यते स्म। अयं तस्या उत्कटेच्छायाः परिणाममासीत् यद् राजवैभवस्य परित्यागं कृत्वा तया वने रामेण सह गन्तुं निर्णयः कृतः। यद्यप्यनेन पतिप्रेमापि समभिव्यक्तं, परमत्रैवदप्यभिव्यज्यते यदयोध्यानगरस्य बन्धनयुक्तजीवनस्य तुलनायां वनस्योन्मुक्तजीवनं तस्यै समधिकं रोचते स्म। चित्रदर्शनावसरेऽपि सा

पुनरपि वने गन्तुं रामाय निवेदयामास—'जाने पुनरपि प्रसन्नगम्भीरासु वनराजिषु विहृत्य पवित्रनिर्मलशिशिरसलिलां भगवतीं भागरथीमवगाहिष्य इति।'[1]

परं सा न केवलं वननिवासाभिलाषाया अपि तु परित्यागाशङ्काया अपि दमनं चकार। किन्तु तया कृतं दमनं निषेधात्मकमासीत्। यतः सततं प्रयत्ने कृतेऽपि स्वप्नमाध्यमेनेयमाशंका प्रकटीबभूव। एतत् तु स्पष्टमेव यदचेतनस्था एषणा सदैव प्रयत्नशीला भवन्ति। अचेतनस्थानामेषणानां च शमस्तु न संभवः। यद्यपि ताः खलु दमिता एव तिष्ठन्ति, किन्त्ववसरं समवाप्य पुनः चैतन्यमागच्छन्ति। अनेनैव कारणेन जनकजा स्वप्नावस्थाया स्वात्मानं रामेण वियुक्तां दृष्ट्वाऽऽकारयतिआर्यपुत्र कुत्रास्ति।" किन्तु यथैव सा जागर्ति तथव तदीया सा भावना चेतन मनसः तर्कैः पुनरपि दम्यते। सा च स्वकीयाशंकां संरुध्य कथयति हा धिक्, हा धिक्! दुःस्वप्नरणरणकविप्रलब्धाः आर्यपुत्रशून्यमिवात्मानं पश्यामि।" अनेन प्रकारेण सीताया अयं स्वप्नो मनोवैज्ञानिकीं दृष्टिं प्रकटयति। अस्या स्वप्नेतद्गतासार्थकतापि लक्षिता सजायते। सीतायाः स्वप्नदर्शनम् अवचेतने स्थितस्य परित्यागस्य भावनां प्रथयति। सत्यमेव सा जानाति स्म, यत् तस्याः परित्यागो भविष्यति।

नाटकस्य तृतीयेऽङ्के रामस्य स्वप्नोऽपि तस्य अतृप्ताभिलाषाणां दमनं सूचयति। लोकैषणाप्रभावेणैव रामो प्रियतमा सीतां परितत्याज। किन्तु निर्दोषां सीतां प्रति स्वनिर्णयं अनैतिकमनुपयुक्तं च गणयामास। निर्णयस्य विवशतया स अपराधभावेनयुक्तोऽजायत। लोकदृष्ट्या तु तेन परित्यागः कृतः, किन्तु मनसि सः सीतामेकक्षणमपि न विस्मरति स्म। तां विना तस्य जीवनं शोकस्यागाधसागरे निमग्नं प्रतीयते। धैर्यातिरेकात् सः स्वदुःखं जनसमुदायस्याग्रे न प्रकटीकरोति, किन्तु एकान्तक्षणेषु सः सीतायै उच्चैः क्रन्दति, व्याकुलो भवति स्वजीवनं च व्यर्थं जानाति। स अनेनैव हेतानु सम्पूर्णनाटके विषादयुक्तात्मग्लानियुक्तश्च प्रदर्शितः। नाटकस्य तृतीयेऽङ्के तु पंचवटीमवलोक्य तदीयो विषादः सीमामुल्लंघयति। तत्र सर्वाण्येव स्थलानि दृष्ट्वा सः सीतया सह व्यतीतानि विगतदिनानि

---

1. उत्तर रामचरितम्, ३/२६, ४५, ४८

स्मरति। सीताया वियोगेन स उन्मत्त इव संजातः। सः सीते-सीते इत्यार्त्तनादमुच्चविलापं च करोति।' सीतायाः स्नेहातिरेकं श्रद्धाविशेषं च स्मृत्वा स आत्मानमपराधिनमिवमनुते। स्वनिर्णयस्यकृते सः पश्चात्तापमपि समनुभवति। सः शोकस्यातिरेकावस्थां प्राप्नोति, परमस्माद्दुखात् स्वरक्षार्थं स मूर्च्छामाश्रयते। मनोविज्ञानानुसारं मूर्च्छा तु पलायनस्यैकं साधनमस्ति। यदा व्यक्तिर्दुःखस्य चरमावस्थां प्राप्नोति, तदा स मूर्च्छायाः आश्रयं संप्राप्य दुःखात् पलायते। अनेन स वातावरणेन सह किमप्यःभियोजनं विद्धाति। इयमवस्था दुःखात् पलायितमन्तिमैव भवति। मूर्च्छासमाप्तौ जागृत स नयनोन्मीलनमविधाय स्वप्नगतां सीतामेव पश्यति। सः सीतां दृष्ट्वा नयनोन्मीलनं विना वासन्त्या सह सीताविषयकं वार्तालापमपि संचालयति–सखि वासन्ति। दिष्ट्या वर्धसे। अजातेऽपि सीतादर्शने सः तस्याः स्पर्शसुखं त्वनुभवति –

"स एवायं तस्यास्तदितरकरौपम्यसुभगो,
मया लब्धः पाणिर्ललितलवलीकन्दलनिभः।"[1]

स्वप्ने एव सः सीतया कृतं हस्तपार्थक्यमप्यनुभवति—

"करपल्लवः सः तस्याः सहसैव जडो जडात्परिभ्रष्टः
परिकम्पिनः प्रकम्पी करान्मम स्विद्यतः स्विद्यन्।"[2]

स्वप्ने तु स आत्मानमपि धिक्करोति—"धिक् प्रमादः"। यदा वासन्ती पृच्छति "कुत्र सखी ?" तदा स जागृतः सन् कथयति—"सत्यं नास्त्येव सा।" वस्तुतः रामेणायं परित्यागो लोकाराधनाय कृतः, किन्तु धार्मिकदृष्ट्या निर्दोषा गर्भवती च सीतापरित्यागं नार्हति, इत्यपि सः सर्वथैव जानाति स्म। अतः खलु सः सापराध एव आसीत्। किन्तु स अपराधस्यैनां भावनां सर्वदैव चेतने मनसि तर्कैः दमयति स्म। "लोकानुराधनं एव नृपस्य कर्त्तव्यमित्यात्मकेन विचारेण सः आत्मानं सान्त्वयति स्म। प्रजाहिताय प्राणानपि त्यजन्तो नृपतयः संजाताः, अतः तेनापि प्रजाराधनं कर्त्तव्यम्। अतएव लोकपरिवादस्य हेतोः सः प्रियतमामपि

1. उत्तर रामचरितम्, ३/४०
2. उत्तररामचरितम् ३/४१

पत्नीं त्यक्तुं विवशो भवति। किन्तु तस्यायमपराधभावः स्वप्नमाध्यमेनैव प्रकटी बभूव। एतेनेदमपि सिध्यति यत् तेन सीताया मानसिकः परित्यागो नैव कृतः। अयं परित्यागः केवलं प्रजाजनतुष्ट्यर्थमासीत्। निर्दोषपत्न्याः परित्यागेन स स्वात्मानमचेतनेन मनसाऽपराधिनमिव मन्यते। एतद्विषये पेजमहोदयेन कथितम् —

Dream is the royal road to the unconscious:[1]

वस्तुतः स्वप्नस्य विषयाः पूर्वानुभवाधारिता भवन्ति। परं निद्रावस्थायां चेतनं मनो दुर्बलं संजायते। अत तत्कृतः प्रतिरोधोऽपि न्यूनतमो भवति। परिणामतोऽव्चेतने स्थितानामेषणानामभिव्यक्तिः स्वप्नमाध्यमनैव जायते। फ्रायडमहोदयेनापि भणितम्—

Dream is that unconscious mental process of sleeping state by which our unconscious desires and wishes are expressed and fulfilled in a disguised form.[2]

एडलरजुंगफ्रायडादिसमस्तमनोवैज्ञानिकैरुक्तेतदेव प्रतिपादित यद् स्वप्ने दमितानां तासामभिलाषाणां प्रकटीकरण भवति। यानि खल्वचेतनेऽर्द्धचेतने वा निवसन्ति। फ्रायडमहोदयेन स्वप्नसम्बन्धे विशदविधारणा कृतास्ति। सः मन्यते यत् स्वप्नेऽतुष्टैषणानां पूर्त्तिः प्रतीकरूपेणाऽभिव्यज्यते। तदनुसारं तश्चैषणा मुख्यतया रतिसम्बन्धिन्यो भवन्ति।I यद्यपि तत्सिद्धान्त ग्रन्थे मनोवैज्ञानिका न स्वीचक्रुः, तथापि मनोविश्लेषणपद्धत्यामयं सिद्धान्तः पर्याप्तरूपेण प्रयुज्यते।

अनेन स्वप्नविश्लेषणेन स्पष्टमिदं यन्मानवमनसि अतुष्टकामनापूर्त्तेः प्रयासः स्वप्नमाध्यमेन भवति। किन्तु समग्र स्वप्नः कामनासंज्ञयाऽभिधेयः। अयं इच्छापूर्तिसिद्धान्त इत्यपि कथ्यते। एषा स्वैका विशिष्टमानसिकी प्रक्रिया भवति, या निद्रावस्थायां प्रचलति। भवभूतिना रचिते

---

1. Dr. Labhsingh & Dr. Govind Tiwari Essentials of Abnormal Psychology : P. 200
2. Frend : Psycholosy.

उत्तररामचरितेऽपि प्रस्तुताः सीतारामयोः स्वप्ने तदीया अतृप्ताः किं वा दमिताश्च वृत्तयो मुखरतामायान्ति। तदेव मालतीमाधवे मदयन्तिकायाः स्वप्नेऽपि दृष्टिगतं भवति। व्याघ्रेणाक्रान्ता सा मकरन्देन रक्षिता। तस्य पौरुषं किं वा शारीरिकं सौन्दर्यं दृष्ट्वा सा अनायासेनैव तं प्रति समाकृष्टा भवति। परस्परं तयोरनुरागः प्रथमदृष्ट्यामेव जनिं लेभे। मदयन्तिका तु मकरन्दं स्वप्ने पश्यति, तस्य स्पर्शसुखं चाऽनुभवति। नाटकस्य सप्तमेऽङ्के सा लवङ्गिकया सहवार्तालापे स्वप्नं वर्णयति। तेनाप्यचेतनस्थाया अभिलाषायाः प्रकटीकरणं भवति। मकरन्दस्य प्रेम्णाऽभिभूता सा मकरन्देन सह समागमाय व्याकुलाऽऽसीत्। किन्तु सामाजिक प्रतिबन्धं ध्यात्वा सा स्वकामनापूर्त्यां नैव सफलीबभूव। अतो ह्यवचेतने मनसि स्थिता तस्या वृत्तिः स्वप्नमाध्यमेन तुष्टिं लभते। अनेन सिद्धं यत् सर्वेषां जनानां जीवने स्वप्नस्य महत्त्वपूर्णं स्थानमस्ति। तच्च सर्वथैवात्मगतं, आत्मकेन्द्रितं, प्रतीकात्मकं, अचेतनसम्बद्धं च भवति। स्वप्ने तु व्यक्तिरतुष्टेच्छापूर्त्याः प्रयासं करोति, आत्मानं च परिस्थितिभिर्वातावरणेन च सह समायोजयति। ततः किमेष सिद्धान्त स्वीकरिष्यते यन्न कोऽपि व्यक्तिः कदापि स्वपिति, प्रत्युत सः किञ्चित्कालं यावत् चेतनेन मनसा जागर्ति। तदनन्तरं च सः स्वप्नस्थः सन्नचेतनेन मनसा जागरणं विदधाति।

---

1. Frend maintains. (1) that all dreams are wishful pillments, hence there can be no physical Causes (2) that nothing in random or without meaning in a dream (3) that dreams are symbolic and their meaning is basically sexual.
   Gannon : Psychology, P. 265

# राजस्थानस्य संस्कृतलहरीकाव्यपरम्परा

—कृष्णचन्द्र शर्मा, शोध छात्रसंस्कृत विभागस्य, राज वि. वि., जयपुरम्

"अपारे काव्य संसारे कविरेकः प्रजापतिः।
यथास्मै रोचते विश्वं तथेदं परिवर्तते।:"

एवञ्च "कविर्मनीषी परिभूः स्वयम्भूः" आभ्यां द्वाभ्यां कथनाभ्यां परिलक्ष्यते यत् कविः प्रजापतितुल्यो भवति। कविः काव्यरचनाक्षेत्रे स्वतंत्रो भवति सः स्वेच्छानुकूलं काव्यरचनां कृत्वा विश्वस्य मंगलं साधयति साहित्यस्य च सर्वासु विधासु बुद्धि प्रसादान् काव्यरचनां प्रकुर्वन् अभिनव-विधानां आविष्कारं करोति। वैदिक कालादारभ्य संस्कृत साहित्य क्षेत्रे अनेकाभिनव-विधानां प्रादुर्भावः संजातः।

अस्यां परम्परायां राजस्थान प्रान्तेऽपि सुरभारती समुपा सकानां शासकाना राज्याश्रयत्वात् संस्कृत साहित्यस्य सर्वासु विधासु काव्यरचनां प्रकुर्वद्भिर्विभिन्नैः विद्वद्भिः संस्कृत साहित्यस्य प्रसाराय स्वयोगदानं प्रदत्तम्।

राजस्थान संस्कृत साहित्ये सर्वासां विधानामिव मुक्तकक्षेत्रे ऽपि-'लहरीकाव्य' नामिकायाः नव्यविधायाः प्रादुर्भावः संजातः अष्टा दश शताब्द्याम्। संस्कृत साहित्ये लहरीकाव्यपरम्परायाः प्रवर्तको भगवत्पादः श्रीमच्छंकराचार्य आसीदितिमन्यते। तेन "सौन्दर्य लहरी" नामकं लहरीकाव्यं विरचितम्। अस्मिन् लहरीकाव्ये आद्याशक्तेर्भगवत्याः त्रिपुर-सुन्दर्याः स्तवन विहितम्। संस्कृत साहित्येस्तोत्रपरम्परा अतीवप्राचीना समृद्धा च वर्तते। शैव-वैष्णव-बौद्ध-जैनादिभि अनेकैः कविभिः अस्याः परम्परायाः समुपोषणं कृतम्। एभिर्कविभिः नैकशः धार्मिक-गीतिकाव्यानां रचना विहिता। एपुधार्मिक गीतिकाव्येषु लहरीकाव्यानां समावेशः कर्तुं-शक्यते। संगीतात्मकता किंवा गेयात्मकता लहरीकाव्यानांगीतिकाव्यानाञ्च प्राणप्रतिष्ठापको धर्मः विद्यते। यदा कस्यचित् कवेः भावलहरी।

निश्चित-छन्दोबद्ध-रूपेण सचेतना भूत्वा विचाराणां साकारस्वरूपं प्रस्तोतुं सक्षमा भवति तर्हि सा भावलहरी लहरीकाव्यरूपे समाहिता भवति। शान्तिसमुद्रे यथा मंदमंदगतिमता वायुना एका लहरी समुत्थाप्यते, एवञ्च सा लहरी अन्यासां लहरीणां समुत्थापनं प्रकुर्वती एकपरम्परारूपे साकारा भवति, तथैव शान्तकवेः हृदयात् चिन्तनरूपाभिव्यक्ता विचारलहरी-क्रमशः अनेकासां विचारलहरीणां जन्म विदधाति । एवञ्च एतादृशानां भावलहरीणां मूलरूपं काव्यस्वरूपे लहरीकाव्यम् इति नाम्ना सहृदयानां समक्षं प्रस्तुतं भवति ।

सुप्रसिद्धविदुषा डॉ० रुद्रदेवत्रिपाठि महोदयेन 'लहरी लीलायितम्" इत्यस्मिन् लेखे अधिकशतसंख्याकानां लहरीकाव्यानां समुल्लेखः कृतः ।[1] एवञ्च डॉ० हीरालालशुक्ल महोदयेन आधुनिक संस्कृत–साहित्यस्य इतिहासः इत्यस्मिन् ग्रन्थे षोडश लहरीकाव्यानां समुल्लेखः कृतः । एतदतिरिक्तं पञ्च षट् वा लहरीकाव्यानि स्वतंत्ररूपेण समुपलभ्यन्ते अनेन । प्रकारेण इयं लहरीकाव्यानां संख्या पञ्चविंशत्यधिकशतं भवति ।

राजस्थानप्रान्ते अद्यावधि-अधोलिखिता लहरी-काव्यकाराः संजाताः । कविकलानिधिः श्रीकृष्णभट्टः, कविमल्लः श्रीहरिवल्लभभट्टः, पं. श्रीसूर्यनारायणः शास्त्री, कविशिरोमणिभट्टः श्रीमथुरानाथः शास्त्री, आशुकविः पं. श्रीहरिशास्त्री दाधीचः, श्रीगोपीनाथो द्राविडः, मनीषी पं. विद्याधरः शास्त्री, मेधाव्रताचार्यः, डॉ० श्रीरसिकविहारीजोशी, श्रीमधुकरः शास्त्री, श्रीहरिनारायणः चोयलः इत्यादयः । एभिः सुरभारतीसमुपासकैः क्रमशः सौन्दर्यलहरी-शृंगारलहरी--उद्योगलहरी--मनालहरी--वाणीलहरी--काशीलहरी-लीलालहरी---मत्तलहरी---करुणाकटाक्षलहरी---मारुतिलहरी---हनुमल्लहरी इत्यादि पञ्चदशसंख्यकानां लहरीकाव्यानां रचना विहिता ।

अत्र क्रमेण उपर्युल्लिखितलहरीकाव्यानां विवेचनं प्रस्तूयते । कविकलानिधिः श्रीकृष्णभट्ट —राजस्थानप्रान्ते लहरीकाव्यपरम्परायाः प्रारम्भः जयपुरनगरादभवत् । जयपुर-नगर संस्थापकस्य सवाईजयसिंह द्वितीयस्य (१६६९–१७४३ ई. त:) राज्यसभायाः सम्मानितेषु नवरत्नेषु

१. लहरीलीलायितम्–डॉ. रुद्रदेवत्रिपाठी, सागरिका–त्रैमासिक संस्कृतपत्रिकायाम् सागरतः प्रथमवर्षस्य प्रथमे अङ्के प्रकाशितो जातः ।

कविकलानिधेः श्रीकृष्णभट्टस्य नाम राजस्थानप्रान्ते संस्कृतभाषात्मक-लहरीकाव्यस्य प्रवर्तकरूपेण समुल्लेखनीयम् वर्तते। तेन भगवत्पाद-श्रीशंकराचार्यस्य सौन्दर्यलहर्याः अनुकरणे तथाविधभावनायुक्तं भगवत्याः त्रिपुरसुन्दर्याः स्तवनं विहितम्। तदनुकरणे सुन्दरीस्तवराजस्य किं वा सौन्दर्यलहर्याः प्रणयनं कृतम्।

प्रामाणिक-साक्ष्यानुसारं कवेरस्य स्थितिकालः १६७५-१७६१ ई० वर्ष स्वीक्रियते। कविकलानिधि-श्रीकृष्णभट्टस्य ईश्वरविलासमहाकाव्यम् पद्यमुक्तावली इमे त्रयो ग्रन्थाः प्राच्यशोध-संस्थानम्, जोधपुरतः प्रकाशिताः, एवञ्च प्रशस्तिमुक्तावलिः, सुन्दरीस्तवराजः, राघवगीतम्-सरसरसास्वादसागरः–उपदेशसाहस्रीटीका पातजलयोगभाष्यम्-इत्यादयः षड् ग्रन्थाः अप्रकाशिता। एतदतिरिक्तं द्वे रचने डिंगलसाहित्ये एकोनविंशतिः रचनाः व्रजभाषायां च विद्यन्ते।

कविकलानिधि श्रीकृष्णभट्टविरचितस्य सुन्दरीस्तवराजस्यापरनाम "सौन्दर्यलहरी" विद्यते। अस्यामप्रकाशितरचनायां सप्ताधिक-शतसंख्याकानि पद्यानि सन्ति। इमानि सर्वाणि पद्यानि शिखरिणी-छन्दसि निबद्धानि सन्ति। अनेन पद्येन सुन्दरीस्तवराजस्य प्रारभः कृतः श्रीकृष्णभट्टेन–

शिवः शुद्धो बुद्धः शमितगुणवृन्दव्यतिकर·
समर्थः किं सर्गस्थिति-विलय-संख्याः कलयितुम्।
तवैवायं मार्तविधुकर–परीरम्भसदृशः
कटाक्षव्याक्षेपो जलधिमिव विक्षेपयति तम्॥१॥

श्रीकृष्णभट्टेन आद्याशक्तेः भगवत्याः त्रिपुरसुन्दर्याः नखशिखवर्णनं प्रकुर्वता तान्त्रिकगूढतमरहस्याना वर्णनमपि विहितम्। आद्यशंकराचार्यस्य सौन्दर्यलहर्याः अन्तिमपद्यमिव कविकलानिधि-श्रीकृष्णभट्टेनापि अन्तिमं पद्यं नकारानुप्रासयुक्तं कृतम्—

"नराणां निष्ठायै निगम-निरतायै नयमृते
नुतीना निघ्नायै निहितनयनायै निजजने।
निरुद्धायै नानानवनिगदितायै नवगिरा
नुतायै नित्यायै निभृत-निभृतायै नम इदम्॥"

साररूपेणेदं वक्तुं शक्यते यद् तान्त्रिक-रहस्यपरिपूर्णेयं रचना भगवत्पाद-विरचित-सौन्दर्यलहर्या अनुप्राणिता रचना विद्यते।

कविमल्लः श्रीहरिवल्लभभट्टः—महाराजाधिराजसवाईरामसिंह द्वितीयस्य (१८३५-१८८० ई०) शासनकाले म. सवाईमाधवसिंहद्वितीय (१८८०-१९२२ ई०) शासनकाले च श्रीहरिवल्लभभट्टः संस्कृतसाहित्यस्य प्रसिद्धो विद्वान् आसीत्। गौतमगोत्रीयः ब्राह्मणभट्टः श्रीलल्लूराममहाभागानां पुत्रद्वयमास्ताम्। श्रीकृष्णरामभट्टः हरिवल्लभभट्टश्च। महाभागौ इमौ अष्टादश ग्रन्थानां प्रणेतारौ आस्ताम्। हरिवल्लभस्य रचनासु जयनगरपंचरंगम्, कान्तावक्षोजशतोक्तयः ललनालोचनोल्लासः, शृंगारलहरी-श्लोकबद्धदशकुमारचरित्रम्, गीर्यलंकाराः, देवीस्तोत्रमित्यादयः प्रसिद्धाः सन्ति।

शृंगारलहरी नाम्नीयं रचना चतुर्नवत्यधिकाष्टादशशततमे ईसवीये खिष्टाब्दे निर्णयसागरयन्त्रालये बम्बईतः प्रकाशिता जाता। रचनायामस्यां विविध-छन्दोयुक्तानि श्याधिकशतं पद्यानि विद्यन्ते। कविना शृंगाररसस्य समस्तविभावानुभावसंचारीभावानां प्रदर्शनपूर्वक अस्याः लहर्याः विभिन्न-पद्यानां रचना विहिता। प्रारम्भे आशीर्वादात्मके मंगलाचरणरूपे देवकीनन्दनस्य श्रीकृष्णस्य स्तवनं कृतम्। यथा—

यस्त्यक्तागार कार्यव्रजनिखिलवधूः प्राग्गृहीत्वैव चक्रे
किञ्चिद्दंशस्य खण्डं दधदथ तु पुनः क्षेपणीं सोऽध्युनैपः।
वत्स्यत्यस्मासु घूर्तः कथमिति यमुना नाविभीत्यालपन्तीः
पश्यन् काश्चिद्विदग्धाश्चिरवतु युवा देवकीनन्दनो वः॥१॥

द्वितीयं तृतीयपद्यमपि च आशीर्वादात्मकमंगलाचरणस्य उदाहरणंस्तः। कवेः दृष्ट्या शृंगार लहर्याः प्रारंभः सायंकालादेव भवति। अस्मिन् लहरीकाव्ये उपमा-रूपक-स्वभावोक्ति-भ्रान्तिमान्-उत्प्रेक्षा इत्याद्यलंकाराणां माध्यमेन शृंगाररसस्य मनोहारि चित्रणं कृतम्। अस्मिन्वर्णनप्रसंगे ललनानां विभिन्नांगानामलंकारमयवर्णनमपि विहितम्।

कविना शृंगारस्य वर्णनं प्रकुर्वता त्रीणि समस्यापूर्त्यात्मकानि पद्यान्यपि प्रस्ततानि। समस्येदं वर्तते यत्

"यस्मिन्व्योमतलं गते विलसितः सोऽयं कलानां निधिः।"

उदाहरण स्वरूपे पद्यमेकं प्रस्तूयते—

"पातुं वारि वनस्थलीषु वदनं न्यक्कुर्वते रोहिणा
वक्त्रं दर्पणविभ्रमाद्विदधते नीचैः क्षितौ बालकाः।

मुग्धा भ्राम्यति दीपिकां शमयितुं कान्तेन विस्मायिता
यस्मिन् व्योमतलं गते विलसितः सोऽयं कलानां निधिः ॥१३॥"

अस्याः लहर्याः अन्तिमं पद्यमिदं वर्तते–

नाना प्रसादनानि क्रियमाणानि प्रियेण बालायाः ।
तत्सरसाकृते खलु भासन्ते दोहदानीव ।।१०३।।"

साररूपेणेयं शृंगार लहरी कवेः हरिवल्लभभट्टस्य शोभना कृतिरस्ति ।

पं. श्री सूर्यनारायणः शास्त्री–श्रीशास्त्रिमहाभागानां जन्म वैशाखशुक्लपक्षे सप्तम्याम् चतुरधिक एकोनविंशतिशततमे विक्रमाब्दे हरियाणा प्रान्तान्तर्गते महेन्द्रगढनगरे गौड़ब्राह्मणपरिवारे अभूत् । श्रीमतां पितुर्नाम पण्डितप्रभुदयाल शर्मा आसीत् । वीणापाणेः भगवत्याः सुरसरस्वत्याः सेवां प्रकुर्वतां श्रीमतां मार्गशीर्षकृष्णदशम्याम् अष्टाधिक द्विसहस्रे विक्रमाब्दे निधनम् जातम् । स्वजीवनकाले श्रीमद्भिः पञ्चसप्ततिरचनानां प्रणयनं विहितम् । तेषु एकमैतिहासिक-महाकाव्यम्, पञ्चलघुकथाः, चतुस्त्रिंशत् गद्यलेखाः, अष्टौ लघुकाव्यानि, एक लहरीकाव्यमित्यादय. प्रमुखतः उल्लेखनीयाः सन्ति ।

उद्योग-लहरी–चतुःपञ्चाशत् पद्यमयी श्रीमतां उद्योगलहरीति रचना संस्कृतरत्नाकरस्य द्वितीयवर्षस्याष्टम-सचिकायां १९३४ तमे अगस्त मासे जयपुरतः प्रकाशिता जाता । अस्मिन् लहरीकाव्ये शिखरिणी छन्दसः प्रयोगो विहितः । एषु चतुः पंञ्चाशत् पद्येषु कविना उद्योगस्य महिम्नः वर्णनं कृतम् । अस्या. रचनायाः प्रारंभः कविना अधोलिखितेन पद्येन कृतम्––

"समृद्धेर्विद्यायाः सततसुखशान्तेश्च सुमतेः
सुकल्याणस्याथ सकलपरिवारादरविधेः ।
समस्तोत्कर्षाणां सुकविवचनानां सुमहतां
विलासानां हेतुर्भवति भुवि नोद्योगसदृश ।।१।।"

कविना अस्मिन् लहरीकाव्ये विभिन्नैः राजनैतिक-वैदिक-पौराणिक-लौकिक-दार्शनिक-आधुनिकोदाहरणैः स्पष्टीकृतं यत् यः मनुजः नियमितरूपेण उद्योगं करोति सः अस्मिन्संसारे श्रीयुक्तः साधनसम्पन्नश्च भवति । येन लिखितम् यत्—

"अये भो उद्योग ! प्रबलमहिमा तेयमतुलो
यदेको निःशस्त्रो धृतमृदुलवस्त्रोऽतिसरलः ।
ससूनुर्वन्दस्य स्वजनकृतमन्दस्य बलिनो
महारेः कंसस्य क्षपणमकरोत्कर्षणमपि ॥३॥"

अस्याः लहर्याः अन्तिमं पद्यं कविना फलश्रुतिरूपेणोपस्थापितम्–

इमामुद्योगलहरीं कविसूर्येण निर्मिताम् ।
यः पठेत् प्रातरुत्थाय दारिद्र्यं तस्य नश्यति ॥५४॥

कविशिरोमणि. भट्टः श्रीमथुरानाथ शास्त्री–तैलंगब्राह्मणः कविकलानिधिः श्रीकृष्णभट्टस्यसप्तमपुत्रत्वेन श्रीसुन्दरलालभट्टस्य पुत्रत्वेन च श्रीमथुरानाथशास्त्री महाभागानां षट्चत्वरिंशधिक एकोनविंशतिशततमे विक्रमाब्दे जयपुरे जनिरभूत् ।

महाभागेनानेन संस्कृत-साहित्यस्य सर्वासु विधासु उल्लेखनीयं सर्जनं कृतम् । अनेन प्रकारेण श्रीमतां रचनानामुल्लेखः कर्तुं शक्यते-साहित्यवैभवम्--जयपुरवैभवम्--गोविन्दवैभवम्--संस्कृतसुबोधिनी--संस्कृत-सुधा--आदर्शरमणी--गीतिवीथी--गाथारत्नसमुच्चय--कादम्बरी--रसगंगाधर-शिलालेख-ललन्तिका--संस्कृतगाथासप्तशती--गीतगोविन्दम्-सुलभसंस्कृतम्-शरणागतिरहस्यमित्यादि । एभिः लहरीकाव्यपरम्परायां 'मनोलहरी' नाम्नींलहरीकाव्यरचनां कृत्वा स्वयोगदानं प्रदत्तम् ।

मनोलहरी--विंशतिपद्यात्मिका रचनेयं जयपुरतः प्रकाशितस्य-संस्कृतरत्नाकरस्य तृतीयवर्षस्य प्रथमसंचिकायां वैशाख मासे १९९१ तमे विक्रमाब्दे प्रकाशिता जाता । कविना लिखितं यत् अहं यत् किञ्चिदपि लिखामि तत् मम मनसः तरंरगाणामेव मूर्तिमत् रूपमस्ति । यथा अस्य काव्यस्य प्रारंभे तेन प्रोक्तम् —

स्वभावादुन्मीलन्ललितपदमङ्गः सुकविना
तरङ्गैराघूर्णन् कवयति कविः किञ्चिदतुलम् ।
तथैवायं माद्दक्कतिपयपदैर्हास्यिसुखदै-
र्यदेतत्कुग्रन्थेदियमपि लहर्येव मनसः ॥१॥

यथा समुद्रे कश्चिद् महापोतः लहरीणां प्रबलाघातैः विषमस्थितिं प्राप्नोति, तथैव मनसः विचारतरंगेषु दोलायमानः मनो जयति । अनेन

प्रकारेण मनसः विभिन्नविचारतरंगाणामवस्थानां वर्णनं प्रकुर्वता कविन अन्तिमपद्ये वाग्ब्रह्मणः स्तवनं विहितम्—

"त्वदाधारादाप्ता किमपि कविता, तत्परिचया-
दवाचां च प्राचां वचनरचना चाऽप्यनुकृता।
अये! भो वाग् ब्रह्मन्निदमनुनये त्वन्तसमये
दयालुर्गोविन्दो धृतदरविन्दो मयि भवेत् ॥२॥"

पं० श्रीहरिशास्त्री दाधीचः-ताजीमी सरदार-राजगुरु-कथाभट्ट पं० हरगोविन्दनामावलस्य कनिष्ठपुत्रस्य वंशजेषु पं० श्रीदामोदरशास्त्री-दाधीचमहाभागानां गृहे वैशाख-कृष्ण पञ्चम्यां तिथौ पञ्चाशदधिक एकोन विंशतिशततमे ख्रिष्टाब्दे पुत्रत्वेन जनिरभूत्। श्रीमतां बाल्यकाले एव कवित्वशक्त्याः प्रादुर्भावः जातः। कविनानेन लहरीकाव्यपरम्परायां वाणीलहरीनाम्नी रचना विहिता।

वाणीलहरी-इति नाम्नी रचना विक्रमाब्दे १९७५ तमे स्वतंत्र-रूपे हिन्द्यानुवादसहिता प्रकाशिता जाता। अस्यां रचनायां पञ्चाशत् पद्यानि वर्तन्ते। एषु पद्येषु शक्त्याः विभिन्नरूपाणां स्तवनं विहितम्। शक्त्याः वाणीरूपायाः उपासकत्वात् कविना अस्याः अभिधान वाणी लहरी इति कृतम्। प्रथमे पद्ये कविना अनुष्टुप्वृत्तेन मंगलाचरणं विहितम्। यथा—

"गुणत्रयमयीं दिव्यां परिव्याप्तचराचराम्।
सच्चिदानन्दरूपां तां ब्राह्मीं ब्रह्मकलां नुमः ॥१॥"

लहर्यामस्यां विभिन्नेषु पद्येषु शक्त्याः स्वरूपस्य तस्याः क्रियाक-लापानाञ्च चित्रणं कृतम्। आद्याशक्तिः कथमनुग्रहं कृत्वा मानवोद्धारं करोतीत्यादि। अस्याऽलंकारिकवर्णनमधोलिखितेन पद्येन स्पष्टं भवति—

"प्रदात्री भव्यानां दुरितपरिहात्री प्रणमतां
निधात्री वीणाया हरिचरितगात्रीसुमधुरसाम्।
वचोऽधिष्ठात्री सा शशिविशदगात्री प्रकुरुतां
विधात्री काव्यानाममृतरसपात्री मम गिराम् ॥"

अन्ते च भगवत्याः सरस्वत्याः विविध-स्वरूपाणां वर्णनं कविना इत्थं कृतम् —

> "मातर्व्याप्त चराचरे ! भगवति ! ब्राह्मि ! त्रिगुण्ये ! जगत्
> सृष्टि-स्थाननिरोधनैक-निपुणे ! लावण्यवारांनिधेः ।
> चिद्रूपे ! वचसामधीश्वरि ! परे विद्ये ! विधातुः सुते !
> भवत्या त्वां स्तुवतो हरेरपि मृदुर्वर्णालिमाकर्णय ।।५०।।"

राजगुरुः श्रीगोपीनाथ. द्राविडः-श्रीद्राविड़महाभागानां जन्म ज्येष्ठ शुक्ला चतुर्दशी संवत् १९५३ तमे विक्रमाब्दे दरभंगाभवने काश्यामभूत् । श्रीमतां जनकः श्रीकृष्णशास्त्री संस्कृतभाषाया उत्कृष्ट विद्वान् आसीत् । श्रीमतां केचन लेखाः संस्कृतरत्नाकर नाम्नि मासिकपत्रे प्रकाशिताः जाताः । एभिः सह काश्चन समस्यापूर्तयः अपि आसन् । श्रीमतां लहरीकाव्य-परम्परायां काशी 'लहरी नाम्नी" रचना महत्त्वपूर्णाऽस्ति ।

काशीलहरीति नाम्नीयं रचना संस्कृतरत्नाकरस्य द्वादशवर्षस्य (एकादश) (द्वादश) सचिकाद्वये प्रकाशिता जाता । रचनेयं चतुस्त्रिंशत्पद्यात्मिका वर्तते । अनेन पद्येन अस्याः प्रारंभो विहितः—

> "गाङ्गे स्रोतसि दर्पणद्युतिमुपि स्वं वीक्षमाणा मुखं
> बालादित्यमरीचिकाञ्चनशलाकाग्रेण या कौङ्कुमम् ।
> प्रातः सद्गृहिणीव मञ्जुतिलकं भाले विधत्तेऽन्वहं
> श्रीविश्वेश्वरराजधान्यतितरां वाराणसी राजते ।।१।।"

श्रीद्रविड़महाभागेन वाराणसी मुक्तिक्षेत्र-अन्नक्षेत्र-विद्याक्षेत्ररूपेण चित्रिता । काश्याः प्रसिद्धस्थानानां वर्णनं प्रकुर्वता तेन विश्वविद्यालय-वर्णनप्रसगे लिखितं यत् तत्र स्थिताः प्राध्यापकाः स्वबुद्धिबलेन बृहस्पतेः बुद्धिमपि कुण्ठितां कुर्वन्ति ।

अनेन प्रकारेण काशीनगर्याः सुन्दरवर्णनं कृत्वा अन्तिमे पद्ये कविः कार्त्तिकमासे दीपमालिकायाः अवसरे काशीशोभायाः सजीवं चित्रणं करोति—

> "प्राग् भानोरुदयाद्दिवोऽवतरतः श्रीपञ्चगङ्गाम्भसि
> स्नातुं स्वयुवतीजनाय महते सन्दर्शयित्र्यो पथः ।

प्रत्यट्टालिक घट्टजान्हुजतटं ताराशुचिः कार्तिके
जागर्त्यम्बर चुम्बिनी भृशमुपस्याकाश-दीपावलिः ॥

बनारसस्य सुप्रसिद्ध-हिन्दूविश्वविद्यालय· संकटमोचनहनुमान्-मणिकर्णिकाघाट-इत्यादिस्थानानां वर्णनाभावे अस्याः रचनाया अपूर्णता सिद्धयति ।

**श्रीविद्याधर शास्त्री**—राजस्थानप्रान्तस्य सुप्रसिद्ध-भाष्यकाराणां पं. हरनामदत्तमहाभागानां पौत्रत्वेन पं. देवीप्रसादशास्त्रिमहाभागानां पुत्रत्वेन श्रीविद्याधरशास्त्रिमहाभागानां अष्टपञ्चाशदधिक एकोनविंशति शततमे विक्रमाब्दे जनिरभूत् । श्रीमतां सुरभारतीसेवा उल्लेखनीया वर्तते । श्रीमद्भिः पञ्चदशाधिकानि काव्य-नाटक-चम्पू-स्तोत्रादीनि रचितानि । इमे सर्वे ग्रन्थाः विद्याधर ग्रंथावली इतिनाम्ना साहित्य अकादमी उदयपुरतः प्रकाशिता जाता । लहरीकाव्यपरम्परायां तेषां लीलालहरी-वैचित्र्य-आनन्द-मत्तलहरीति चत्वारि काव्यानि उल्लेखनीयानि ।

श्रीहरनाम संस्कृत-परिषद्चरु नाम्न्याः संस्थायाः प्रकाशकत्वे १९५३ तमे ईसवीयेवर्षे लीलालहरी काव्यस्य प्रकाशनमभूत् । आत्मनिवेदनात्मके लहरीकाव्येऽस्मिन् दशाधिकशत-संख्यकानि पद्यानि सन्ति । अस्मिन्काव्ये स्वात्मकथनं कविना त्रयोविंशतिभागेषु विभक्तम् । कवेः कथनानुसारेण अस्मिन्काव्ये परमात्मतत्त्वं प्रति स्वाभाविकमाकर्षणमेवञ्च तेन सह उत्पन्नस्याकस्मिकमनोयोगाभासस्य तरंगाणामेव सर्वसाधारणं चित्रण कृतम् । अस्य प्रारंभ. स्तुतिसौख्यान्तर्गतम् अधोलिखितेन पद्येन कृतम्—

"अनन्तेयं लीला ललितलहरी यस्य विलता
स कः सर्ववेन्द्यस्त्वमसि विदितश्चाप्यविदितः ।
अजानन्तं तन्मां त्वदभिमुखमेवोन्नयति यत्
अलक्ष्यं तल्लक्ष्यं किमपि तव नित्यं विजयसे ॥"

आत्मनिवेदनं वर्णयता मानवमनोभावानां सुन्दरं चित्रणं कृतम् । अस्य ग्रंथस्यान्तिमं पद्यं शुभाशीर्वादात्मकं वर्तते—
"इमां भगवतीं श्रुत्वा स्तुतिं मे सर्वसौख्यदाम् ।
सद्बुद्धिञ्च नवोत्साहं सर्वैः सर्वत्र विन्दतु ॥" इति

मनीषिणा विद्याधरशास्त्रिणा विरचितेयं वैचित्र्यलहरी चतुः पञ्चाशतपद्यात्मिका रम्या रचना वर्तते। विद्याधर-ग्रन्थावलीं नामके ग्रन्थे अस्याः प्रकाशनं जातम्। शार्दूलविक्रीडित-छन्दसि विरचितायां अस्यां रचनायां दार्शनिक-सिद्धान्तानां शाश्वतमूल्यानाञ्च सन्दर्भे वर्तमान-विचाराः प्रस्तुताः। प्रथमे पद्ये आशीर्वादात्मकं स्तवनं विहितम्—

यस्मान्नास्ति परं विबोद्धुमपरं यत्र स्थितिः शाश्वती
यत्राशा लभतेऽन्तिमाश्रयपदं नैराश्यनक्षैधृता।
यं ध्यात्वा भवसागरभ्रमरतः प्राणी पुनः सन्तरेत्
पायान्नः परमः पिता स सततं कल्याणमूर्तिः परः ॥१॥"

अध्ययेन परिज्ञायते यत् प्रारम्भे अस्याः लहर्याः नाम विचार-लहरी आसीत्, परन्तु रचना-समाप्ति-समये अरुचिकरत्वात् अस्या. अभिधानं वैचित्र्यलहरीति कृतम्। काव्येऽस्मिन् अस्य युगस्य समस्यानां समाधानं कुर्वता कविवर्येण अन्तिमे पद्ये कथितं यत्-*सर्वे मानवाः प्राणिनां प्रसन्नताया* स्वप्रसन्नतां दुःखे च दुःखंस्यानुभवं कुर्युः। यथा—

"अन्येषां कुशलेन यस्य कुशलं दुःखेन दुःखं तथा
धन्यः कोऽपि सः सज्जनः शुचिमतिः प्रीतः परः प्रीतिभिः।
सर्वेष्वेव मतिर्यतश्चममला जागर्ति तच्चिन्त्यताम्
को लाभो परचिन्तनेन न यतश्चिन्ता प्रणश्येन्नृणाम् ॥" इति

रचनेयं मत्तलहरी विद्याधर-शास्त्रि-महाभागानामुत्तमा कृतिर्वर्तते। लहरीकाव्यपरम्परायां पञ्चाशत्पद्यात्मिका इयं लहरी उपजातिवृत्तैः निबद्धा वर्तते। अस्मिन्काव्ये एकः प्रमतः आपानशालायां मित्राणामाह्वानं करोति, कथयति च—

*"आयाहि बन्धो! परिहाय खेदम्, सद्यः समुल्लासयितुं मनस्ते।*
संस्थापितः कोऽपि भयाद् द्वितीयः, सुरालयोऽयं नवशक्तिकेन्द्रः ॥"

अस्मिन्काव्ये मत्तस्य मनःस्थित्याः सुन्दरं वर्णनं विहितम्। तस्य वर्णनं प्रकुर्वाणः कविः कथयति यत् तस्यानुसारेण इमे सर्वेऽपि विकाराः बुद्धया एव उत्पद्यन्ते। मत्तोऽयं मनुष्यः विषमतापूर्णे जगति समस्त-चिन्ता-दुःखान् विस्मृत्य प्रसन्नो भवेत् इति संदिशति।

श्रीमेधाव्रताचार्यः—स्वनवनवोन्मेषशालिन्या प्रतिभायाः काव्यक्षेत्रे-अद्वितीयं योगदानं कर्तृषु आर्यसमाज–विद्वत्सु आचार्य–मेधाव्रतस्य नाम अन्यतमम्। महाराष्ट्रप्रान्तान्तर्गतनासिक जनपदान्तर्गते येवला ग्रामे श्रीजगजीवनस्य गृहे १८९३ तमे ईसवीये वर्षे जनवरीमासे सप्तम्यां तारिकायां कविवर-मेधाव्रतस्य जन्म अभूत्।

अनेन बाल्यकालादेव कवित्वशक्तिमवाप्य काव्यरचनायाः प्रारंभः कृतः। श्रीमद्भिः लहरीकाव्यपरम्परायां दयानन्द–दिव्यानन्दलहरीति काव्य-द्वयं निर्माय योगदानं दत्तम्।

द्विपञ्चाशद् पद्यात्मिका दयानन्द लहरीय स्वामिदयानन्दस्य प्रथम-जन्मशताब्द्यवसरे १९२५ तमे वर्षे प्रकाशिता अभवत्। शिखरिणी स्रग्धरा पृथ्वी-शार्दूलविक्रीडितमित्यादि छन्दसु गुम्फिता कृतिरियं साधारणमनुजाना हृदये अतीवं अत्यद्भुतानन्दं संचारयति। लहरीकाव्येऽस्मिन् महर्षि-दयानन्दस्य चरित्रस्य विविधैरलंकारैः वर्णनं कृतम्। ग्रंथस्य प्रारम्भे स्वामि दयानन्दस्य स्तवनं कुर्वता तेन लिखितं यत्—

"अखण्डादानन्दान्निगमहिमशैलेन्द्रशिखराद्
प्रभूता भूतानां अनिलयकृतः शंकरगुरोः।
दयानन्दस्येयं सकलभुवनायामृतपदम्,
दिशन्ती गीर्गंगा जनितशिवसगा विजयते ॥१॥"

कविवरेण महर्षिदयानन्दस्य विधवाविवाह-गोरक्षा-अनाथालय-स्थापना आचारशिक्षणमित्यादि सामाजिक-कार्याणां वर्णनं कृतम्। दयानन्दस्य महिम्नो बहुविधं वर्णनं कुर्वता कविना पापरूपतिमिरस्य विनाशाय दयानन्दरूपसूर्यस्य उदयं प्रतिदिनं कामयमानेन तेन लिखितम् यत्—

'आदित्यब्रह्मचर्याभिधविमलमहः पुंजतो ध्यानवृन्दम्
भिन्दानो वाममार्गाचरणनिशि चरानन्द-रात्रिंनिहन्ता।
पुण्यात्माम्भोजकान्तो निगमसमतवमोद्भासने चेतनाशुः
संसारोद्बोधनोऽयं विलसतु हृदये श्रीदयानन्द–भानुः ॥५२॥"

स्तोत्रकाव्ये दिव्यानन्दलहर्याः अभूतपूर्वं स्थानं विद्यते। अस्यां ईश्वरमहिमा, तस्य विराट्स्वरूपम्, अध्यात्मभावः सांसारिक-विषयाणां

नि.स्सारता इत्यादिविषयाणां सुन्दरं वर्णनं विहितम् । ईश्वरस्य महिम्नो वर्णनं प्रकुर्वता तेन प्रथमे पद्ये लिखितम्—

"अनन्तो नामानं ततविमलधामानमतुलं
प्रजानां कर्तारं भुवनचय-भर्त्तारममरम् ।
नमन्ते हन्तारं सुमतिविस्तारं श्रुतिधरं
कविं दिव्यानन्दं सकलसुखकन्दं भज मनः ।।१।।"

कविना सांसारिकविषयभोगानां निस्सारतायाः जीवात्मनश्च स्वरूपस्य प्रतिपादन कृत्वा अन्तिमे पद्ये लहरीकाव्यस्य निर्माणोद्देश्यं प्रकटयता प्रोक्तं यत्—

"अबोधानां सत्येश्वरविषय-बोधोत्सवकरी
कवीन्द्राणां काव्यामृत-रसविदां तोषणकरी ।
मुनीनामन्येषामपि समदृशां मानसहरी
कृता दिव्यानन्दोमलजलभरी लोकलहरी ।।५२।।"

डॉ० रसिकविहारी जोशी—पं० श्रीरामप्रतापशास्त्रिमहाभागानां ज्येष्ठ-पुत्रत्वेन नागपुरनगरे सप्तविंशत्यधिक एकोनविंशति शततमे ख्रिष्टाब्दे सितम्बरमासस्य द्वादशतारिकायां श्रीमतां जन्म अभवत् । श्रीमतां रचनात्मककार्यस्य विवरणमधोलिखितप्रकारेण प्रस्तोतुं शक्यते" लरितुअल दा लॉ दे ऊसिम्रो कृष्णाइट (फ्रेंचभाषायां) रासपंचाध्यायी-सांस्कृतिकमध्ययनम्, स्टडीज इन इण्डियन लोजिक एण्ड मेटाफिजिक्स, श्रीकृष्णकर्णामृतम्, करुणाकटाक्षलहरी (लहरीकाव्यम्) मोहभगम् (महाकाव्यम्), सारस्वतमित्यादयः ग्रन्थाः एवञ्च त्रिंशदधिकं प्रकाशिता शोधलेखाः वर्तन्ते ।

लहरी—काव्यपरम्परायां करुणाकटाक्षलहरीयं ११३ पद्यात्मिका भगवत्याः राधिकायाः स्तुतिरूपे रचिता वर्तते । अस्य काव्यस्य रचनायाः प्रेरणास्रोतः तेषां पितृचरणाः आसन् । यथा प्रथमे पद्ये निवेदितम्—

"रामप्रतापचरणाब्जरसं निपीय, काव्यं सुखेन रचितं ननु मोहभंगम् ।
येन व्यथा व्यपगता मम मोहभंगे, जातः कटाक्षलहरी च विवेश चेतः ।।१।।

भगवतीं शरणागतवत्सलां राधिकां स्वरक्षार्थमनन्यगतिकां मन्यमानेन कविना विभिन्नेषु सप्तचत्वारिंशत् पद्येषु तस्याःक रुणाकटाक्षपूर्णनेत्रयोः

विभिन्नाभिः उपमाभिः सह चित्रणं कृतम्। राधिकायाः करुणा-कटाक्षस्य प्रभावस्य दर्शनीयं वर्णनं कुर्वता एकस्मिन्पद्ये लिखितम्—

'लग्नादष्टम एव तिष्ठतु गुरुः सूर्यः शनिर्वा कुजो,
ब्रह्मा वा लिखिताल्ललाटफलके कृच्छ्रामवस्थां दृढम्।
ते राधाकरुणाकटाक्षलहरीस्नाते जना दुर्बला-
मानोहस्तगतं नवाम्बुजदलं किं बाधते शीकरः ॥५८॥"

अस्याः रचनायाः समापनं अनेनपद्येन भवति —

"विलसति" हृदयं मे तात रामप्रतापः
सुरतरुरिव वांछापूरको रामप्रतापः।
सरस-मधुर-काव्यं भक्तिभावेनपूर्णं
यदिह भवति सद्यो मादृशेनापि पूर्णम् ॥११३॥

कविना रचनेयं शार्दूलविक्रीडितं छन्दसि कृता। यत्र तत्र वसन्ततिलका, मालिनी, शिखरिणी-छन्दसां प्रयोगोऽपि विहितः।